3-3

श्रीः

उभयवेदान्तग्रन्थमाला

श्रीकवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-

श्रीमद्वेंकटनाथ-वेदान्तदेशिक-

विरचितः

# हंससंदेशः

अभिनवदेशिक-वात्स्यश्रीशैलचक्रवर्ति-

वीरराघवाचार्यविरचितसंजीवनाख्य-

सांस्कृतद्रामिडव्याख्यानसमेतः

# HAMSA SANDESA

*One of*

## Sri VEDANTA DESIKA'S Kavyas

*with commentary "SANJEEVANA"*

IN SANSKRIT & TAMIL

*by*

**Sri Abhinava Desika**

**Uttamur T. VIRARAGHAVACHARYA**

Price]

1973

श्रीः

उभयवेदान्तग्रन्थमाला

श्रीकवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-

श्रीमद्वेंकटनाथ-वेदान्तदेशिक-

विरचितः

# हंससंदेशः

अभिनवदेशिक-वात्स्यश्रीशैलसचक्रवर्ति-

वीरराघवाचार्यविरचितसंजीवनाख्य-

सांस्कृतद्राविडव्याख्यानसमेतः

# HAMSA SANDESA

***One of***

## Sri VEDANTA DESIKA'S Kavyas

***with commentary "SANJEEVANA"***

IN SANSKRIT & TAMIL

***by***

**Sri Abhinava Desika**

**Uttamur T. VIRARAGHAVACHARYA**

Price]

1973

*Dedicated to the revered memory of*

Sri U. Ve. Madabhushi **SESHADRI IYENGAR**

*Father of*

**Sri Madabhushi Seshadri Pattabhiraman**

by whom and whose sons

Sri Ramesh Pattabhiraman & Sri Vasantakumar Pattabhiraman

a sum of Rs. 3000/- (Rupees Three thousand) was donated

for the printing of this work HAMSA SANDESA

ஸ்ரீ:

# நன்கொடைக்கு நன்றி



ஸ்ரீ தேசிகன் அருளிச் செய்த இந்த ஹம்ஸஸந்தேசகாவ்யரத்தினத்தை ஸம்ஸ்க்ருதம் தமிழ் உரைகளுடன் சேர்த்து அச்சிடுவதற்குப் பொருளுதவி யாருடைய ஜ்ஞாபகார்த்தமாகச் செய்யப்பெற்றதோ, அவ் வள்ளல் விஷயமாகச் சுருக்கமாக வரைகின்றோம். ஸ்ரீ உ. வே. மாடபூசி அனந்தாசார்யரின் குமாரர்களான M. D Brothers என்று ப்ரஸித்தமானவர்களில் ஒருவரான **ஸ்ரீ உ. வே. மாடபூஷி சேஷாத்ரி ஐயங்கார்** என்னுமிவர் மலையாள மரவியாபாரத்திலே போலே தங்களுக்கு இயற்கையான தர்மகார்யங்களுக்குப் பொருளுதவி புரிவதென்ற நற்செயலிலும் நன்கு ஈடுபட்டவராவர். ஆனாலும் டாம்பிகமாக ஒன்றிலும் தலைகாட்டாமல் அமைதியாக நடத்துகின்றவர். காஞ்சீ — பெருமாள்கோவில் தேவப்பெருமாள் ஸன்னிதியில் த்வஜஸ்த்தம்ப ப்ரதிஷ்டை செய்யவேணும், அதற்குத் தக்க மரம் வேண்டியதாகுமென்று 1941ல் அந்தக் கோயில் அதிகாரிகள் ப்ரஸ்தாவம் செய்யும்போது, இவர் கள்ளிக்கோட்டை மரவியாபாரம் நடத்துகிறவராதலால், 'அவர்களுக்கு நீங்கள் இதற்காக ஒரு முயற்சியும் செய்யவேண்டா. மரம் தருவதோடு அதன் ஸ்தாபனத்திற்கான முழுச்செலவும் தேவப்பெருமாள் என்னை வியாஜமாக்கிச் செய்துகொள்வார்' என்று கூறி, உடனே சிறந்த மரம் வருவித்து த்வஜஸ்த்தம்ப ப்ரதிஷ்டையை, பாராயண ததீயாராதனாதி வைபவங்களோடு 10 நாள் நீடித்துச் செவ்வனே நடத்தியதும் இதில் முக்கியமாகும். இக்காலத்தில் மதிப்பிட்டால் ரூ. ஐம்பதாயிரமென்னலாம். ப்ரஹ்மோத்ஸவத்தில் நாய்ச்சியார்திருக்கோல உத்ஸவம் ப்ரதிவருஷம் தேவப்பெருமாளுக்கு நடந்துவருகிறதும், ப்ரதிவருஷம் தூப்புல் ஸ்ரீ தேசிகன் ஆனிமாஸ ச்ரவண உத்ஸவ உபயமும் இவருடையதே. மைலாப்பூர் ஸ்ரீ தேசிகன் ஸன்னிதியிலும் நிரந்தரமான கைங்கர்யம் இவருடையது நடந்துவருகிறது. மற்றும் பல.

இந்த எம். டி. ப்ரதர்ஸ் என்பவர்கள் இத்துடன் பெருமாள்கோவிலில் பரமஹம்ஸ பரிவ்ராஜக, கேதாண்டபட்டி ஸ்வாமி ஆச்ரமமும் அதைச் சார்ந்த இடமுமெல்லாம் தங்கள் பாதுகாப்பின்கீழ் வைத்துச் சீருடன் அமைப்பதிலும் உத்ஸாஹத்துடன் இருந்து தம் ஆசார்ய பரம்பரை அபிவிருத்தியில் பக்தியும் ச்ரத்தையும் உடையவர்களாவர் என்பதும் முக்கியமாய் பாராட்டத்தக்கதாகும். அதற்கிணங்க இந்த க்ரந்தத்திற்கும் பொருளுதவி செய்யப்பட்டிருக்கிறது. இந்த வள்ளல் 1970ஷு மார்ச்சு (மாசி) வரையில் 83 ஸம்வத்ஸரம் இவ்வுலகில் தர்மங்களை பகவத்கைங்கர்யமாகச் செய்து வந்ததினாலே மகிழ்ச்சியுற்று அவருடைய குமாரரான, நமது **ஸ்ரீமான் மாடபூஷி பட்டாபிராமன்** "பிது: சதகுணம் புத்ர:" என்றபடி தகப்பனாருக்கு மேலாக தர்மகார்யத்தில் ஈடுபட்டு மஹான்கள் எல்லோரும் அபிமானிக்கும்படி விளங்குகின்றார். தம் தகப்பனாரின் ஞாபகார்த்தமாக இதற்குத் தாமே உதவி புரிய முன்வந்தார். தாமும் தம் சிரஞ்ஜீவி குமாரர்களுமாகச் செய்துவரும் இத்தகைய தர்மங்கள் மேன்மேலும் அபிவிருத்தி பெறும்படி ஆயுராரோக்ய ஐச்வர்ய ஸந்தான ஸம்ருத்தியை இவர்களின் குல தெய்வமான திருவேங்கடமுடையான் இவர்களுக்கு அருள்கின்றவனாகுக. பொருளுதவி விபரம் வேறு பக்கத்தில்.

**26-1-'73** **ஸம்பாதகர்**

श्रीः

# भूमिका

श्रीकवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेङ्कटनाथवेदान्तदेशिकानुगृहीतासु कृतिषु काव्यश्रेण्यामन्तर्गतमिदमपि हंससंदेशाख्यं काव्यरत्नम् ।"...... यावत् प्रवृत्तिं शृणुयां प्रियस्य" इति श्रीरामप्रवृत्तिश्रवणेन जीवितं धारयितुमभिलषति देवीति हनुमन्मुखात् विज्ञाते सति, सद्यः समुचितदूतप्रेषणं युक्तमित्याकलय्य हंसं प्रेषयामासेव। महाकविकालिदासकृते मेघसंदेश इवाऽऽश्वासद्वयात्मकेऽस्मिन् प्रथम आश्वासो मार्गप्रदर्शनार्थः, द्वितीयः प्रियार्थे वक्तव्यसंदेशाख्यापकः। तत्र चित्रकूटात् कैलासं प्रति मेघप्रेरणं वर्षर्तौ प्राक्; इह ऋश्यमूकात् लंकां प्रति हंसप्रेरणं शरदि। तत्रतत्र श्रीमद्रामायणार्थस्मरणं तत्र कवेः; अत्र साक्षात् तदर्थानुभव एव। संदेशद्वयसारास्वादिनीकार-श्री. ए. वी. गोपालाचार्यमहाशय इवोभयग्रहणेन विमर्शप्रवृत्ताः कामं सन्तु। प्रथमतः अस्य नवनवोल्लेखिनिष्प्रतिमप्रतिभस्य सर्वालङ्कारभूषितसरसकाव्यरचनालंकर्मीणस्य कवितल्लजस्य संदेशग्रन्थोऽयं सरसः पृथक् यथावत् अधिगन्तव्य इति बहुभिर्व्याख्यात इति ज्ञायते। तत्र मे श्रीपरकालस्वामिभिर्विरचितं व्याख्यानमेव लभ्यमासीत्। तत्र व्याख्याने तत्रतत्र निराकृतं यत् प्राचीनं व्याख्यानम्, यच्च सुप्रसिद्धतर्कतीर्थ-अस्मत्कैशास्त्रप्राचार्य-श्रीकस्तूरीरङ्गाचार्यविनिर्मितटिप्पणदूषितं अन्यत् व्याख्यानम्, तदुभयमत्र न लभ्यमासीत्। एतदनुरोधेनैव व्याख्याने प्रवृत्तेन मया श्लोकवास्तवार्थविशदज्ञानाय यावत् संगृह्य वक्तव्यम्, तावदनुपेक्ष्य लिखता तत्रतत्र यद् विशेषेणोक्तमस्ति, श्रीमद्रामायणस्येवास्य काव्यस्याप्याध्यात्मिकार्थव्यञ्जकत्वमस्तीति मनसिकृत्य दिक्प्रदर्शनमात्रबुद्ध्या तत्रतत्र पृथक् च बहुश्लोकार्थसमाहारेण च यदुत्प्रेक्षितमस्ति, तत् सर्वं परानुक्तं सहृदयाः संभाव्य परिष्करिष्यन्तीति श्रीमदाचार्यश्रीसीतारामचरणारविन्दप्रवणः प्रत्येमि।

संप्रति विचारे क्रियमाणे हंससंदेशस्यास्य तत्त्वमुक्ताकलापसर्वार्थसिद्धिव्याख्यादिकर्तृश्रीवाधूलश्रीनिवासार्यकृता एका व्याख्या, श्रीपरकालस्वामिव्याख्या, मेलैपाळयं नडादूर् श्रीरंगाचार्यव्याख्या, श्रीकस्तूरीरंगाचार्यकृतो व्याख्याविमर्शः, श्वेतारण्यनारायणशास्त्रिव्याख्या, ए. वि. गोपालाचार्यव्याख्या इति संस्कृतव्याख्याः बह्व्य इति ज्ञायते; द्रमिडभाषायां संग्रहेणानुवादाश्च अनेके इति च। नूनं सरलस्यापि काव्यस्य बाह्यान्तरार्थविवेचनव्यग्रेषु सहृदयेषु परश्शतान्यपि व्याख्यानानि भवितुमर्हन्ति। पूर्वैः सर्वैर्व्याख्यातृभिरेकविधार्थवर्णनेनोपरतम्।

अतोऽस्माभिः सर्वश्रीदेशिकश्रीसूक्तिमुद्रणप्रकाशनकृतोद्यमतया काव्यान्तराणीव अयमपि हंससंदेशः एवं संस्कृतव्याख्ययैव द्रमिडभाषामयव्याख्ययाऽपि सह संमुद्र्य प्रकाश्यते॥ अत्र आध्यात्मिकार्थविशेषाः प्रथमाश्वासे प्रायः प्रतिश्लोकमुल्लिखिताः। विशकलितवचनात् विशिष्टरूपेणोपपादनमुचिततरमिति बहूनां श्लोकानां भावार्थाः संकलय्य द्वितीयाश्वासे (पु. 90—97, 119—125) पुटेषु प्रकाशितास्सन्ति॥ यथायथमन्यत्रान्येऽप्यर्थाः।

सर्वमिदं सदाचार्यानुगृहीतास्मदुपज्ञम्॥

संपादकः उत्तमूर्-ति. वीरराघवाचार्यः

# प्रतिपदश्लोकविषयसूची

द्वितीय आश्वासः

—०—०—

# सव्याख्यहंससंदेशशोधनिका

शोधनिकामुद्रणं हि प्रथमत एतद्रीत्या तत्तत्र शोधनं विधाय वाचयेयुरिति मनसिकृत्य। तथाकरणं प्रार्थ्यते। शोधितस्थलव्यतिरिक्तस्थलेऽपि स्वयं शोधयित्वा सहृदयाः वाचयितुमर्हन्ति। मुख्यशोधनं स्थूलाक्षरैः कृतमिह। शोधक-अक्षरसंयोजकादीनां नूतनत्वादधिका अशुद्धयोऽत्र आपतिताः। अथापि न विषयविज्ञानभंगो विदुषाम्।

| | | | | | |
|---|---|---|---|---|---|
| 6-2 | स्वधृतदुकूल | 36-22 | महौघैः | 53-29 | पीठे |
| 7-14 | किमुता | 37-1 | हेतुभिः, एतत्तुल्य | 57-14 | स्थित्वा |
| 7-17 | वाग्मिना | | तया सप्तत्वेनरूपेण- | 58-21 | अथ अव |
| 8-16 | क्षमकत्वात् | | नदीपक्षे ओघैः= | 62-8 | द्वितीया |
| 9-17 | स्रष्टुं | 39-12 | श्रीपश | 63-5 | वर्धितत्वादेव |
| 11-29 | तद्राजश्च | 41-26 | स इति....हनूमतः | 66-20 | वासितत्वमाह |
| 12-3 | आकाशादिकं | 42-27 | तमाल | 69-27 | स्थलम् |
| 12-6 | संप्रत्यायाता | 44-24 | द्विरदाद्रीशः | 73-14 | संविधास्यन्त्य |
| 18-19 | अर्थसिद्धात्वात्तु | 45-3 | परमैकान्ति | 75-27 | सीत्यनुगृ...दद्यम् |
| 21-11 | प्रस्रवण | 7 | मधुबिन्दुः | 78-18 | भ्रुवौ |
| 22-7 | सर्वे पुष्टाः | 22 | प्रत्युद्गच्छन्म | 78-21 | सादृश्यमेवेति |
| 23-20 | क्षपणे | 46-16 | एवं | 79-24 | मपारयन्ती |
| 24-4 | योगादिकं | 46-23 | रजन्याः | 83-14 | स्थितिरिय |
| 24-27 | विदुः | 47-8 | सरसिजदृक्त्वमदकलगी | 84-8 | सीताम्बया |
| 25-25 | वर्धमानानां | 48-8 | उदीच्यां | 84-12 | श्वश्र्वा |
| 26-10 | पालक | 48-10 | वैतन्नाम | 88-15 | दुग्धो |
| 27-19 | पर्याप्त | 13 | विज्ञाय | 89-29 | पर्यन्तो |
| 30-16 | सपर्यया | 48-15 | षड्गुणा | 107-18 | त्रासात् भयात् |
| 31-25 | चौर्यं | 49-11 | श्रीविशिष्ट | 108-18 | स्थितोऽहंभीतेन |
| 32-6 | भागवतपरिचर्या | 22 | स्वासाधारण | 110-22 | रक्षसा |
| 26 | यौवनमञ्जु | 25 | तैलेना | 112-20 | स्वाप्येथाः |
| 33-17 | न्यरुन्धेति | 50-14 | संविचीयाः | 112-26 | नानावर्णे आश्चर्यमये |
| 33-20 | नारायणः | 52-15 | उद्भ्रम्य | 120-13 | उपबृंहण |
| 35-11-12 | तद्वास्थविष्ठ | 53-10 | गन्धं | 128-3 | निकषोपले |
| 35-20 | विश्वकर्मनिष्ठां | 53-19 | गतरसम् | | |

श्रीः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेदान्तदेशिकविरचितः

# ॥ हंससंदेशः ॥

—:*—*:—

## प्रथमाश्वासः

वंशे जातः सवितुरनघे भावयन् मानुषत्वं
  देवः श्रीमान् जनकतनयान्वेषणे जागरूकः ।
प्रत्यायाते पवनतनये निश्चितार्थः स कामी
  कल्पाकारां कथमपि निशामाविभातं विषेहे ॥ १ ॥

श्रीः

अभिनवदेशिकवात्स्यवीरराघवाचार्यविरचितं

## ॥ संजीवनाख्यं व्याख्यानम् ॥

श्रीमते निगमान्तगुरवे नमः

1 परहंसवचःप्रीतिलम्भिताशेषसंपदौ । जानकीराघवौ वन्दे जम्पती जगतां पती ॥

2 श्रीरामजानकीरागभूमदर्पणमद्भुतम् । कवितार्किकसिंहीयं काव्यमास्वाद्यते मनाक् ॥

3 पूर्णरामायणख्याप्यं दिव्यदम्पतिवैभवम् । यत्रानुभाव्यं तस्याद्य संगृह्यार्थः प्रदर्श्यते ॥

4 आ शिष्टाग्रेसरात् आ च प्राकृतादाद्रियेत यत् । तदन्यवस्तुग्रहणे काव्यालापस्तु वर्ज्यते ॥

5 अतस्तादृशवस्त्वेव गृह्णन् काव्यमुखेन नः । तत्त्वधर्मपुमर्थांश्च श्रेष्ठान् दर्शयते गुरुः ॥

6 अनेकव्याक्रियासत्त्वेप्युक्तानुक्तार्थसंग्रहम् । कर्तुं पृथग्व्याप्रियते वात्स्यः श्रीवीरराघवः ॥

श्रीमता रामेण विरहिणा विरहिण्यै सीतायै हंसमुखेन प्रेषिता आश्वासवार्ता हंससंदेशः । अत एव सर्गयोराश्वास इति नाम । येन यस्मै यस्मिन्नवसरे प्रेषितत्वेन संदेशः कथयितुमिष्टः, तन्निर्देशमेव मङ्गलमभिसंधाय काव्यमारभते वंश इति । **श्रीमान्** । श्रीशब्दार्थविस्तरः संप्रदायग्रन्थेषु द्रष्टव्यः । तत्संग्रहस्तु अस्मदीयः, 'श्रीस्त्वं श्रिता शरणमीप्सुभिरार्तरावं श्रुत्वा श्रिता सपदि शार्ङ्गिभुजान्तरालम् । तं श्रावयस्यथ शृणासि समस्तमेनः श्रीणासि नः सकलशेषविधाविलासैः ॥'' इति । "नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी'' इत्युक्तरीत्या लक्ष्मीनित्ययुक्तः तद्वल्लभः तदधीनवैभवश्च, देवः जगद्व्यापाररूपलीलापरो देवदेवः, मानुषत्वं भावयन्–"नाकीर्तयदवज्ञानात् तद्रक्षो मानुषांस्तदा...वधाय देवशत्रूणां नृणां लोके मनः कुरु....मानुषीं तनुमास्थाय रावणं जहि संयुगे'' इति सर्वदेवप्रार्थनां श्रुत्वा, 'मानुषे चिन्तयामास जन्मभूमिमथात्मनः' इत्युक्तरीत्या मानुषरूपेणावतारमिच्छन्, वानररूपेणावतीर्यापि तद्वधसंभवेऽपि,

'वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमाम्' इति मत्या सर्वधर्मस्थापनार्हतया मानुषत्वमेव श्रेय इति निश्चिन्वन्; अनघे 'इमं विवस्वते योगं प्रोक्तवान् अहमव्ययम्। विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्' इति निवृत्तिधर्मनिष्ठतया प्रवृत्तिनिवृत्त्युभयविधधर्मप्रवर्तकतया चतुर्मुखविश्राणितश्रीरंगनाथमूर्तिकतया च दोषावकाशदूरे, सवितुः-त्रयीतनोः सूर्यस्य वंशे, जातः 'पितरं रोचयामास तदा दशरथं नृपम्', 'कौसल्यानन्दवर्धनः' इत्युक्तरीत्या अवतीर्णः। जनकतनयान्वेषणे जागरूक इति। अत्रापि मानुषत्वं मानयन् इत्येतदन्वेति। नित्यश्रीकोऽपि श्रीरूपसीतावियोगाभिनयम्, 'आत्मानं मानुषं मन्ये' इति मनुष्यभावनया कुर्वन् तस्याः जानक्याः लंकायां स्थितिमजानन्निव, सा कुत्रास्ते इत्यन्वेषणे महदवधानं कुर्वन् लम्भितोपकारसुग्रीवप्रेषितेषु सर्वेषु वानरेषु तदलाभेन तत्तद्दिक्तो निवृत्तेषु पवनतनयागमं प्रतीक्षमाणः स्थितः, तस्मिन् पवनतनये हनूमति सीतां दृष्ट्वा सर्वं विज्ञाय सर्वपरिवारसहिते प्रत्यायाते—इतरप्रत्यनीकतया प्रतिक्रियापरतया पवनवेगेन प्रतिमुखं प्रतिनिवृत्ते। अनिष्पादितकार्या हि आगन्तारोऽपि प्रतिमुखमनागम्य पश्चादागत्य तिष्ठेयुः। तदागमनरीतिदर्शनेन सीतायोगक्षेमविषये निश्चितार्थः तन्मुखेन सर्वं विशदं बुद्ध्वा तत्प्राप्तये युद्धाय सद्य एव प्रस्थातव्यमिति निश्चितार्थः सागरसंतरणोपायचिन्तायां प्रवृत्तायां सेतुबन्धे सुग्रीवेणोपक्षिप्ते, "तपसा सेतुबन्धेन सागरोच्छोषणेन वा। सर्वथा सुसमर्थोऽसि सागरस्यास्य लंघने॥" इति निश्चितार्थश्च विवाहार्थवधूनिर्णयेन निश्चितार्थरूपे शुभकर्मणि निर्वर्तिते ब्रह्मचारिणो यावान् प्रमोदः तावता भासमानः। स इति। वेदप्रसिद्धः रामनामा 'सदेवगन्धर्वमनुष्यपन्नगं जगत् सशैलं परिवर्तयाम्यहम्' इति पूर्वं क्रोधस्य परां काष्ठां प्राप्तः तदा लक्ष्मणकृतसमाश्वासानुरोधी, वर्षाकाले अन्वेषणश्रमो न वोढव्य इति धीरः स्थितः एतावन्ति अहानि सोढसीतावियोगश्च सन्नपि इदानीं कामी। अतिशायने मतुप्। हनुमदागमनप्राक्कालिकदशापेक्षया अतिशयितं कामं प्राप्तः। अन्तत इह स इति पदं प्रयुक्तम् एवंप्रकारेण श्रीमद्रामायणसुप्रसिद्ध इत्यर्थकं सत् इतः परं कथा कल्पिता, न वास्तवीति सूचयति। तां निशां रात्रिम् आविभातम्-प्रभातकालपर्यन्तं कल्पाकारां कल्पकालतुल्यतया भावितां कथमपि विषेहे शयनोत्थानोपवेशनसंस्मरणसंचिन्तनादिविविधव्यापारपर एव सोढवान्। नीतवानिति यावत्॥ स इत्यस्य वेदप्रसिद्धत्वादिविविधार्थसंभवेऽप्येवं तात्पर्यं युक्तम्॥

अत्र "अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचये। युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः॥ उत्तरा फल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते" इति हनुमत्संदेशश्रवणसमय एव प्रस्थाय सह सेनया सागरगमनं श्रीमद्रामायणावगमितम्। अतः, "आविभातं विषेहे कल्पे सेनां कपिकुलपतेस्तूर्णमुद्योजयिष्यन्" इतीदं न घटत इति शंक्येत—तन्न युक्तम्। हंससंदेशस्य कल्पितकथारूपत्वात्। शारदकालस्यैव हंससंचारयुद्धार्थनिष्क्रमणोभयोपयोगितया शरत्काले हनुमदागमनं शरद्येव समुचिते शुभे दिने प्रस्थानञ्च कृतमिति कल्पयित्वा एवं रचनात्। उपरि च बहुषु श्लोकेषु हंसप्रेषणकालस्य शरत्कालतां स्पष्टमेव वक्ष्यति। सर्वमीदृशं कथाकल्पनारम्भात् प्राक् स इति वास्तवार्थनिगमनपदेन सूचयति॥

(2) अत्र जीवविषयकतया आध्यात्मिकोऽर्थः कश्चित् सूच्यते-देवः-कान्तिमान् स्वयंप्रकाशः श्रीमान्, 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति नित्यधर्मभूतज्ञानविशिष्टः सवितुः जगत्स्रष्टुर्भगवतः सृष्टिभूतासु योनिषु अनघे निर्दोषनिश्श्रेसार्थज्ञानार्हे वंशे जातः, स्वप्राप्तं मानुषत्वं पारलौकिक-श्रेयस्साधकमिति बुद्ध्वा मानयन्, अथ लब्धतत्त्वज्ञानः अथापि कालदेशदशानुसारेण मातापित्रादौ गौरवेण पुत्रादिषु प्रेमातिशयेन च जनकतनयान्वेषणे जागरूकः जनकपित्रादीनां तनयादीनाञ्च रक्षणोपायान्वेषणैकपरः संसारनिमग्नः, अदृष्टवशात् कदाचित् पवनतनये वायुवत् वेगेन सर्वं निर्वर्तयति आचार्यवर्ये स्वकीयसंसारगतिप्रतिरोधाय स्वप्रतिमुखमायाते सति, तत्सेवया निश्चिततत्त्वहितपुरुषार्थरूप-सर्वार्थः सः—अनादिप्रवृत्तसंसरणवासनारेणुगुण्ठितः शास्त्रप्रतिपादितापहतपाप्मत्वादिगुणाष्टकाभिज्ञः कामी अतिशयितमोक्षफलैकरुचिः अनुष्ठितोपायः देहावसानपर्यन्तमिमां संसारनिशां सहत इति ॥

(3) आदिकाव्यदर्शिताध्यात्मिकार्थरीत्या तु-श्रिया प्रेरितो भगवान् तत्समेत एव बहून् अवतारान् कृत्वा मनुष्यावतारे धर्माचरणेन जनान् सत्पथमानयन्, स्वप्रजाभूतेषु प्राणिषु ये स्वात्मानं जनकत्वेन मानयन्ति, 'पितासि लोकस्य चराचरस्य' इत्येवम्, तान् भक्तान् स्वतनयान् अन्वेषयन् जीवशिक्षणाय स्वप्रेषितेषु नित्यसूरितुल्येषु आचार्येषु सीतादर्शिहनुमत्समेषु स्वसमीपमागत्य शिष्यरक्षणं निवेदितवत्सु निश्चितार्थः सः सहजसौहार्दसंपन्नः वत्सं धेनुरिव स्वेष्टं लिप्सुः वत्सदर्शनाय दोहनकालप्रतीक्षधेनुवत् आविभातं कर्मबन्धान्मोचनपर्यन्तं धर्मभूतज्ञानविकासरूपविभातपर्यन्तं विषहते इति ॥ १ ॥

काल्ये (कल्ये) सेनां कपिकुलपतेः तूर्णमुद्योजयिष्यन्
दूरीभावात् जनकदुहितुः दूयमानान्तरात्मा ।
क्रीडाखेलं कमलसरसि क्वापि कालोपयातं
राकाचन्द्रद्युतिसहचरं राजहंसं ददर्श ॥ २ ॥

(1) किंकर्तव्यताव्याकुलस्य इतिकर्तव्यतानिश्चयानुगुणोपकरणसंपत्तिं यादृच्छिकीमाह काल्ये (कल्ये) इति। ददर्शेत्यस्याः क्रियायाः कर्तुरत्रानुपादानेऽपि सोऽर्थसिद्धः । पूर्वेण महावाक्यतायाः सद्भावात् । कर्तारमेकं निर्दिश्य क्रियापदं प्रयुज्य पुनः कर्तारमनिर्दिश्य क्रियाप्रयोगे स एवात्रापि कर्तेति हि वाक्यशैल्यैवावगम्यते । तेन पूर्ववाक्ये यावद्विशेषणविशिष्टस्य यस्य कर्तृत्वं तस्य तथैवात्र कर्तृत्वसिद्धिः । स इति पृथक् प्रयोगे पूर्ववाक्यार्थभूतनिशाविषहनवानित्युक्तं स्यात्। तेन अत्र श्लोके उच्यमानस्य, तूर्णमुद्यो-जयिष्यन् इत्यंशस्य तद्विषहनकालानन्तरत्वाभावात्, निशायामपि तादृशचिन्तासत्त्वाच्च तत्क्रियांशं विना पूर्वक्रियोद्देश्यस्यैवात्रापि कर्तृतयोद्देश्यत्वं वक्तव्यमित्याशयः सूच्यते । कल्य इति प्राचीनपाठः । काल्य इत्यपि पाठोऽस्ति। अमरसुधायां कल्यमेव काल्यमिति तस्यापि प्रत्यूषपरत्वं प्रोक्तम् । प्रकृते सेनाप्रेषण-शैघ्र्याय ततः प्राक् सांध्यं सर्वं निर्वर्तयितुमत्यन्तोषसि आश्रमान्निश्चक्रामेति ज्ञापयितुं कल्य इत्यप्रयुज्य

काव्य इति प्रयुक्तमिति युक्तम्। कालपदस्य प्राप्तकालार्थकत्वे तादृशकालकं वस्त्वेव विशेष्यं स्यात्; न स्वरसतः कालः। अस्य ददर्शेत्यत्रान्वयः। कपीनां कुलानि पृथग्विधानि; तेषां पत्युः सुग्रीवस्य सेनाम्। तेन सुग्रीवमप्युद्योजयिष्यन् सुग्रीवद्वारा उद्योजयिष्यन्निति च लभ्यते। प्रथमं द्वितीयपादः अथ प्रथमपादः ततः काव्ये ददर्शेत्यन्वयक्रमः। जनकदुहितुः जानक्याः पत्न्याः दूरीभावात् द्वीपान्तरस्थतया सागरमतिलंघ्य पर्वतमारुह्य प्रयासातिशयप्राप्यताज्ञानेन दूयमानः कालविलम्बासहनेन दुःखाक्रान्तः अन्तरात्मा चित्तं यस्य सः, स्वहृदयगतं दुःखं पूर्णतयाऽनाविष्कुर्वन्, अतः सेनामुद्योजयिष्यन्। लट्प्रयोगात् तद्दिन एवेति ज्ञायते। कमलसरसि स्नानार्थं स्वेन प्राप्ते पद्मप्रसूनपूर्णे तटाके क्वापि एकस्मिन् भागे। यद्यपि कस्मिंश्चित्सरसीति सुवचम्-अथापि प्रतिदिनं स्नानार्थं गच्छतः प्रायेणैकस्यैव सरसः प्राप्यत्वात् न तदुक्तेरौचित्यम्। कालोपयातं शरत्कालत्वात् मानसं विहाय समागत्य स्थितम्; स्वागमनकाले दैववशात् स्वयमागतमिति वा। क्रीडाखेलम् क्रीडया खेलम्—आगत्य क्रीडासंचारं कुर्वन्तम्। खेलनं जले वा तीरे वा। राकायां यत्र चन्द्रः षोडशकलतया पूर्णो द्योतते, तस्यां पूर्णिमायां चन्द्रः इत्यनेन पूर्णचन्द्र इत्युक्तं भवति। तस्य द्युत्या सहचरं तदीयज्योत्स्नातुल्यकान्तिभरितम्। यद्वा अत्यन्तोषःकालत्वात् चन्द्रज्योत्स्नाया अपि तत्र भावात् तया सह तत्र हंसमवेक्ष्य किमयं चन्द्र इति रामोऽमन्यत। राजहंसम् "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इति तल्लक्षणम्। प्राण्यंगत्वेऽपि चञ्चुचरणैरिति बहुवचनं समाहारानित्यत्वात्। समाहारानन्तरमपि बहुहंसगतावयवबहुत्वविवक्षया वा। सेनोद्योजनं शीघ्रकर्तव्यं मन्वानस्यैव राजहंसदर्शने तत्र विलम्ब आपतित इति कामपारवश्यमाविष्कृतं भवति। दूतप्रेषणे निर्वृत्ते किञ्चिद्विलम्ब्य गमनेऽपि न दोष इति च मन्यत इव। उद्योजयिष्यन्नित्यनेन तत्रोत्कटप्रवृत्त्यनुवृत्तिः दूयमानमनस्कत्वस्य तदनभिभावकत्वं प्रत्युत तदभिवृद्धिहेतुत्वञ्चाभिमतम्। उद्योजने प्राधान्यबुद्धेराविष्काराय प्रथमं तदुक्तिः॥

(2) पूर्वश्लोकस्य जीवपरतया व्याख्यानात् तदनुसारेणात्रैवमर्थः—जनकदुहितुः—सोदर्या इति भगवत्प्राप्तिरूपपुरुषार्थसिद्धिरुच्यते। तस्या अतिदूरस्थत्वात्, कपिकुलस्य ज्ञानकर्मेन्द्रियवर्गस्य पत्युर्मनसः सेनाम्—निष्कामकर्मपूर्वकतत्तदर्हयथावस्थितोपायनिष्पत्तिम् उद्योजयिष्यन्-उत्पादयिष्यन् कमलसरसि क्वापि-कस्य—सुखस्य अलोपयातम् लोपाभावं प्राप्तं अतिसंतुष्टम् परमहंसं बहुमहनीयजनसमावेशस्थाने यदृच्छया समागतं पूर्णिमाचन्द्रभासुर-सत्त्वगुणप्रवर्तक-श्रीहयग्रीवसदृक्षं राजहंसं ज्ञानकर्मलब्धप्रतिष्ठमाचार्यत्वार्हं परमहंसं यद्वा राजभूतं हंसं रक्ष्यकुटुम्बनिर्वाहगृहस्थवरत्वेऽपि हंसं क्षीरनीरविवेकिनं विरक्तं शुद्धम् ददर्श। द्युतिसहचरमित्युक्त्या गुरोः सदारत्वं धर्माचरणञ्च ज्ञाप्यते॥

(3) संसारिणो जीवस्य सदुपदेशेन स्वरूपविवेकमुत्पादितवति महनीये प्रतिनिवृत्ते स भगवान् तस्मिन् संसारिण्यनुकम्पया तस्य परमपदमप्राप्य यथावदनुभवं विहाय दूरीभूय स्थितिमसहमानः यदृच्छागतं कञ्चन महान्तमपश्यत्। मेने च तत्त्वप्रतिबोधनाय संसारिजीवस्त्विममयं प्रापणीय इतीत्यर्थोऽपि॥२॥

तस्मिन् सीतागतिमनुगते तद्दुकूलाङ्कमूर्तौ
तन्मञ्जीरप्रतिमनिनदे न्यस्तनिस्स्पन्ददृष्टिः ।
वीरश्चेतोविलयमगमत् तन्मयात्मा मुहूर्तं
शङ्के तीव्रं भवति समये शासनं मीनकेतोः ॥ ३ ॥

यादृच्छिकहंसदर्शनस्यानुपेक्षणीयतां प्रत्युताऽऽदरणीयतामापतितां चित्तविकारहेतुत्वञ्च दर्शयति—

(1) **वीरः** चित्तविकारनिरोधकवीर्यगुणसंपन्नोऽपि सेनोद्योजनत्वराकरगुणपूर्णोऽपि **सीतागतिम्** स्वप्रियायाः संचरणरीतिम् **अनुगते** अनुरूपतया प्राप्तवति तद्गतितुल्यगतिमति, तस्याः सीतायाः यत् दुकूलं परिधानक्षौमं तदङ्कस्य—तच्चिह्नभूतस्य मूर्तिरिव मूर्तिर्यस्य तस्मिन् । सीताया हंसाकारमुद्रालंकृत-दुकूलधारित्वात् अस्य हंसस्य तथात्वम् । तस्याः **मञ्जीरः** नूपुरः । अत्र नूपुरध्वनौ लक्षणा । तेन ध्वनिना **प्रतिमा** साम्यं यस्य तादृशनिनदयुक्ते **तस्मिन्** हंसे न्यस्ता **निस्स्पन्दा**—अन्यत्रानपेता निरन्तरस्थिता दृष्टिः नेत्रं येन सः तादृशस्सन् । राजहंसदर्शनमात्रेण तद्गतेः तत्पूर्णमूर्तेः तद्ध्वनेश्च ग्रहणे जाते सादृश्यात् सीतागतितद्दुकूलांकतन्नूपुरध्वनिषु स्मृतेषु कदाचिदनेन सर्वं सीतासकाशात् गृहीतं स्यादिति च मन्वानः **तन्मयात्मा** तत्सीताप्रचुरमनस्कः **मुहूर्तं** कञ्चित् परिमितं कालं **चेतोविलयं** चित्तभ्रंशं मूर्छाम् **अगमत्**—प्राप । वीरत्वेऽपि मूर्छाप्राप्तिः प्रियवस्तुसंबन्ध्यनेकांशस्मरणात् । प्राप्ताया अपि मूर्छायाः परिमितकालेनोपरतिः स्वभावतो वीरत्वात् । ननु सर्वदा तच्चिन्तामग्नस्य तद्दूरीभावपरिहारि-व्यापारव्यग्रस्य सदृशवस्तुदर्शनाधीनतत्स्मरणं कथं मूर्छाकरमासीदित्यत्राह **शंके** इति । विरहिणां विषये **मीनकेतोः** मन्मथस्य **शासनम्** आज्ञा **समये** तत्तदवसरे **तीव्रम्** उग्रं भवति इति **शंके** मन्ये । किमपि व्याजीकृत्य मन्मथ उपर्युपर्यवस्थामुत्पादयति । सदृशवस्तुदर्शने तस्य चित्तस्यैकरूपतैव स्यात्, नाधिक-विकारप्रादुर्भावः। विकारप्रादुर्भावकः कामः एतद्व्याजाभावे व्याजान्तरमवश्यमेव कल्पयेदिति । सेनोद्यो-जनत्वरोत्पादनमपि हंसदर्शनकार्यमित्यस्तु नाम; अन्यत् संदेशकरणमप्युद्दिश्य मदनशासनमेवमित्युल्लिख्यते; स्वस्येव सीताया अपि मूर्छादिशंकया भीतेरवकाशादिति च भावः । **शंके** इत्यनेन–मानुषत्वं मानयति भगवति कामावस्थाः मन्मथकारिता इति युक्तमिति एवमुक्तम्; चेतोविलयस्याभिनयरूपत्वात् मन्मथ-कारितत्वमप्यभिनेतुमर्हमिति ; वस्तुतो मन्मथस्य मन्मथमन्मथाधीनत्वात् न तदधीनो विकारः, किंतु प्रियासौन्दर्यतद्विषयानुरागातिशयकारित एवेति सूच्यम् ॥

(2) पूर्वश्लोकोक्तद्वितीयार्थानुसारेण त्वयमर्थः—**वीरः** निगृहीतेन्द्रियो ब्रह्मविद्यार्थी तस्मिन् राजहंसे निस्स्पन्ददृष्टिरासीत् । कथम्—आचार्यलक्षणानां भावनया । एकं लक्षणं सीतागत्यनुगमः । अज्ञातनिग्रहत्वानुग्रहमयत्वरूपलक्ष्मीगताकारमाचार्ये ददर्श। **तद्दुकूलांकमूर्तौ**–लक्ष्मीवृतं दुकूलमेतदाचार्य-मूर्तौ भवति । दिव्यदम्पत्युपभुक्तस्रग्गन्धवस्त्रान्नादिग्राहित्वात् महताम् । दुकूलं हि श्वेतपट्टवस्त्रम् । अतः पुंसा तद्धारणं युज्यते । **मूर्ति**शब्देन गुरुपत्नीरूपगुरुमूर्तिविवक्षा वा । लक्ष्मीवासोधारणे तदा पूर्ण-

मौचित्यम् । लक्ष्मीवन्मधुरोपदेशकरत्वरूपं तृतीयं मुख्यमाकारमाह तन्मञ्जीरेति । तद्दुकूल, तन्मञ्जीरेत्युभयत्र तच्छब्दः स्वपर्यायः परमात्मपरो वा । तदा भगवान् स्वधृदुकूलधारिणि 'परिस्फुरन्नूपुरचित्रभानुप्रकाश' इत्युक्तरीत्या स्वनूपुरध्वनितुल्यध्वनौ न्यस्तदृष्टिरित्यर्थः । तन्मयात्मा गुरुचिन्ताप्रचुरमनाः **चेतोविलयमगमत्** अन्यत्र जिगमिषामत्यजत् । **मीनकेतोः** मीनरूपेणावतीर्य वेदवेदान्तप्रवर्तकस्य भगवतः शासनं समये सुकृतपरिपाकावसरे तीव्रं भवति ॥

(3) भगवान् हंसमालोक्य अयमेव जीवसविधं प्रापयितुमर्हः, 'सर्वः सगन्धेषु विश्वसिति' इति न्यायेनास्य तदादरणीयत्वात्। सगन्धता च सीतायाः-जीवस्य गतितुल्या गतिरस्य गुरोः। आहारविहारादिकं तत्तुल्यम् । वस्त्रधारणादिर्वेषोऽपि तुल्यः, उपदेशोपयुक्तभाषाऽपि तद्वदेव । पादकटकनिनदेत्यनेन पादोत्पन्नानार्यवर्णभाषापरिचयशालितया सर्वाधिकृतप्रबन्धादिना सर्वोपदेशशक्तत्वं हि ज्ञापितम् । एवं विचिन्त्य तत्र जीवे मनश्चकार भगवान् । स हि मीनादिविग्रहः शास्ता सर्वस्य यथासमयम् ॥ ३ ॥

**लब्धाश्वासः कथमपि तदा लक्ष्मणस्याग्रजन्मा**
**संदेशेन प्रणयमहता मैथिलीं जीवयिष्यन् ।**
**चक्रे तस्मै सरसिजदलैः सोपचारां सपर्यां**
**कान्ताश्लेषादधिकसुभगः कामिनां दूतलाभः ॥ ४ ॥**

(1) मुहूर्तं चेतोविलय इत्युक्त्या ततः प्रतिबोधः सिद्धः । स कथं जातः । ततश्च किमासीदित्यत्राह **लब्धेति** । **लक्ष्मणस्याग्रजन्मा**—अग्रजः। अग्रे जन्म यस्य सः । **कथमपि** वीर्यकार्यसेनोद्योजनदृढाध्यवसायेन लक्ष्मणकृतोपचरणेन दैवानुकूल्येन च लब्ध **आश्वासः** येन; प्राप्तचित्तसमाधानः । 'एवमेव हि मैथिल्यपि सदृशवस्तुदर्शनादिना विक्लवा स्यात् । घोरराक्षसीगणपरिभर्त्स्यमानत्वाच्च सुतराम् । 'तावत्त्वहं वीर ! जिजीविषेयं यावत् प्रवृत्तिं शृणुयां प्रियस्य' इति प्रियक्रियमाणप्रवृत्तिजिज्ञासा च तस्या बलवतीति ज्ञायते' इत्येवमालोच्य हंसोऽयं दूत्ये समर्थ इति च निश्चित्य, **तदा**—तस्मिन् काल एव, **प्रणयमहता** स्वस्य तद्विषये विद्यमानेनानुरागेण मान्यतां प्राप्तेन **संदेशेन** 'संदेशस्तु प्रोषितस्य स्ववार्ताप्रेषणं भवेत्' इति लक्षितेन समाश्वासनिर्भरेण वार्ताप्रेषणेन **मैथिलीं** मिथिलाया अयं (राजा) मैथिलः तस्यापत्यं तां जनकगौरवादपि **जीवयिष्यन्** अनुवृत्तजीवनां करिष्यन् तावत्कार्यप्रवृत्त्यनुकूलतत्प्रीतिसंपादनाय तस्मै हंसाय **सरसिजदलैः** तदावासतदाहारोभयाकारसंपन्नारविन्दपुष्पदलैः **सोपचारां सपर्यां** आसनार्घ्यपाद्यार्पणरूपोपचार-भोज्यप्रदानादिरूपपूजोभयात्मकं सत्कारं **चक्रे** अन्वतिष्ठत् । कान्ताविरहविह्वलहृदयस्य मूर्छाकरैतद्दर्शनानुवृत्तौ सत्यां कथमेवं स्वास्थ्यमित्यत्राह **कान्तेति** । अस्वास्थ्यं कान्तासंश्लेषे लब्धे सम्यगपेयात् किल । ततोऽप्यधिके दूतलाभे सति, दूत्यमेतन्मुखेन सुकरमिति ज्ञाने सति कथमस्वास्थ्यमिति भावः । अलब्धवैकुण्ठानां अच्युतदर्शनदौर्लभ्यचिन्तासन्तानसंतप्तचेतसामर्चावतारसेवा वैकुण्ठदर्शनादप्यधिकैव गण्यते ; अत्यन्तदूनमानसप्रीणनत्वात् उद्दिष्टमहाफललम्भकत्वाच्च । तथेह दूत-

लाभोऽपि। कामिनां प्रकारान्तरेण पूर्णकामानाम्। अधिकसुभगः अधिकं सुभगः अधिकसौभाग्यवान्। "गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषणम्। भर्तारमिव संप्राप्ता जानकी मुदिताऽभवत्" इत्युक्तिमतिशेते इदम्। अधिकमिति नपुंसकनिर्देशः सौभाग्यरूपप्रवृत्तिनिमित्ते तदन्वयज्ञापनार्थः। तस्मै इति चतुर्थ्या, नेदं राजप्रीत्यै राजकुमारलालनतुल्यम्; किं तु साक्षादुद्दिश्यैव क्रियमाणमिति ज्ञाप्यते ॥

(2) लक्ष्मणस्य-'लक्ष्मणो लक्ष्मिसंपन्नः' इत्युक्तभगवत्कैङ्कर्यधनस्य कृतलक्षणस्याग्रजन्मा ज्येष्ठ भ्राता। तद्वत् कैङ्कर्यकरणे अनादिकालत एव प्राप्ताधिकारः एतावत् भगवद्वैमुख्यजनितव्यसनदूनः समाधानं चित्तस्य प्राप्य स्वस्य प्रियां धर्मभूतज्ञानरूपां प्रज्ञां प्रणयमहता। प्रणयः याच्ञा। स्वकृतप्रार्थनावशात् महता, आचार्यवात्सल्यरूपप्रणयेन च महता संदेशेन तत्कृतोपदेशेन जीवयिष्यन् प्राप्तस्थिरधिकामां करिष्यन् आचार्यं यथावदानर्च। कान्ताश्लेषात् भक्तिप्रपत्तिरूपोपायलाभादप्यधिकसुभगो भवति ह्याचार्यलाभः ॥

(3) लक्ष्मणस्याग्रजन्मा— स्वाधीनशेषशेषाशनादिसत्तास्थितिप्रवृत्तिर्भगवान् मैथिलीं जीवं स्ववात्सल्यप्रदर्शिशास्त्रार्थोपदेशेन जीवयिष्यन् स्वेन प्रेषयिष्यमाणमाचार्यं तं बहुमन्यत। तस्मै पूजामकरोत्। श्लाघितवान् जामयः पूज्या इतिवत् उचितं प्रीणयामासेत्यर्थः। सरसिजदलैः तद्वत् भोग्यैः सरसवाक्पुरुषजैर्वचनैः, "न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः। ते पुनन्त्युरुकालेन दर्शनादेव साधवः", "तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्। भगवत्संगिसंगस्य किमुतान्या इहाशिषः" इत्यादिभिः ॥४॥

> कृत्वा तस्मिन् बहुमतिमसौ भूयसीमाञ्जनेयात्
>
> गाढोन्मादः प्रणयपदवीं प्राप वार्तानभिज्ञे।
>
> विश्लेषेण क्षुभितमनसां मेघशैलद्रुमादौ
>
> याच्ञादैन्यं भवति किमुत क्वापि संवेदनार्हे ॥ ५ ॥

(1) ननु वार्ताहरेण वाग्मिना भाव्यम्। कथमयं पक्षी प्रेर्यत इत्यत्राह कृत्वेति। असौ कामी गाढोन्मादः उत्कटचित्तविभ्रमः चेतनाचेतनाविवेकेन विविधप्रलापहेतुरयम्। वार्तानभिज्ञे— शब्दव्युत्पत्तिरहिते तस्मिन् आञ्जनेयात् निखिलवेदव्याकरणविदो मन्त्रिवरात् वीर्यदाक्ष्यादिविश्रुतात् अपशब्दरहितवाचो हनुमतोऽपि भूयसीम् अधिकतरां बहुमतिं कृत्वा। पक्षपातरहितात् तस्मात् सागरलंघनेऽयं समर्थतरः, पक्षित्वात् सीताप्रियतरश्चेत्यादिमत्या प्रणयपदवीं स्वात्मानं नीचं तञ्चोच्चं कृत्वा प्रार्थनापद्धतिं चक्रे। उन्मादभूयिष्ठस्येदृशी प्रवृत्तिर्न विस्मयाय। अत्यन्ताचेतनेष्वपि विरहिणां प्रार्थनादर्शनादित्याह विश्लेषेणेति। मेघशैलद्रुमादौ। मेघादीन् संबोध्यापि याच्ञारूपं दीनकृत्यं भवति। संवेदनार्हे उच्यमानार्थग्रहणसमर्थे क्वापि देवे मनुष्ये पश्वादौ वा जन्तौ याच्ञादैन्यं किमुत कुतो न; असंशयं भवेदिति। मेघे याच्ञा गोदादेवीदिव्यप्रबन्धे (8) 'विण्णील' इति सूक्तौ, मेघसंदेशे च। शैलद्रुमादिविषये श्रीमद्रामायणम्, "कच्चित् क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी। यदि ताल त्वया दृष्टा, अशोक शोकापनुद" इत्येवम् ॥

(२) अर्थान्तरम्—**असौ मुमुक्षुः आञ्जनेयात्** श्रीरामविषयकभक्तिस्नेहपूर्णत्वेऽपि प्रकृतिमण्डलवासवासना-चतुर्मुखपदलिप्सादिलिप्तहृदयात् हनूमतः **भूयसीम्** अधिकतरां **बहुमतिं** गौरवं बहुश्लाघ्यार्थविषयकमतिञ्च **वार्तानभिज्ञे** लोकयात्रा-कृष्यादिव्यापाराव्यापृते वार्तस्य—असारस्याभिज्ञाने प्रवृत्तिरहिते च **तस्मिन्** आचार्ये कृत्वा विचार्य **गाढोन्मादः** तद्विषयकभक्तिश्रद्धाबहुलः **प्रणयपदवीं** प्रार्थनाप्रकारं प्राप्नोति । **मेघशैलद्रुमादौ** मेघादिवस्तुवत् परहितार्थबुद्धिपूर्वकसंचाररहितेऽप्येकान्तशीले पुरुषे । तमाश्रित्येति यावत् । याच्ञादैन्यं स्वस्य संसारादुत्तारणविषयप्रार्थनारूपं दीनकृत्यं तीव्रमोक्षाभिलाषस्य भवति । एवं स्थिते, **संवेदनार्हे** परदुःखादिकं स्वदुःखत्वेन भावयति क्वापि लोकोज्जीवनार्थप्रवचनविलेखनादिबहुविधव्यापारशालिनि महनीये लब्धे तत्सकाशे याच्ञा कथं न भवेदिति ॥५॥

**वेदोदन्वद्विभजनविदो वंशजं विश्वमूर्तेः**
**आहुः सिद्धाः कमलवसतेरौपवाह्यं भवन्तम् ।**
**लब्धं येन प्रगुणमतिना तत्प्रियायास्सकाशात्**
**तत्सावर्ण्यं श्रवणरसनास्वादयोग्या सुधा च ॥ ६ ॥**

(1) याचकेन याच्यप्रशंसनस्यावसरे कार्यतया हंसप्रशंसने प्रवृत्तः यथार्थगुणकथनेनैव प्रशंसन् आञ्जनेयादपि भूयसीं बहुमतिं स्थितामप्युपपादयति वेदेति । हंसरूपेण भगवत एवैतत्कुलकूटस्थत्वं चतुर्मुखवाहनत्वं सरस्वत्यनुग्रहलब्धविशेषत्वञ्चास्यासाधारणम् । वेदः उदन्वान् समुद्र इव विपुलत्वात् गंभीरत्वात् तापशामकत्वात् श्रेष्ठवस्तुप्रदत्वात् सर्वजन्तूपजीव्यत्वात् अशोष्यत्वाच्च । विभजनम् अवतरणावगाहनाद्यनुकूलतया नदीनदसरस्तटाकजलाशयादितुल्यशाखाकल्पनम् । तद्विदः-तत्कृत इति यावत् । 'वेदान्तकृत् वेदविदेव चाहम्' इत्युक्त्या तदर्थज्ञस्यैव तत्करणं श्लाघ्यं स्यादिति वेदनोक्तिः । नानार्थापरिशीलनेन खण्डशो विभागो विवक्षितः ; किंतु कर्मकाण्ड-ज्ञानकाण्डरूपेण, विध्यर्थवादमन्त्रादिरूपेण, तत्त्वहितपुरुषार्थपरभागरूपेण, चिदचिदीश्वरादिवादरूपेण, अर्थपञ्चकवचनरूपेण, भेदाभेदघटकश्रुत्यादिरूपेण, ऐश्वर्यकैवल्यापवर्गादिफलादिपरतया च विभाग इति विद् इत्यनेन ज्ञापितम् । विश्वमूर्तेः विश्वशरीरकस्य भगवतः । हंसरूपेणावतीर्य वेधःप्रभृतीनामज्ञानान्धकारं शमयामासेति प्रसिद्धमेतत् । श्रीभागवते (११. १३) सनकादिप्रश्नोत्तरलिप्सया चतुर्मुखप्रार्थितो भगवान् हंसरूपेणावतीर्य अहंकारममकारत्यागं पाञ्चभौतिकदेहातिरिक्तजीवतत्त्वं सर्वान्तर्यामितया स्वावस्थानं तत एव नानात्वबुद्धेस्त्याज्यताञ्चोपदिदेशेत्युक्तत्वात् तत्त्वत्रयैश्वर्यकैवल्यापवर्गादिविभागपरतया वेदव्याख्यानं वेदविभजनमिति युक्तं स्वीकर्तुम् । व्यासमहर्षिकृतं वेदविभजनं त्वन्यादृशम् । विश्वमूर्तेरिति शब्दश्च, 'यावत् नानार्थधीः पुंसो न निवर्तेत युक्तिभिः' इति तत्रत्यश्लोकस्मारकः । सिद्धा इति पदञ्च सनकाद्यर्थो हंसावतार इति तत्र दृष्टमंशं दर्शयति । तथा **कमलवसतेः** भगवन्नाभीनलिनं वसतिः वासस्थानं यस्य तस्य चतुर्मुखस्य **औपवाह्यं** प्रधानयानञ्चाहुः। कमलादपि मार्दवाद्यतिशयोऽप्यस्य गम्यते । अस्य हंसस्य वाहन

हंसव्यक्तिभिन्नत्वेऽप्यभेद उपचर्यते। प्रथमपादेनाभिज्ञतमत्वं द्वितीयपादेन गमनसामर्थ्यपौष्कल्यञ्च प्रकृतोपयोगि उक्तम्। वपुश्शोभां वाग्मिताञ्चाह **लब्धमिति**। येनौपवाह्येन **प्रगुणगतिना** आकाशेऽतित्वरितम् अक्लेशञ्च गमनं कुर्वता, स्वामिविधेयतया ऋजुगामिना च। अत्र हंसस्य भुवि पादन्यासरूपगतिः सरस्वतीतो लब्धा सावर्ण्यादिवत् इत्यनुक्तिः, **सीतागतिमनुगते** इति सरस्वत्यपेक्षया सीतायां तदतिशयात् तत्समानगतित्वस्य हंसे भावितत्वात्। **तत्सावर्ण्यं** सरस्वतीवत् कुन्देन्दुहारतुषारसमुदायातिशायि धावल्यम्। अनेन सात्त्विकत्वातिशयः परहितविवेकादि च सूच्यते। **श्रवणं** कर्ण एव **रसना** जिह्वा तया स्वादनीया **सुधा** च मधुरवाङ्मयम्। सुधेति स्त्रीलिंगेऽपि **लब्धमिति** नपुंसकमनपुंसकेनेति क्लीबैकशेषः। एवञ्च वार्तानभिज्ञं हंसमाञ्जनेयादप्यतिशयितसर्वाकारसंपन्नं मन्यते रामः। आञ्जनेयः स्वस्यौपवाह्यः। हंसस्य सरस्वती सावर्ण्यात् वर्णातिशयः; न स हनूमति। हनुमत्स्वरः कामरूपत्वात् कदाचित् सुधामयोऽपि स्यात्, कापेयानुगुणश्चान्यदा। न हंसस्यैवं विकृतस्वरता। एवं सर्वगुणसंपन्नत्वात् संदेशार्ह इति मन्यते ॥

(2) आचार्यस्य श्रैष्ठ्यं दर्शयति **वेदेति**। "चतुर्धा व्यभजत् तांश्च चतुर्विंशतिधा पुनः" इति निखिलवेदविभजनविख्यातस्य, **विश्वमूर्तेः**-विश्वं विष्णुरिति प्रसिद्धस्य **विश्वस्य** भगवतो मूर्तिविशेषस्य, 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्' इति प्रशंसितस्य बादरायणस्य **वंशजं** विद्यावंशे जातम्। अतो ब्रह्मसूत्रादिद्वारा यथावदौपनिषदार्थज्ञानपूर्णं **कमलवसतेः** लक्ष्म्याः विश्वमूर्तेर्भगवतश्च **औपवाह्यं** वाहनभूतं छन्दोमयं गरुत्मन्तञ्च। तत्तुल्यमिति यावत्। **सिद्धाः** भवदाश्रयणेन लब्धज्ञानाः महान्त आहुः। अस्यां गुरुपरम्परायां श्रीरपि निविष्टा। तत एव **तत्सावर्ण्यं** तत्समानवर्णता अनुग्रहशीलता हितोपदेशरूपवर्णराशिमत्ता च लब्धा। श्रवणास्वादयोग्या गीतिरूपा सुधा, रसनास्वादयोग्या वागुच्चारणरूपसुधा दिव्यदम्पतिभुक्तशेषरूपममृतञ्च जिह्वास्वाद्यं लब्धम्। लक्ष्मीकटाक्षवशात् ज्ञानसंपत् वाक्संपत् भगवद्भागवताराधनौपयिकभोग्यभोगोपकरणसंपच्चास्याचार्यस्येत्युक्तं भवति। **प्रगुणगतिने**ति पदं 'दृष्टिपूतं पदं न्यसेत्' इत्युक्तरीत्या सावधानगतिं क्षुद्रफलविरक्तिं प्रकृष्टगुणभगवदेकनिष्ठतां निरपराधकैङ्कर्यनिरतत्वञ्चास्य दर्शयत् शिष्यपरिपालनार्थां संप्रति कर्तव्यां गतिञ्च गमयति। **तत्प्रियाया** इति आचार्यपत्न्या एव ग्रहणे तु, उपनिषदि उपकोसलस्येव, कुशलं परिचरितवतः उपदेशः कार्य इति हितस्मारकगुरुपत्नीतुल्यस्वपत्नीकृतस्मारणवशेन तद्गुणसंपत्तिः संभाविता ज्ञाप्यते। एवं सत्संतानप्रसूतत्वं संप्रदायप्राप्तसदर्थत्वं भगवत्कैंकर्यपरत्वं शास्त्रानतिलंघित्वं पुरुषकारविशिष्टत्वं व्यवहारकुशलत्वं भगवद्गानभोगप्रवणत्वमित्यादिगुणसंपत्तिर्गुरोरुक्ता भवति ॥ ६ ॥

**मध्ये केचित् वयमिह सखे केवलं मानुषाणां**
**व्यक्तोत्कर्षो महति भुवने व्योमगानां पतिस्त्वम्।**
**स्थाने दूत्यं(दौत्यं) तदपि भवतः संश्रितत्राणहेतोः**
**विश्वस्रष्टा विधिरपि यतः सारथिस्त्वेन तस्थौ ॥ ७ ॥**

एवं दूत्यकरणोपयोगिगुणसमृद्धिमत्ताज्ञापनाय हंसं प्रशस्य स्वनैच्यस्य तत्प्रवृत्त्यबाधकत्वस्थापनाय स्वनैच्यमप्याविष्कुर्वन् प्रार्थयते **सख्ये** इति । उच्चनीचभावेऽपि सखित्वमविरुद्धम् । परसुखदुःखयोः स्वकीयत्वेन भावने सखित्वपूर्तेः । 'द्वा सुपर्णा सयुजा सखाया' इति परजीवयोरपि सखित्वश्रुतेश्चे-त्याशयेन **सखे** इति संबोधनम् । उत्कर्षसमानाधिकरणं सखित्वं विवक्षितम्; न तु, "हे कृष्ण हे यादव हे सखेति" इत्यत्रेव निकर्षसमानाधिकरणसखित्वम् । **केवलमि**ति पदं बहुधान्वेति। केवलमानुषाणां मध्ये वयं केचित् । मानुषाणां मध्य एव वयं केचित् । मानुषाणां मध्ये वयमेव केचित् । मानुषाणां मध्ये केचिदेव वयम् । सीतालक्ष्मणसाहित्येन **वयमि**ति बहुवचनम् । एवं मानुषमध्येऽपि निकृष्टतमस्य देवमध्येऽप्युत्तमस्य च कियदन्तरमिति भावः । **इहे**त्यनेन भूलोकेऽप्यप्रसिद्धिर्बोध्यते । **महती**त्यनेन तस्य सर्वलोकप्रसिद्धिः। **व्योमगानामि**ति। पक्षिणामिति वास्तवार्थः । देवानामित्यपि गम्यते । पतित्वादुत्कर्षः सिद्धः । प्रसिद्धश्च स त्वयीति भावः । एवं बाधकमुद्धाट्य तस्याबाधकत्वमाह **स्थाने** इति । एवं कथनस्यापि तदीयगुणविशेषकथने पर्यवसानम् । **तदपि**—तथापि । **दूत्यं** दूतकृत्यं **स्थाने** युक्तम् । अव्ययमेतत् । अत्र **भवच्छब्दस्य**, उत्तरार्धे **त्वंशब्दस्य** च यद्यप्यौचित्यम्—अथापि विपर्यासः तत्पदद्वयसूचितपरत्व-सौलभ्ययोः सार्वदिकत्वज्ञापनार्थः । दूत्येऽपि भवत्प्रभावस्य न हानिः; प्रत्युत गौरवाधिक्यमेवेति **भवत्**पदज्ञाप्यम् । तत्फलमाह **संश्रिते**ति । महदनुष्ठानेन तत् समर्थयते **विश्वे**ति । व्यष्टिप्रपञ्चस्य स्रष्टा विधिः चतुर्मुखोऽपि स्वपुत्रस्य रुद्रस्य सारथित्वेन त्रिपुरासुरविजयावसरे यस्मात् तस्थौ, तस्मात् स्थाने । तथा च **कर्णपर्वणि**, "ततः स भगवान् देवो लोकस्रष्टा पितामहः । सारथ्ये कल्पितो देवैरीशानस्य महात्मनः" इति । कृष्णस्य यत् पार्थसारथ्यम्, तत् पूर्वभाविना रामेण वक्तुमशक्यम् । अस्माकं तत्क्रमव्युदासाय **विधिरि**ति पदम् । **विश्वस्रष्टे**त्यनेन तन्महिमकथनम्; उपात्तश्लोकस्मारणञ्च ॥

(2) अत्र पूर्वार्धे स्वस्य नैच्यप्रतिभटमुच्चत्वमपि गुप्तं ज्ञापितम्। **सखे** इति निकर्षसमानाधिकरणसखित्व-विवक्षा । मानुषाणामेव मध्ये वयमल्पत्वेन भाविताः । देवास्तु तत्त्वं विदन्ति । वयं सर्वेश्वरत्वेन प्रसिद्धाः । **केचित्**— अपरिच्छेद्यवैभवाः परमव्योमवासिनः इह भूमौ अवतीर्णाः । **तदपि** तस्मादपि कारणात् **दूत्यं स्थाने** इति ॥

(3) भगवता एवं स्वमहिमवर्णनपूर्वकमाचार्यप्रेरणं शिष्यलोकगमनाय कृतं भवतीत्यपि ध्येयम् ॥

(4) अथाचार्यं प्रति शिष्योक्तिः-**सखे**-खसहिते इह लोके। खमिन्द्रियं सुखञ्च। ऐन्द्रियकस्वल्प-सुखमिश्रे दुःखाधिकेऽत्र लोके अविवेकिनां मनुष्याणां मध्ये वयमतीव नीचाः। देवैरपि कामिभिः, "तस्मै देवा बलिमावहन्ति" इति रीत्या श्लाघितः परमैकान्ती भवान्। **तत्** – तस्मात् भवदाश्रितशिष्यरक्षणार्थं **दूत्यमपि**-भगवते विज्ञापनमपि **स्थाने**; अस्मान् प्रति उपदेशः सर्वः **स्थाने** इत्यत्र कः संदेहः । आचार्या हि वेदान्तार्थमुपदिशन्तो विरमन्ति केचित्। केचिदुपदिश्य शिष्यभरं भगवते समर्पयन्ति च । **दूत्यमि**ति तत्समर्पणांशोक्तिः। अत्राऽऽचार्यश्च सारथिश्च भवन् कृष्णश्चतुर्थपादेन गम्यते । सोऽपि **विधिरेव** ॥७॥

इच्छामात्राज्जगदपरथा संविधातुं क्षमाणा-
मिक्ष्वाकूणां प्रकृतिमहतामीदृशीं प्रेक्ष्य वेलाम् ।
लक्ष्यालक्ष्ये जलधिपयसा लब्धसंस्थां त्रिकूटे
लङ्कां गन्तुं तव समुचितं राक्षसीं राजधानीम् ॥ ८ ॥

मानुषेष्वप्यत्यल्पत्वेन भाव्यमानस्य ते पत्नी बलिष्ठेन राक्षसेनापहृता चेत्–त्वया किं कर्तुं शक्यम्, तत्र मदन्वेषणेन लभ्यं किमस्तीति हंसः पृच्छेदिति मन्वानः, भाग्यहानिप्रयुक्ते तात्कालिके नैच्ये सत्यपि, वंशादिकृतमहत्त्वस्याविचाल्यत्वात् तदनुरूपं सर्वं कर्तव्यम्, कर्तुं शक्यञ्चेति वेदयन्, स्वपूर्वपुरुषमहिमवर्णन-व्याजेन स्वमहिमानमाविष्कुर्वन्, पूर्वपूर्वेषु स्थितां प्रीतिं प्रदर्शयितुमपि ते दूत्यमुचितमिति सूचयन्, कार्यस्य हंसैकसाध्यत्वज्ञापनाय गन्तव्यस्थलमपि ज्ञापयति इच्छेति । मद्वंशे प्रसिद्ध इक्ष्वाकुः, तदपत्यानि तद्वंश्याः सर्वेऽपीक्ष्वाकव उच्यन्ते । राजापत्यवाचकप्रत्ययस्य राजपदोपरिस्थितस्य बहुवचने लुक् । अत ऐक्ष्वाकवशब्दे इक्ष्वाकूणामिति रूपम् । सर्वे प्रकृत्या स्वभावेन जन्मप्रभृति पारम्पर्याच्च महान्तः। तथा भगवत्तुल्याश्च; यतः इच्छामात्रेण-संकल्पमात्रेण सर्वं जगत् अपरथा दृश्यमानाकारान्याकारवत्तया संविधातुं सम्यक् कर्तुं संपन्नसामग्रीकां कर्तुं वा क्षमाः समर्थास्ते । रामप्रभावं वर्णयता अकम्पनेन रावणं प्रति ह्युच्यते, "संहृत्य हि पुनर्लोकान् विक्रमेण महायशाः। शक्तः स पुरुषव्याघ्रः स्रष्टुं पुनरिमाः प्रजाः" इति । रामस्त्विह स्वपूर्वपुरुषाणां सर्वेषामिमं महिमानमाह। मनोः सर्वप्रजोत्पादकत्वञ्च सुबालोप-निषद्विष्णुपुराणमनुधर्मशास्त्रादिषु प्रसिद्धम् । अपरथा संविधातुम्—अवस्थान्तरवत्तया कर्तुं—संहर्तुम् । अतो रावणसंहारः सुशक इति भावः । अपरथा —प्रकृतातिरिक्तोत्कृष्टाकारवत्तया स्रष्टुमि-त्यप्यर्थः । एकैकोऽपि राज्यपरिपालनसामर्थ्यवशात् जगद्वशीकरोतीति महिमाऽयमेवंरूपेणातिशयोक्त्या प्रदर्श्यते इति च भाव्यम् । तेषामिक्ष्वाकूणाम् ईदृशीं दारापहारादिप्रकारवतीं वेलां दशां प्रेक्ष्य । ममेयमापन्ना दशा मत्पूर्वपुरुषाणामेव जातेति कारुणिकेन भवता भावनीयम् । मह्यमुपकारे कृते ते सर्वे उपकृता भवन्ति । भवन्नाथचतुर्मुखप्रेमपात्रस्य वंशस्यायशस्त्वया परिमृष्टं भवतीति भावः । किं कर्तव्यम्, तदाह लक्ष्येति । लंकां गन्तुं समुचितम् । लंकां प्रति गमनमतीव युक्तम् । गन्तुं—गमनम्। भावार्थे तुमुन् । सा कीदृशी । जलधिपयसा—सागरजलेन परिवृतत्वात् त्रिकूटपर्वतः लक्ष्यः अलक्ष्यश्च । अग्रे दृश्यः, अधस्तादहृश्यः । उत्तुङ्गतरङ्गव्याप्त्यवसरे अदृश्यः, अन्यदा दृश्यश्च । अथवा जलधिपयो-मेलनात् लक्ष्ये रामणीयकाधिक्येन दर्शनीये, अथाप्यावृतत्वाददृश्ये इत्यर्थः । तत्र पर्वते लब्धा संस्था स्थैर्यं यया सा । यद्वा यत्रालक्ष्यं सर्वमपि अस्मदीयशरलक्ष्यं भविष्यति, तादृशे । अत एव लब्धसंस्थाम् । संस्था—नाशः। उपक्रान्तनाशाम् । हनुमता दग्धत्वात्, शराग्निना ध्वंसयिष्यमाणत्वाच्च । किञ्च राक्षसी रक्षस्संबन्धिनी राजधानी। सागरमतिलङ्घ्य पर्वताग्रं प्राप्य द्रष्टव्या राजधानी व्योमगपतिना त्वयैव द्रष्टुं शक्या। पक्षिप्रवेशे सत्येव राक्षसाः तद्राजश्चाज्ञात्वा तूष्णीं स्युः । अन्यपुरुषप्रेरणे अपायशंकाया अवसरोऽस्ति ॥

(२) अत्र स्वस्य सर्वेश्वरत्वमवतीर्णत्वञ्चाप्युच्यते—अंगुल्यग्रेणैव हिरण्यभेदी, ‘इच्छामात्रं प्रभोः सृष्टिः’, ‘तदैक्षत....असृजत’ इत्यादिरीत्या जगत् संकल्पमात्रेण संविधातुम्, अपरथा प्रलयरूपेण च संविधातुं क्षमः सर्वेश्वरोऽहम् । आशादिकं विलक्षणवाय्वादिरूपेण कर्तुं, प्रलये व्युत्क्रमेण सर्वकरणे च समर्थः । “सदेवगन्धर्वमनुष्यपन्नगं जगत् सशैलं परिवर्तयाम्यहम्” इति परिवर्तनसमर्थश्च । साम्प्रत-मिक्ष्वाकुवंश्यत्वान्मानुषभावना मया क्रियते । रावणसंहारार्था वेला संप्रत्वायाताऽस्ति । इमां प्रेक्ष्य त्वया लंका गन्तव्येति ॥

(३) भगवता आचार्यं प्रत्युच्यते—सृष्टिस्थितिप्रलयसमर्थानां जगत्पालनायेक्ष्वाकुप्रभृतिराज रूपेणावतीर्णानाम्, ‘विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्’ इति मुमुक्षुवेद्यनिवृत्तिधर्मप्रवर्तनं यथावत् कृतवताम् ईदृशीं वेलाम् प्रजासामान्यस्य प्रवृत्तिधर्मप्रवणतया दुर्गतिदशां प्रेक्ष्य राक्षसीम्—दैवसर्गह्रासेन आसुरराक्षसभूयिष्ठाम् अथापि राजधानीम्—रङ्गकमुजनसार्वभौमासदधिष्ठितां लंकां प्राकृतलोकं तव गन्तुमुचितम् । या हि त्रिकूटे लब्धसंस्था । त्रिकूटं मायात्रयम् रागद्वेषमोहरूपदोष-त्रयम् । तच्च लक्ष्यालक्ष्यम्—अलक्ष्यमप्रेक्षणीयं यत् तत् सर्वं तेन लक्ष्यं लक्षणीयं लिलक्षयिषितं भवति । अनुचितकार्यप्रवर्तकं तत् दोषत्रयम् । तत्र कारणं जलधिपयः । जडाः यत्र धीयन्ते, तत्रत्या-ज्ञानसारेणेत्थम्भावः । त्रिकूटवशत्वात् लब्धसंस्था नष्टप्राया । तादृशं प्राकृतलोकं गत्वा जगद्व्यापार-प्रवृत्तास्मन्मनोरथपूरणं कार्यमिति । अथवा इक्ष्वाकूणां इच्छामात्रात् सर्वकरणक्षमाणां सताम् । तान् अनादृत्य । अनादरे षष्ठी । प्रकृतिमहताम्—मूलप्रकृतिपारवश्यप्राप्तमहत्त्वानामीदृशीं परहिंसन-वेलां प्रेक्ष्येत्यर्थः ॥ ८ ॥

स्थानैर्दिव्यैरुपचितगुणां चन्दनारण्यरम्यां
मुक्तासूतिं मलयमरुतां मातरं दक्षिणाशाम् ।
अस्मत्प्रीत्यै जनकतनयाजीवितार्थं च गच्छन्
एकं रक्षःपदमिति सखे दोषलेशं सहेथाः ॥ ९ ॥

अथ द्रक्ष्यस्येवमित्यन्तैः पञ्चभिः श्लोकैः सामान्येन मार्गसौख्यं कार्यपूर्तिञ्च ज्ञापयति । ततः परमेव विशिष्य मार्गदेशना । ननु यद्यपि लंकैव राक्षसी राजधानी, अथापि दक्षिणाशा सर्वाऽपि राक्षस भूयिष्ठैव । अनुभूतं किल चित्रकूटजनस्थानदण्डकावनादि । अतः शुद्धानां तत्र गमनमपि न युक्तम् । किञ्च गन्तव्यदेशस्य दुष्टत्वं भवतैवोक्तम् । गमनमार्गस्य च कीदृशी परिस्थितिः । गत्वा या द्रष्टव्या, सा किं भवन्तं प्रतीक्षमाणाऽस्ति, उतान्यथा इति हंसः पृच्छेदिति तत् सर्वं सम्यगित्याह स्थानैरिति । दिव्यस्थानानि श्रीमदञ्जनाद्रिहस्तिगिरिश्रीरङ्गक्षेत्रादीनि । तैरुपचितः अभिवृद्धो गुणः अतिशयः भक्ति-ज्ञानवैराग्यानुष्ठानादिसमृद्धिः यस्यां ताम् । दक्षिणाशा दक्षिणदिक् दक्षिणानामाशाविषयभूता । अग-स्त्यादिमहर्षिमहिता हीयम् । कस्मात् ? भगवदवतारस्थानैर्दिव्यदेशैः संवर्धितातिशया । यत्र दिव्यदेशाः

नाधिकाः, तत्रारण्ये चन्दनवृक्षाणामधिकत्वात् घ्राणसंतर्पणं सम्यक् भविष्यति । विश्रम्य विश्रम्य वनद्रुमाणां छायासु गन्तुं तव हंस युक्तम् । तथा नद्योऽपि सन्ति, यत्र मुक्ताः मौक्तिकानि जायन्ते । ताम्रपर्णीवर्णने चेदमुपरि वक्ष्यते । 'श्वेतपक्षी मानसौकाः मौक्तिकाशन इत्यपि' इति कोशात् मुक्ताः हंसस्याऽऽहारा भवन्तीति चैतदुक्तम् । हंसानां मुक्ताहारत्वं युज्यते ; सारूप्यात् । मलयानिलश्च दक्षिणस्यां दिश्येवोत्पद्यते । मरुत्सु स एव हि सुखावहः । तां दिशमनुभव ।

एवं दिशो गुणातिशयात् गमनौचित्यमुक्तम् । आवश्यकताञ्चाह **अस्मदिति** । **अस्माकं** भवदिष्टेक्ष्वाकुवंशजानां सर्वेषां प्रीत्यै, धार्मिकाग्रेसरस्य ज्ञानिनो जनकस्य, तत्तनयायाः प्रियायाः सीतायाश्च जीवितार्थं च गन्तव्यम् । हनुमता मम जीवितं रक्षितम् । 'ऊर्ध्वं मासान्न जीविष्ये' इत्युक्तवत्या यद्यपि मध्ये जीवनलोपशंका नास्ति-अथापि हनुमन्मुखेन सर्वमधिगतं मयेति ज्ञाने सत्येव तथा जीवेत् । अतस्त्वया गन्तव्यम् । चकारेण दिव्यस्थानादिसेवाफलं समुच्चीयते । **रक्षःपदमिति** दोषलेशमेकम्-**दक्षिणाशा** राक्षसावासभूतेत्येतमल्पं दोषम् । 'एको हि दोषो गुणसंनिपाते निमज्जति' इत्याहुः । अयं तु दोषलेशः । यद्यपि अयं स्फुरितः, अथापि सह्यः । **गच्छन्नित्यनेन** आवासत्वस्यानिष्टत्वेऽपि कार्यार्थं गमनं नायुक्तमित्युच्यते ॥

(2) भगवता भुवि गुरुं प्रेषयता दक्षिणाशा गन्तव्येत्युच्यते । तत्र ह्यर्चारूपेण भगवान् सर्वत्रावतीर्णोऽस्ति । तत्र सिद्धान्ताभिवर्धने देवालया अपि रक्षिताः स्युः । अर्चापूजादिकं सम्यङ्निर्वर्तितं स्यात् । अज्ञा अपि क्षेत्रवासगौरवात् तदा मुच्येरन् । तत्रतत्राऽऽविर्भूतया मूर्त्या पाल्यमानत्वात् । गच्छेत आचार्यस्याप्यर्चावतारसेवालाभो महान् । चन्दनाद्युपकरणभूयिष्ठत्वाच्चाराधनसंपत्तिः । **मुक्ताः** मोक्षं गता बहवो भगवन्नियमनादाविर्भवन्तीति तेषामासूतिश्च । तथा मुक्ततापादिका च । एवं **आसूतिः** पुनर्जन्म यत्र मुक्ता भवति, तादृशी । किञ्चेयं दक्षिणाशा नित्यविभूतितुल्या । सा ह्यप्राकृतभोग्यभोगस्थानभोगोपकरणसमृद्धत्वात् स्थानैर्दिव्यैरुपचितगुणा । **चन्दनारण्यरम्या** । 'एतदरण्यायनमित्याचक्षते', 'अरश्च ण्यश्चार्णवौ तृतीयस्यामितो दिवि' इति **छान्दोग्योक्ततया** अरेण ण्येन चार्णवेन रम्या सा । तथा नित्यसूरिनित्यसेविता भवन्ती **मुक्तानां** मुक्तिभाजामासूतिः उत्पादिका चेति । मातृत्वञ्च तस्याः ज्ञानविकासस्थानतया चैतन्यस्तन्यदायितया लक्ष्मीतुल्यत्वात् । **मलयमरुताम्**— मलस्य पापादेः **यमः** बन्धनं संकोचः येन रुतेन वेदवेदान्तघोषेण तद्विशिष्टाम् । सर्वदेशदशाकालव्यापनार्हविशिष्टाद्वैतसिद्धान्तस्थापनाचार्यपरिषदाविर्भावकत्वात् सर्वमाता चेयमाशा । आर्यावर्तः पिता । अत्र ते गमनं, "प्रियाय मम विष्णोश्च देवदेवस्य शार्ङ्गिणः" इत्युक्तरीत्या अस्मत्प्रीतिकरम् । **जनकतनयेति** । एकस्य पुरुषस्य वैष्णवत्वसिद्धौ तज्जनकाः पूर्वे पुरुषाः, तत्तनयाः उत्तरपुरुषाश्च **आ** सम्यक् **जीवितम्** उज्जीवनं लभेरन् । अत आसुरराक्षससञ्चारदेश इति दोषलेशः सह्यः । दिगन्तरेषु एतावद्गुणाभावात् एतद्दोषसत्त्वाच्च तत्र गमनमसह्यं स्यादपि ; न त्वत्रेति । ननु तत्र शैवाद्वैताद्यनेकमताभिनिविष्टासंख्यजनभरितत्वात् कथं कार्यसाफल्यम् तत्राह वाचालानामित्ति उत्तरश्लोक एतस्मिन्नर्थे अवतारयितव्यः ॥ ९ ॥

वाचालानामिव जडधियां सत्कवौ दूरयाते
कैलासाय त्वयि गतवति क्षीबतामाश्रितानाम् ।
संमोदस्ते पथि परिणमेत् चन्द्रकैरुज्झितानां
मेघापाये विपिनशिखिनां वीक्ष्य वाचंयमत्वम् ॥ १० ॥

ननु मनुष्यविरोधिराक्षसभूयिष्ठत्वं न मे विशिष्य क्लेशाय । मज्जातीयानां मयूरपक्षिणां मेघमाद्रियमाणानां स्थानमिदमिति मे तत्रारुचिरित्यत्राह **वाचालानामिति** । **वाचालानां** बहुगर्ह्यवाचां **जडधियां** यथावद्विषयाग्राहिज्ञानानां मूढमनसां वा **सत्कवौ दूरयाते** ब्रह्मज्ञानित्वसदाचारसंपन्नत्वकवित्वाद्याश्रयपुरुषासंनिधानावसरे **क्षीबतां** गर्विष्ठतां गतानां सत्कविसांनिध्ये सति परैरसत्कृतत्वात् चन्द्रकैरुज्झितत्वं भवति । चन्द्रशब्दः स्वर्णवाची । कशब्दोऽल्पार्थः । ईषत्सुवर्णदानेनापि सत्कृता न भवन्ति । तथा स्वर्णरेखापरिष्कृतवस्त्रकम्बलादिसत्कृताश्च न भवन्ति । ततस्ते **वाचंयमाः** मूका इव बद्धवाचो भवन्ति। यथैतत् , तथा हे राजहंस! त्वयि **सत्कवौ** समीचीने उत्कृष्टे जलपक्षिणि मानसादरेण **कैलासाय** गतवति, मेघप्रचारात् क्षीबतां प्राप्ताः **विपिनशिखिनः** वनमयूराः । तेषां हि **जडे** जलमये मेघे धीः । ते घोरकेकाशब्दरटनेन के? काः? इति स्त्रीपुरुषभर्त्सनात् वाचालाश्च । तेषां **मेघापाये** शरदि, 'यत् सत् तत् क्षणिकं यथा जलधरः' इति प्रसिद्धक्षणविशरणस्वभावानां चपलाश्रयाणां जल(ड)धराणां रसदानशक्त्यपाये चन्द्रकैरुज्झितत्वं वाचंयमत्वञ्च भवति । चन्द्रकबर्हयोरीषद्भेदात् बर्हमप्युपलक्ष्यम् । "त्यक्त्वा वराण्यात्मविभूषणानि बर्हाणि" इति बर्हत्यागस्यापि प्रसिद्धत्वात् । तद् वीक्षमाणस्य ते **पथि**-यत्र केकिनस्तस्मिन् मार्गे **संमोदो** वर्धेत । अत्र वीक्षणकर्तृत्वं हंसस्य, **परिणमेदिति** परिणामकर्तृत्वं तु संमोदस्येति समानकर्तृकत्वाभावात् क्त्वाप्रत्ययो न भवेत् । अतो वीक्ष्य **भवतस्ते** इति भवनक्रियासमानकर्तृकत्वेन तदुपपत्तिर्भाव्या । तेन तद्वीक्षणमात्रेण हंसस्य सत्तालाभः संमोदश्चेत्युभयम् उक्तं भवति । **विपिनशिखिनामित्येतत् वाचालानामपि** विशेषणम् । **शिखी**-अग्निः । दावाग्निसदृशानामित्यर्थः । **मेघशब्दः** 'मिह सेचने' इति व्युत्पत्त्या वदान्यपरः । तस्य (सत्कवेः) इति पदमध्याहार्यम् ।

तदयमन्वयः-सत्कवौ दूरयाते क्षीबतामाश्रितानां वाचालानां विपिनशिखिनां मेघापाये चन्द्रकैरुज्झितानां जडधियां वाचंयमत्वं वीक्ष्य वर्तमानस्य तस्येव, त्वयि कैलासाय गतवति क्षीबतामाश्रितानां वाचालानां मेघापाये चन्द्रकैरुज्झितानां विपिनशिखिनां वाचंयमत्वं पथि वीक्ष्य भवतस्ते संमोदः परिणमेदिति ॥

(2) **वाचालानामिति** कवित्वाभाव उच्यते, **जडधियामिति** सत्त्वाभावः । सत्कवेः सत्त्वं प्राज्ञत्वम् । कवित्वं प्रतिभावत्त्वम् । तल्लक्षणं तु, "स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता ॥ प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः" इत्युक्तम् । **त्रैकालिकीत्यनेन** स्मृतिमतिबुद्धित्रयमेलने प्रज्ञात्वं ज्ञायते । प्रज्ञाविशेषः प्रतिभेति च स्वरसतो भाति । तत्तन्मतपोषकदुरभिमान्याश्रयबलात् क्षीबतामाश्रिताः सत्कव्यभावकाले स्वगताज्ञानानुरूप-

वाचालताभाजः विशेषतः सत्कृता अपि प्रमाणशरणसत्कविसमागमे संपन्ने तैरभिमानिभिरपि यथावत् सत्कृता न भवेयुः । अतो वाचंयमा भवेयुर्हे हंस ! त्वदागमने । तदा तदधीनलोकक्षोभशान्त्या क्षीरनीरविवेकावसरवीक्षणेन ते संमोदः स्यात् । 'मोदेत साधुरपि वृश्चिकसर्पहत्या' इति श्रीभागवतम् । अतो भट्टनाथ इव परत्वस्थापनेन परमतविमर्दनेन प्रतिष्ठितसत्पथो भवेति गुरुं प्रति भगवदुपदेशः ॥ १० ॥

**आरक्तानां नवमधु शनैरापिबन् पद्मिनीनां**
**कालोन्निद्रे कुवलयवने घूर्णमानः सलीलम् ।**
**खिन्नो दानैर्विपिनकरिणां सौम्य सेविष्यते त्वाम्**
**आमोदानामहमहमिकामादिशन् गन्धवाहः ॥ ११ ॥**

एवमनिष्टनिवृत्तिरुक्ता । अथेष्टप्राप्तिरुच्यते **आरक्ताना**मिति । यद्वा विरोधिनां वाचंयमत्वं प्रागुक्तम् । अथ महाभागवदान्यमहनीयसेव्यत्वमप्युच्यते । गन्धवाहः वातस्त्वां **सेविष्यते** प्राप्स्यति सेवां करिष्यति । गन्धवाहविशेषणानि, **आपिबन् घूर्णमानः, खिन्नः, आदिशन्** इति । प्रथमपादेन अहनि मारुतसेवोच्यते, द्वितीयेन रात्रौ, तृतीयेन कालद्वयेऽपि । **आमोदाना**मिति उक्तानां त्रयाणामनुक्तानाञ्च ग्रहणम् । सर्वगन्धसमाहारत्वात् **गन्धवाह** इत्यन्वर्थं नाम । दिवा **आरक्तानां** पद्मानां समन्ततो विकासात् रक्तरूपाणां **पद्मिनीनां** पद्मलतानां नवं **मधु** मकरन्दं **शनैः** अवेगेन **आपिबन्**, पूर्णं पिबन्, स्वीकुर्वन् । इदं गन्धस्याप्युपलक्षणम् । **काले** नक्तमुन्निद्रे विकसिते कुवलयवने **सलीलम्** अनायासेन प्रीत्या **घूर्णमानः** संचरन् मधुगन्धौ धारयन्, **विपिनकरिणां** काननगजानां **दानैः** मदजलैः **खिन्नः** स्वेदवान् । मदजलबिन्दुव्याप्त इति यावत् । एषामन्येषाञ्चाऽऽ**मोदानां** गन्धानाम् । गन्धान् प्रति । **अहमहमिकाम् आदिशन्** अहं पूर्वम्, अहं पूर्वमिति गच्छतेति आज्ञापयन् । सर्वं तथा प्रेरयन्निति यावत् । **त्वां सेविष्यते** हे **सौम्य**-तथा सर्वसेव्यत्वानुगुणमहिमशालिन् शुद्धाग्रेसर ॥

(2) अत्र नायकसमाधिः । कश्चित् महान् **पद्मिनीनां** पद्मजातिस्त्रीणाम् **आरक्तानाम्**—स्वस्मिन् अनुरक्तानां नवमधु अधरमधु शनैः आपिबन् महाभोगी **कुवलयवने** कुवलयदृशां कटाक्षविसरे घूर्णमान कुभूमिः तद्वलये भूमण्डले स्वसंरक्ष्यमाणतया सम्यगुन्निद्रे घूर्णमानः । सम्यक् राज्यं प्रत्यवेक्षमाण इति यावत् । **खिन्नः**—मत्तगजप्रभृतिसर्वैश्वर्यसंततदानव्यापृततया खिन्नगात्रः वदान्यतमः । तव **आमोदानाम्** आनन्दप्रभेदानामहमहमिकयोत्पादने समुद्यतस्त्वां सेविष्यते । तत्र तत्र महाराजैर्मानितः परिचरितो भविष्यसीति प्रोत्साहनम् ॥

(3) सामान्यतो ब्राह्मणशिक्षणमात्रेण न पर्याप्तिः । प्रजापालकमहाराजशिक्षण एव प्रवर्तितव्यम् । तन्मुखेनैव सिद्धान्ताभिवृद्धिः । उपनिषत्सु राजान एव अधीतब्रह्मविद्याः भूम्ना लक्ष्यन्ते । तथा च सञ्चारशीलं त्वां भोगप्रवणा उदारा राजानोऽपि सेविष्यन्ते इति कर्तव्यं सम्यक् कृतं भवतीति सत्पुरुषप्रेरणमत्र भाव्यम् ॥ ११ ॥

**पर्याप्तं ते पवनचलितैरङ्गरागं परागैः**
**स्थाने कुर्युः समसमुदयाद् बन्धवो बन्धुजीवाः ।**
**येनान्वेष्यस्यचलतनयापादलाक्षानुषक्तं**
**चूडाचन्द्रं पुरविजयिनः स्वर्णदीफेनपूर्णम् ॥ १२ ॥**

पूर्वं मधुमदजललाभेन हंसस्य लब्धाहारप्राप्तिरुक्ता ; अथ तदनन्तरलब्धव्योऽङ्गराग उच्यते **पर्याप्तमिति** । **बन्धुजीवाः** तन्नामानो बन्धूकवृक्षाः **समसमुदयात्** भवत्समानसमृद्धिकत्वात् । **उदयः** उत्पत्तिः। **समुदयः**-अभ्युदयः। हंसानां शरत्काले इहाभ्युदयः। बन्धूकानाञ्च पुष्पसमृद्धिरूपाभ्युदयस्तदैवेति समसमुदयत्वात् बन्धुभूताः **पवनचलितैः** वायुनुन्नैः । णिजन्तात् निष्ठा । **परागैः** पुष्परजोभिः पर्याप्तं यथा तथा यावदपेक्षितम् **अङ्गरागं** अङ्गरञ्जनं चन्दनेनेव लेपं ते **स्थाने** उचितस्थाने, यत्र बन्धूकाः सन्ति तद्देशे **कुर्युः** । **स्थाने** इति साम्प्रतमित्यर्थेऽव्ययमिहेत्यप्याहुः । अनेन हंसस्य शिवशिरश्चन्द्रसाम्य मित्याह **येनेति** । **येन** परागलेपनेन, त्वम् **अचलतनयायाः** पार्वत्याः पादस्थया **लाक्षया** अलक्तकररसेन **अनुषक्तं** संबद्धम्, **स्वर्णद्याः** शिवशिरस्स्थितायाः गङ्गायाः **फेनेन** धवलेन डिण्डीरेण **पूर्णं** पूर्णचन्द्रतुल्याकारभाजं **पुरविजयिनः** त्रिपुरसंहारिणः शिवस्य **चूडाचन्द्रं** शेखरं चन्द्रम**न्वेष्यसि** अनुकरिष्यसि । हंसश्चन्द्रतुल्यः । तस्य बन्धूकपरागलेपः पार्वतीपादलाक्षारसलेपतुल्यः। शिवचन्द्रे तल्लाक्षालेपश्च प्रणयेन पार्वतीं प्रणमति शिवे संपद्यते । शिवचन्द्रस्य कलारूपत्वात् हंसे पूर्णचन्द्रसाम्यस्यैव युक्तत्वात् पूर्णतासंपत्तये तस्य गङ्गाफेनपूर्णत्वोक्तिः । पार्वतीपरमेश्वरयोरिवाऽऽवयोः सीतारामयोः संश्लेषस्त्वदधीनः । लाक्षारञ्जितः चन्द्रः पार्वतीश्वरयोर्घटकः। आवयोश्च त्वम् । तदा त्वां शिवश्चन्द्रमिव शिरसा धारयन् मानयिष्यामि । तदा सीतालाक्षारागोऽपि ते संभाव्यते । तेन ते चरणलौहित्यमाम्रेडितं स्यादिति च व्यज्यते ॥

(२) राजलोकसेव्यत्वमाचार्यस्य प्रागुक्तम् । बन्धुपरिवृतत्वमत्रोच्यते । **बन्धुजीवाः** सर्वविधबन्धुना भवता लब्धात्मोज्जीवनाः **बन्धवः** मिथो बन्धुभूताः महान्तः **समसमुदयात्** समानसमृद्धिकत्वात् **पवनचलितैः**—ध्वजपटपवननीतैः। **परागैः**। परागशब्दः कीर्तिवाची । पराक्रमप्रभवैः बहिर्बहुदूरगामिभिस्ते यशोभिः, त्वद्यशःप्रकाशैर्वाङ्मयैः स्वकृतैश्च हे **अङ्ग** !—प्रिय ! **स्थाने** समुचिते सिंहासनादौ ते पर्याप्तं त्वन्महिमानुरूपं **रागं** भक्तिस्नेहबन्धं **कुर्युः** । यशोधावल्यमहिमानं विशदयति **येनेति** । **येन** ईदृशयशःप्रसरणेन **अचलतनया** पार्वती, स्वपादलाक्षानुषक्तं स्वर्णदीफेनपूर्णं पतिशिरश्चन्द्रं कुत्रेत्यन्वेष्यति । इयं लाक्षा, अयं फेनः, अयं चन्द्रः इत्यादिविवेकमलभमाना सर्वथा यशसि चन्द्रतिरोधानाच्च कुत्रेत्यन्वेषणं करिष्यति, भवदीययशोधावल्येन सर्वस्याभिभवादित्यर्थः ॥ १२ ॥

**सूक्ष्माकारैर्दिनकरकरैः कल्पितान्तश्शलाकाः**
**शारोपान्ताः शतमखधनुश्शेषचित्रांशुकेन ।**
**ऊढाः पश्चादुचितगतिना वायुना राजहंस !**
**छत्रायेरन् नभसि भवतः शारदा वारिवाहाः ॥ १३ ॥**

संतर्पणाङ्गरागार्पणे उक्ते। छत्रेण परिचरणं पथि भवत् आह सूक्ष्मेति। राजहंसेति संबुद्धिः। शारदाः शरत्कालभवाः वारिवाहाः मेघाः। पूर्वं ये मेघाः घनकरकावर्षेण ते विरोधिन आसन्, त एव यथाकालं सर्वसारहान्या लब्धलाघवाः भवद्विरोधं परित्यज्य आनुकूल्ये व्यवसिताश्छत्रायेरन्। छत्रे या अन्तश्शलाकाः, ता अत्र मेघच्छत्रेऽपि। सूक्ष्मदीर्घसूर्यकिरणानां तत्र निविष्टानां शलाकावद्भावात्। वर्षात्ययात् पूर्णेन्द्रधनुःप्रसक्त्यभावात् तत्खण्डा इतस्ततः परितो विशीर्णाः पर्यन्तव्यापिविचित्रपट-वल्लक्ष्येरन्। इन्द्रधनुःखण्डा एव चित्रवर्णान्यंशुकानि। तैः शारः चित्रवर्णः उपान्तः पर्यन्तप्रदेशो येषा मिति शारोपान्ताः। एतच्छत्रधारी क इति चेत्–वायुरेव। पश्चादुचितगतिना इत्यनेन अनुकूलमन्द-मारुतकथनात् कार्यसिद्धिर्व्यज्यते ॥

(2) सिंहासनादावुपवेश्य यशःप्रकाशनं प्रागुक्तम्। छत्रधारणमपि शिष्यादिभिर्गुरोः क्रियमाण मथोच्यते। हे दिनकर! तेजस्विन्! हे क्रतुसख! नानाविधयज्ञानुष्ठायिन्! राजहंस! पश्चात् तदनन्तरम् उचितगतिना समुचितज्ञानसंपदा वायुना चेतनेन। "वायुरनिलममृतम्" (ई उ.) इत्यत्र वायुशब्दो जीववाची। ऊढाः आनीताः शारदावारिवाहाः। शारदा सरस्वती। तद्वारिणः तद्वारकाः तेषां वाहाः तदपनेतारः वाक्प्रचारविघ्नभञ्जनव्यग्राः ते छत्रायेरन्। छत्रायमाणाः छात्राः; आचार्यतापहरत्वात्, आचार्यदोषच्छादकत्वात् आचार्यत्राणकर्तृत्वाच्च। तथाच छात्रा भवेयुः। ते शिष्या भवेयुरित्यर्थः। कीदृशास्ते। तदाह सूक्ष्मेति। सूक्ष्माकारैः वासनारूपेण परिणतैः कर्मभिः कल्पिताः अन्तः हृदये शलाकाः हर्षशोकशंकवो येषां ते। सुखदुःखविषयविचारव्याप्ता इति यावत्। तथा विचित्रांशुकविविध-वेषनानाविधपरिवारपरिवृताः लोकप्रवणाश्च। एतादृशा अपि, हंसस्य मेघवत्, आस्तिकप्रतिकूला अपि उचितगति महाजनरूपवायुनेतृकत्वात् यथावत् छात्रीभवन्तीति यावत् ॥ १३ ॥

द्रक्ष्यस्येवं प्रियसख सुखं लङ्घिताध्वा सखीं ते
सीतां क्षेत्रे जनकनृपतेरुत्थितां सीरकृष्टे।
गोपायन्ती तनुमपि निजां या कथञ्चिन्मदर्थं
भूमौ लोके वहति महतीमेकपत्नीसमाख्याम् ॥ १४ ॥

एवं लंकागमनपर्यन्तं गन्धवह–बन्धुजीव–शारदवारिवाहविहितसपर्यासंतुष्ट एव गमिष्यसीत्युक्त्वा लंकायां कर्तव्यं यत् तदाह द्रक्ष्यसीति। हे प्रियसख! एवम् उक्तप्रकारेण सुखं सानन्दं लंघिताध्वा त्वं ते सखीं लंकायां पश्य। सखीं ते। उक्तं हि सीतागतिमनुगते तद्दुकूलांकमूर्तौ तन्मञ्जीरप्रति-मनिनदे इति समानगुणकत्वम्। सीतेति तस्याः नामकरणे कारणकथनव्याजेन तस्या महिमानं ज्ञापयति क्षेत्रे—यज्ञकर्मव्यापृतस्य जनकस्य राजर्षेः यज्ञक्षेत्रे करिष्यमाणयागशेषतया सीरेण हलेन भूकर्षणे लाङ्गलपद्धतेः सीताख्यकृष्टभूरेखात एवोत्थिताम् अत एव सीतां तथानामधेयाम्। नन्वेवं स्वयं भूमे-रुत्थिता स्वयमेव तत्र लीना भवेच्चेत्, किं मया तत्र गमनेनेत्यत्राह गोपायन्तीति। या सती निजा-

**मपि तनुम्** । लोके हि तस्य तस्य शरीरं तत्तदिष्टविनियोगार्हतयैव सृष्टम् । स्वार्थे शरीरस्याऽऽवश्यकत्वे सति स्वप्रयोजनायैव स्वशरीरेण परकार्यमपि क्रियते । इयं पुनः पतिव्रतालक्षणं परिशील्य तच्छरीरमपि स्वशेषत्वं विना पतिशेषत्वेनैव भावयन्ती **मदर्थम्** मम तच्छरीरं भोग्यतयेष्टमिति मद्भोगानुपरोधाय **कथञ्चित्** परपीडादिकं सोढ्वाऽपि, मदाज्ञां विना प्राणत्यागो न युक्त इति विमृश्य सप्राणं गोपायति । यद्यपि क्लेशेन **तनुस्तनुतामेव** प्राप्ता, अथापि न त्यजति । अतो न तत्सद्भावे संदेग्धव्यमिति भावः । **एकपत्नीसमाख्याम्**—एकः पतिर्यस्याः सा **एकपत्नी** पतिव्रतेति प्रख्याम् । एकस्य पत्नी **एकपत्नी**ति विग्रहे एकेन पुरुषेण सह यज्ञे कर्तृभूतेत्यर्थः स्यात् । तावता पातिव्रत्यरूपोऽर्थो न लभ्येत । इयं समाख्या पुरुषान्तरमनिष्ट्वा प्राणवियोजने कृतेऽपि लभ्येत । ततो नावश्यं भूमौ लोके स्थित्वा वहेत् । अत्रैव यदेनां समाख्यां वहति, तदपि मदर्थमेव । अस्या एतत्समाख्याप्रथनस्य सर्वलोकसंबन्धित्वात् कथं **भूमौ लोके** इतीति शंका इदानीमपास्ता । भूमौ स्थित्वेति विवक्षितत्वात् । यद्यपि तपोबलेनेयं निजतनुविशिष्टतयैव दिवं गत्वा मदर्थं तनुं गोपायितुं शक्ता, अथापि असंदेशात्तु रामस्य मे, 'शरैस्तु संकुलां कृत्वा मां नयेत् तत् तस्य सदृशम्' इति मत्या च दिवमगत्वा भूम्यन्तरप्यप्रविश्य भूलोके सर्वसमक्षं तनुं **गोपायन्ती** प्रतीक्षमाणाऽस्ति । तस्मादियं समाख्या **महती** आसीत् । अत एव सीतायाश्चरितं महत् । असंकटे पातिव्रत्यं सुरक्षम् । पतिव्रतात्वेन प्रसिद्धानामीदृशी सुदीर्घा संकटपरिस्थितिः कुत्रापि न श्रुता । तस्मादियं महती । यद्येवं भवतो निश्चयः, तर्हि, 'जनकतनयाजीवितार्थश्च गच्छन्' इति कथमुक्तमिति चेत्—मद्वृत्तमविज्ञायैतावतो मासान् जीवितवती यतः, अतो मदर्थं जीवतीति सुनिश्चितम् । तथापि तदीयक्लेशानामिदानीं मया सुज्ञातत्वात् तदसहनेनाऽऽत्मधारणमहं न लभेयेति भीत्या सा किं तनुं त्यजेदिति मम शंकेति मन्यस्व । न तस्याः पतिव्रतेति ख्यातिः परमोद्देश्या ; किं तु मदर्थं तनुगोपनम् । अर्थसिद्धारिति त्वानुषङ्गिकी ख्यातिः ॥ भूमौ लोके तनुं गोपायन्तीत्यन्वयो वा ॥

(2) आचार्यं प्रेषयन् भगवान् तत्फलं परमं तावदाह । यद्यपि, 'चतुर्विधा भजन्ते माम्' इति मदभिसंधिमालक्ष्य ऐश्वर्यकैवल्यप्रवणेभ्योपि मत्स्वरूपमाचार्येण भवतोपदेष्टव्यम् । पूर्वोक्तरीत्या फलान्तरसक्ता अपि परस्सहस्राश्छात्राः उपसीदेरन् । अथापि यो हि परमैकान्ती, "मम नाथ यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव" इति निष्ठां लभेत, तादृशपुरुषधौरेयदर्शनशिक्षणादिकमेव भवतः परमं कार्यम् । अवश्यञ्च तादृशं बहुविधप्राणिसंकुले भूमौ लोके त्वं द्रक्ष्यसि । स महात्मा सुदुर्लभः । सर्वस्यात्मभूतस्य ममाप्यात्मा स हि महात्मा । स पतिव्रतातुल्यत्वात् मया महिषीत्वेन भाव्यते । समीचीने क्षेत्रे यथावत्कर्षणादिनैव स संपाद्यः ॥ १४ ॥

**प्रक्षीणां त्वद्विरहसमये जातहर्षामिदानीं**
**प्रत्यायास्यन् अनुनय शनैः पद्मिनीं स्वादुवाचा ।**
**सा ते तन्त्रीस्वनसुभगया स्यादितीहाभ्यनुज्ञां**
**मन्ये कुर्यान्मधुकरगिरा मैथिलीसौहृदेन ॥ १५ ॥**

ननु त्वद्विश्लेषव्यथितायास्त्वत्पत्न्या आश्वासनार्थं मां प्रार्थयसे, तर्हि मद्विश्लेषव्यथा मत्प्रियां पद्मिनीमाक्रामेदित्यत्राह **प्रक्षीणामिति**। सखे! **पद्मिनी** पद्मलतेयं ते प्रिया त्वद्विरहसमये व्यथया वर्षधाराहत्या च प्रक्षीणाऽऽसीदिति मया प्रतिदिनं लक्षितैव। अथापीदानीं त्वत्संगमं प्राप्य जातहर्षेति संतुष्यामि। न हीतः परं पूर्ववत् बहुकालमेनां त्यक्ष्यसि। क्षणेन मह्यं सीतावृत्तान्तकथनार्थं प्रत्यागमिष्यस्येव। तदपि वदन् एनामनुनय। अस्या अनुज्ञालम्भने यतस्व। **स्वादुवाचा** मधुरया वाचा वाक्येन। सख्योः सीतारामयोः पीड्यमानयोः तद्दुःखं स्वदुःखत्वेन भावयतोरावयोः संगमे किं सुखमस्ति; अतो गत्वा कुशलमावेद्य अस्मिन्नेव दिने प्रतिनिवर्तिष्ये इत्यादिकं यथावद्ब्रूहि। **शनैः** मन्दं मन्दमनुनय। तावदहं प्रतीक्षे। तूष्णींभूतायां तस्यां मया किं कार्यमित्यत्राह **सेति**। संनिहिताऽपि पद्मिनी सेत्युच्यते, अपवार्य संभाषणात्। **स्यादिति**, तथाऽस्त्विति **अभ्यनुज्ञाम्** अंगीकारम् **इह** प्रकृतविषये **कुर्यादिति** मन्ये। तस्याः वाक् च मधुकरगीरेव। **मधुकरगीश्च** भ्रमरवाक् मधुस्यन्दिनी गीर्भवति। सा गीर्न निषेधरूपा, किं तु अनुमतिरूपेति कथं ज्ञायते चेत्—तन्त्रीस्वनवत् **सुभगा** भोग्या हि गीः। तत् कथं तस्याः निषेधरूपत्वम्। तन्त्रीस्वनवत् वचनादत्यन्तेष्टत्वमेव। अपरिचितविषयेऽपि सा संमन्येत। मैथिलीसौहृद सत्त्वात्तु अत्र न संशयः। मैथिल्यां तस्याः सौहार्दञ्च प्रतिदिनं तद्विरहतत्समदीक्षणादेव जातम्। यथाऽहं मत्प्रियस्य हंसस्य दूरे स्थित्वा विषीदामि, तथा प्रियमेतं विहाय स्थिता मैथिली कथं स्यादिति सा नूनं मतवती मन्वानैव स्यात्। अनवरतं क्वापि पद्मानि जलक्रीडायामाहरन्ती धारयन्तीं च सेति, साक्षादस्मत्पद्मवासिन्येवेति, पद्मिनीजातिरिति च तस्यां सौहृदम्। किञ्च तस्यास्त्वत्सखीत्वात् त्वत्प्रियाया अपि सा सख्येव तव मैथिलीसौहृदमप्यत्र हेतुः; मत्प्रिया च यथा गुहस्य, तथा ते सख्येवेति प्रागेवोक्तमिति। तामननुनीय तु त्वया न प्रस्थातव्यम्। विरहव्यथा ह्यसह्या तदा स्यात्॥

(२) आचार्ये अन्यत् स्थलमुद्दिश्य प्रतिष्ठमाने तत्रत्या शिष्यगोष्ठी लब्धव्योपदेशापूर्त्या भक्त्या चावश्यमेवावसीदेत्। तदा दयालुना गुरुणा अत्यन्तार्तजनरक्षणरूपमहाकार्यहेतोः प्रस्थानं रोचयता सा गोष्ठी आश्वासनीया। कार्यनिवृत्तिसमन्तरमेव प्रत्यायातव्यञ्चैतद्गोष्ठीमनुग्रहीतुमित्यर्थ इहोपदिष्टो भवति॥ १५॥

> साधं कान्तैः शबरसुदृशामद्रिकुञ्जेषु रागात्
> आसीनानां क्षणमसमये दृश्यचन्द्रोदयश्रीः।
> उड्डीयेथाः सरसिजवनाद्दक्षिणाशानुसारी
> पश्यन् दूरात्प्रबलगरुतां पक्षिणां दत्तवर्त्मा॥ १६॥

अथ लब्धपद्मिन्यभ्यनुज्ञानस्य तस्मात् सरसः प्रस्थानं प्रार्थ्यते। गन्तव्यदिङ्मात्रकथनमत्र। विशिष्य देशानां निर्देशः क्रमेणोपरि। त्वं **सरसिजवनादस्मात् उड्डीयेथाः**—उपरि गच्छ। डीङ् विहायसा गतौ। अस्य भौवादिकत्वे डयेथा इति रूपम्। दिवादिपाठानुसारात्त्विह **डीयेथा** इति। प्रस्थानकाले

स्य सानन्दपरदर्शनगोचरत्वं मङ्गलदर्शनञ्च शुभकरमिति तदुच्यते सार्धमिति । रागात् अनुरागात् कान्तैः स्वप्रियैः सार्धं सह अद्रिकुञ्जेषु माल्यवदादिपर्वतलतागृहेषु शबरसुदृशां - शबरजातिस्त्रीणाम् । आसीनानाम्—उपविश्य स्थितानाम् । अहनि शयनायोगात् आसीनता । कान्तविश्लेषासहिष्णुतया रागात् तत्साहित्येनोपवेशः । शुभकूपदं तासां दृक्साफल्यं शुभनेत्रदृश्यमानतया शुभत्वञ्च दर्शयति । असमये— चन्द्रदर्शनप्रसक्तिरहितकाले । चन्द्रोदयस्थानभिन्नस्थले इति चाभिमतम् । क्षणम् एकक्षणकाले दृश्यचन्द्रोदयश्रीः तासां कान्तैः सार्धं दृश्या—दर्शनीया चन्द्रोदयशोभा यस्मिन् सः-उदयचन्द्र इव शबरस्त्रीपुंसदृश्यस्सन्नित्यर्थः । कथमसमये असदृभोगानवसरे चात्र चन्द्र इति ते परस्परं सल्पेयुरिति भावः । अनेन शुभदम्पतिकर्तृकं दर्शनमुक्तम् । पश्यन्–त्वमपि ताः पश्यन् । अनेन मङ्गलनिरीक्षणमुक्तम् । पक्षिणः पश्यन्नित्यर्थलभ्यार्थोऽप्यस्ति । दूरात् पक्षिणः पश्यन् । पञ्चमी सप्तम्यर्थे । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति चकारेण पञ्चम्या अपि ग्रहणात् । प्रकृतस्थले पञ्चम्यर्थग्रहणमपि संभवति । दृश्यवस्तुनः द्रष्टुः पुरुषस्य च मिथो दूरत्वात् दूरपदेन दृश्यापेक्षया दूरभूतहंसदेशग्रहणे ततः प्रख्याप्यमानस्य चाक्षुषरश्मेस्तदपादानकत्वसंभवात् । द्रमिडभाषाप्रयोगरीत्या पञ्चम्या हि, तत्र स्थित्वेत्यर्थः। दूरे स्थित्वा पश्यन्—किं मार्गे कोऽपि प्रबलः पक्षी आयातीति गन्तव्यमार्गं पश्यन्, यदि प्रबलगरुतः स्थूलपक्षाः पक्षिण आगच्छेयुः, तदा तेभ्यो दत्तवर्त्मा दत्तं वर्त्म येन सः वर्त्म--मार्गं प्रदाय । अन्यथा तेषां प्रबलत्वात् ते गतिप्रतिहतिः स्यात् । ननु "आद्यः पन्थाः कुलिङ्गानाम्" इत्यादिना सर्वोपरि हंसगमनात् कथमन्यमूलप्रतिहतिशंकेति चेन्न—'षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा' इति हंसस्योपरि गरुडस्य गमनकथनात् । वस्तुतः इतरापेक्षया ऊर्ध्वं गन्तुं समर्थस्यापि प्रस्थाने किञ्चिद्दूरं वा अन्यदाऽपि वा नीचैरपि गमनसंभवात् । प्रबलगरुत्पक्षिमार्गत्यागस्य कार्यत्वात् । भूमेरनतिदूरे आकाशे गमने क्रियमाण एव गन्धवहादेः दिव्यदेशसेवादेश्च प्राप्तिः सुकरा । उड्डीयेथाः । उदित्युपसर्गः सरसिजवनस्योपरीतिवत् इतरपक्षिगमनपथस्योपरीत्यर्थमपि दर्शयेत् । चन्द्रस्यासमये दृश्यत्ववत् अस्थाने दृश्यत्वाकथनात् दूरे गमनमपि सूच्येत । अथापि नीचैरपि गमनमिष्टम् ॥

(2) अत्र श्लोके आचार्यके प्रवृत्तस्य सर्वस्यार्थकामप्रावण्याभावः अतिशयितज्ञानकर्मपूर्णेषु भागवतेषु प्रावण्यञ्चाऽऽवश्यकमिति ज्ञाप्यते । कान्तैः साकं शबरसुदृश आसीना इत्यनेन अविवेकिजना इन्द्रियकिङ्कराः निरन्तरानुवर्तमानकामभोगा उच्यन्ते । तैश्चन्द्रवत् उपरि दृश्य इत्यनेन, 'नास्ति संगतिरस्माकं युष्माकञ्च परस्परम्' इति भावेन तद्दूरवर्तिना भाव्यमिति ज्ञाप्यते । सरसिजवनात् इत्यनेन ऐश्वर्यस्य त्याज्यत्वोक्ता । दक्षिणाशानुसारी । अर्थकामप्रवणा अदक्षिणाः। लोके सर्वे दक्षिणा भवन्तु, सव्या मा भवन्तु, अनुकूला भवन्तु, प्रतिकूला मा भवन्तु इत्याकारिका या भगवत आशा—इच्छा, तदनुसारी-तत्पूरणशीलः स्यात । एवं कार्ये प्रवृत्तेनापि महान्तो गौरवयितव्याः । तेषां वर्त्म दातव्यम् । यथा पथि गच्छता पुरुषेण पुरतो राज्ञि वा ब्राह्मणे वा अन्यस्मिन् गौरवयितव्ये वा याने वा गर्भिण्यादि-

स्त्रीजने वा समायाति सति तदर्थं पन्थानं विहाय पार्श्वे गम्यते । **प्रबलगरुतः** = स्वापेक्षयोत्कृष्टकर्मज्ञानरूपपक्षद्वयभाजः **दक्षिणः** = तत्तदाराध्ये भगवति चात्यादरवन्तो ये भवन्ति तेषां गतेरविरोधेन तत्पार्श्वगामिना भाव्यं नूतनाचार्येणेति तथा स्थित्वा कार्ये त्वरितव्यमिति ॥ १६ ॥

**अङ्गीकुर्वन् अमृतरुचिरामुत्पतिष्णोः सलीलं**
**छायामन्तस्तव मणिमयो माल्यवानेष शैलः ।**
**शोभां वक्ष्यत्यधिकललितां शोभमानामतीन्दोः**
**देवस्याऽऽदेरुपजनयतो मानसादिन्दुबिम्बम् ॥ १७ ॥**

सरसि दृष्टो हंसः सरसिजवनात् प्रस्थानं प्रार्थित आसीत् । ततः सरसो दक्षिणमार्गे स्थितो **माल्यवान्** नाम शैलः प्राप्यो लंघनीयश्चेत्युच्यते अंगीकुर्वन्निति । स्वस्थानतयाऽतिसंनिहितत्वात् **एष** इत्युक्तिः । माल्यवांश्च किष्किन्धाकाण्डे (२८) कथितः, "स तथा वालिनं हत्वा सुग्रीवमभिषिच्य च । वसन् माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत्" इति । ततः प्रागुक्तम् , "आजगाम सह भ्राता ततः प्रस्रवणं गिरिम्" इति । सर्वोऽयमृश्यमूकप्रान्तदेशः । अत्र श्लोके उत्पतिष्णोः अतीन्दोस्तव छायां मणिमयः शैलोऽङ्गीकुर्वन् शोभां वक्ष्यतीत्यन्वय इत्यंशो व्याख्याकृदादृत एव । परंतु उत्तरार्धे मानसादिन्दुबिम्बं जनयत आदेर्देवस्य शोभमानां शोभां वक्ष्यतीत्यन्वयः तद्दर्शितः। वक्ष्यतीति वहधातोर्लृटि रूपम् ; न तु वचधातोः। तथान्वये शोभायाः **शोभमानत्वोक्तिर्न** रुचिरा । अधिकेति पदञ्चावधिसापेक्षम् । तत्र अवधिर्नोक्तो भवति । अतीन्दोरिति हंसविशेषणस्य प्रयोजनमपि न ज्ञाप्यते इति चिन्त्यते । अतः **उपजनयत** इति पञ्चमी । **शोभमानामिति** पदं पूर्वार्धे **छायामि**त्यनेनान्वेति ; यथा **अतीन्दोरि**ति पदं तत्रैव छायापदसमीपस्थे तवेत्यत्र । तथाच मणिमयः शैलोऽतीन्दोस्तव शोभमानां छायाम् **अन्तः** स्वमध्ये अङ्गीकुर्वन्, आदेर्देवस्य इन्दुबिम्बं जनयतो मानसात् अधिकललितां शोभां वक्ष्यतीत्यन्वयः। हंसच्छाया स्थलान्तरे पतिता यथा, तथैव माल्यवत्यपि चेत्—इन्दुबिम्बसाम्यमपि न लभेत ; कुत आधिक्यम् । अतः छायायां शोभमानामिति विशेषणार्पणम् । मणिमये पतन्ती छाया उज्ज्वलैव भवतीत्याशयः । यस्मात् राजहंसः अतीन्दुः-आकारे सौष्ठवे चेन्दुमतिशयितः, तस्मात् तच्छायावहमाल्यवच्छैलशोभा इन्दुबिम्बजनकान्मानसादतिशयिता भवति। तदुक्तम**धिकललिता**मिति पदेनेति सर्वपदसार्थक्यमिदानीम् । इन्दुबिम्बे अमृतमयत्वमस्ति ; हंसच्छायायां तन्नास्तीति शंकमानं प्रत्याह **अमृतरुचिरा**मिति । सर्वभोग्यत्वात् अमृतापेक्षयाऽपि रुचिरत्वमस्तीति भावः। **सलीलं** सादरमनायासम् **उत्पतिष्णोः**-साधु उत्पतनं कुर्वतः। तच्छीलरूपेऽर्थ इव तत्साधुकारिरूपार्थेऽपि तदनुशासनात् । ताच्छील्यरूपार्थस्वीकारेऽपि सरसिजवनात् प्रस्थितेन त्वया माल्यवति अस्थित्वा उत्पतनानुवृत्तिरेव कार्येत्याशयव्यञ्जनाय तत्प्रयोगः। पूर्वश्लोके चन्द्रसाम्यमुक्तम् ; अत्र ततोऽतिशयः। कस्य मानसमिन्दुबिम्बं जनयतीति प्रश्नं परिहर्तुं **देवस्याऽऽदेः** इत्युक्तम् । **आदेर्देवस्य** पुरुषोत्तमस्य । 'चन्द्रमा मनसो जातः' इति भगवन्मनस एवोत्पत्तिरुक्ता; न तु चतुर्मुखादिमनस इति भावः॥

(2) हे महात्मन्! इतः प्रस्थाय दूरं गच्छन्तं भवन्तमेतन्नेदिष्ठशैलादिवासिनो जनाः न विस्रष्टुमिच्छेयुः। अतस्तैरसह्यविप्रयोगैः मणिमयैः शुद्धानर्घस्वभावैः माल्यादिपूर्वकमागत्य ते छाया प्रतिकृतिः ग्राह्या। सा तावदमृतरुचिरा। जातानां प्राणिनां मरणसंभवेऽपि प्रतिकृतिर्हि बहुकालं स्थास्यति। तस्माच्छायालोपे किं कार्यमिति न क्लेशितव्यम्। या हि छाया न नश्येत्, सा गृह्यताममृतमयी। भगवता स्वमानसादिन्दुबिम्बं सृष्टम्, "पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः" इत्याशयेन। ओषधिमात्रपोषकचन्द्रापेक्षया त्वमतिशयितः; सर्वजनपोषकत्वात् ज्ञानप्रदानेनाऽऽत्मपोषकत्वाच्च। तवेमां छायां गृहीत्वा अत्रत्याः सर्वे पुष्टा भवन्तु, द्रोणाचार्यप्रतिकृतिपूजनेन एकलव्य इव, यावत्त्वदागमनमिति गुरुप्रेरणम्॥१७

मार्गौ सम्यङ् मम हनुमता वर्णितौ द्वौ तयोस्ते
सह्यासन्नोऽप्यनतिसुभगः पश्चिमो नित्यवर्षः।
प्राचीने तु प्रतिजनपदं संहतावद्भुतानां
मग्ना दृष्टिः कथमपि सखे मत्कृते ते निवार्या॥ १८॥

स्वस्थानं सरसिजवनं तन्नेदिष्ठं माल्यवन्तञ्च लंघितवता हंसेन येन मार्गेण गन्तव्यम्, तं मार्गं विशिष्योपदेक्ष्यन् तत्र मार्गद्वयसद्भावादेकतरस्य श्रेयस्तामाहत्याह मार्गाविति। हनुमता लंकां गत्वा प्रतिनिवृत्तेन स्वयं वानरत्वात् वृष्टिभूयिष्ठस्थलविषयारुचिमता द्वौ मार्गौ मम=मत्सन्निकटे सम्यक् वर्णितौ स्तः। अतो ज्ञात्वैव तत्रतत्र हिताहितं ते ब्रवीमि। तत्रैको मार्गः माल्यवतः पश्चिमः प्रतीच्यां स्थितः। अन्यश्च प्राच्याम्। तयोः पश्चिमः सह्यासन्नोऽपि सह्यपर्वतनेदिष्ठोऽपि। एवं सह्यः सहनीयः आसन्नः समीपप्रदेशो यस्य तादृशोऽपि। सह्यमतिलंघ्य त्वया गन्तव्यम्। स सह्यः पश्चिममार्गे शीघ्रपायास्यति। प्राच्यमार्गेण गमने स सह्यप्रान्तदेशः किञ्चिद्विलम्बेन लंघनीयः स्यादिति भावः। एवमासन्नस्य सह्यत्वेऽपि आसन्नत्वेऽपि नित्यवर्षः सर्वदावृष्टिमत्त्वादसह्यः ते वृष्टिविद्वेषिणः हनुमत इव अनतिसुभगः अधिकसुखरूपो न भवति। वानरैः शनैश्शनैर्गन्तव्यमासीत्। अतस्तद्विषये सुभगत्वाभावेऽपि शीघमाकाशे डयमानस्य न मे किञ्चिदिति न मन्तव्यं सखे। ईत् ते दुःखमपि मम दुःखाय। अतस्ते सोऽनतिसुभगः। अतिसुभगे पथि स्थिते किं तेन? सः हि आसन्नः इति वा पदच्छेदः। स हि—तत्र पश्चिमे यत्यत् यादृशं यादृशमस्ति, तत्तत् इदानीं स्मर्यत इति स्मर्यमाणसर्वाकारविशिष्टो हीत्यर्थः। आसन्नोऽपीति। स्पष्टम्। तेऽनतिसुभगः मत्कार्यैरप्रचमाले दृष्टौ क्रियमाणायां स मेऽतिसुभगः; तव न तथेति त्यजामीति च भावः। अनघसुभग इति पाठो न साधीयान्। नित्यवर्षत्वरूपे दोषे कथ्यमाने अनघत्वोक्तेः क्लिष्टत्वात्। ते इत्यस्यात्रान्वये औचित्यातिशयाच्च। तथैव पाठे तु अनघः प्राचीनमार्गवत् स्वदृष्ट्याकर्षकाद्भुतसंहतिमत्त्वरूपदोषरहितः अत एव सुभगः। एवम्भूतोऽपीत्यपिशब्दघटनेनान्वयः। अतो ममानुकूलत्वेऽपीति यावत्। सह्यासन्न इति पदं सह्यासन्नत्वात् नित्यवर्ष इति ज्ञापनार्थम्। स हि आसन्नोऽपीत्यन्वयश्चेष्टः।

अथ प्राचीनस्य श्लाध्यताम् तस्यातिसुभगत्वेऽपि प्रकृतकार्यानुरोधेन तावद्देशानुभवोपरतेरावश्य-

करत्वञ्चाऽऽवेदयति **प्राचीने त्विति** । **प्राचीने**—दक्षिणदेशं प्रति प्राग्दिशा गन्तव्ये मार्गे **प्रतिजनपदम्** जनसंघातस्थानभूते एकैकस्मिन्नपि देशे **अद्भुतानाम्** आश्चर्यवस्तूनां **संहतौ** संघाते--समुदाये **मग्ना** मज्जितुं प्रवृत्ता । आदिकर्मणि क्तः । **ते दृष्टिः** । यद्वा अद्भुतसंहतौ तत्रतत्र पूर्वं मग्ना ते दृष्टिः इदानीं प्रतिजनपदं निवार्येत्यर्थः। लोके सर्वेषां दृष्टिः तत्र जनपदे अद्भुतसंहतौ मग्ना भवति । तादृशी दृष्टिः ते मया निवार्या—तवाद्य मा भूदित्युच्यत इति वा । किञ्च मग्ना दृष्टिरेव ते मा भूदित्युच्यते ; न तु सर्वथा तद्दर्शनं वार्यते इति । मग्ना भवतु ; न तु निमग्नेति वा । किमर्थं निवार्यते तदाह **मत्कृते** मदर्थम् । अर्थे कृते इति द्वयमव्ययं चतुर्थ्यर्थवाचकम् । मम कृते इति व्यस्तप्रयोगोऽपि मदीयकार्यनिवर्तनाय गमने आगमने च त्वया त्वरितव्यम् । कथमिदं शक्यमिति चेत्--**कथमपि**--प्रयत्नातिशयेन । क्षीरनीरविवेकिनां नीरनैरपेक्ष्यात् नित्यवर्षस्थानं त्याज्यमित्युक्तम् । क्षीरप्राये भोग्यसंपन्ने देशेऽपि स्वल्पमेव भोग्यम् । हंसा हि सर्वेन्द्रियनिरोधनिपुणाः । अद्भुतसंहतिश्च **इक्षुच्छाय** इत्यारभ्य कियत्यपि दर्शयिष्यते ॥

(2) अस्यार्थान्तरं कवेरत्यन्ताभिमतमेवम्--भगवता गुरुं प्रस्थितं प्रति भक्तिप्रपत्तिरूपमार्गद्वयमत्र स्मार्यते । तत्त्वहितपुरुषार्थेषु हितापरिज्ञानाद्धि प्रायस्तत्त्वपुरुषार्थवेदिन एव सन्तोऽपि फलं न लभन्ते । **हनुमता** = वाङ्मयेन वेदरूपेण, स्मृत्यादिनिर्माणौपयिकवाक्पाटवसंपन्नेन महनीयसंघेन च **मम मार्गौ** = मत्प्रापकौ मार्गौ भक्तिप्रपत्तिरूपौ, "भक्त्या परमया वाऽपि प्रपत्त्या वा महामते । प्राप्योऽहं नान्यथा प्राप्यो मम कैङ्कर्यलिप्सुभिः" इति द्वौ वर्णितौ । अन्येषां क्षेत्रवास-शास्त्रार्थज्ञान-नामसंकीर्तन-कर्मयोग-ज्ञानयोगादीनां न साक्षादुपायत्वमिति भावः । तयोः **पश्चिमः** अनुकल्पभूतः प्रपत्तिरूपो मार्गः **सह्यासन्नः**, **सह्यः**—सोढव्यः **आसन्नः**— देहावसानपर्यन्तकालः यत्संबन्धी सः । प्रपत्त्या सञ्चितपुण्यपापराशेरिव अनभ्युपगतप्रारब्धस्यापि क्षपणात्, अल्पत्वात् शिष्टस्य, तस्य सह्यता । **अनतिसुभगः**—'भजनसुखमेकस्य विपुलम्' इत्युक्तभगवदनुभवसमृद्ध्यभावात् सौभाग्यहीनः । **नित्यवर्षः** ; अविवेकघनान्धदिङ्मुखे बहुधा संततदुःखवर्षिणि भवदुर्दिने विवेकं विना स्थितेः । अथवा **अनित्यवर्षः** निर्विघ्नकैंकर्यपर्यन्तहेतुभाग्यभाजां दुःखवर्षनैयत्याभावात्, उत्तराघस्य प्रायश्चित्तेन क्षपणे दुःखाभावात्, अन्यदा च दुःखसत्त्वात् अनित्यवर्षः। महनीयविषये तु भगवदनुग्रहभूमबलात् नित्यसुखवर्षश्च । एतादृशो मार्गः **ते** भवति-- त्वयोपदेश्यो भवति । अपिशब्दः सर्वविशेषणसमुच्चये । विरोधरूपार्थसंभवे अस्तु सोऽपि । **प्राचीने** मुख्यकल्पभूते महनीयप्राच्यसर्वसमादृते तु मार्गे स्थितस्य पुंसो बहूनि जन्मानि अवर्जनीयानि । "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इत्युक्तेः । अतः **प्रतिजनपदम्** । जनः जन्म । एकैकजन्मभूमावपि अद्भुतानां कौमारयौवनादिदशाभेदानुभाव्यानां संहतौ दृष्टिर्मग्ना भवेत् । न झटिति भगवदेकानुभवे प्रवृत्तिः स्यात् । स्वयं भक्त्यर्थमपि नानाकाम्यानि स कुर्यात् । अतः सा दृष्टिः **मत्कृते** मदेकप्राप्यकत्वाध्यवसायानपायाय त्वया कथमपि त्वदाश्रितेभ्यो निवार्या । तत्त्वाद्युपदेशे कृतेऽपि सर्वमभ्युपगम्य बहुजन्मप्रातिकामनां हृद्गतामनाविष्कृत्य, अनधिकारं प्रच्छाद्य अहं भक्तियोगमेव निर्वर्तयिष्यामीति

साहसे केचित् प्रवर्तेरन्, प्रवृत्त्य भग्ना भवेयुः । अतस्तत्र स्थितो दोषस्तेभ्य उपपादनीयः । तन्मुखेन तेषां विषयान्तरमज्जनं वार्यम् ।

पूर्वव्याख्याने द्वितीयपादोक्तस्य त्याज्यता । उपर्युक्तस्य मार्गस्य ग्राह्यता । अत्राध्यात्मरीत्या व्याख्याने विपरिवर्त इति विशेषः । अथवा भक्तियोगस्य कर्मयोगज्ञानयोगादिकम् अङ्गप्रपत्तिमनुष्ठाय पश्चादेव साध्यत्वात् पश्चिमत्वम् । प्रपत्तियोगस्य प्रागेव साध्यत्वात् प्राचीनत्वम् । भक्तियोगे चिरकाल-मासक्तं स्वस्योपनतं सर्वं दुःखमयं सह्यम् । रागद्वेषादिवर्षोऽधिकः । प्रपत्तौ प्रवृत्तेन तु अनेकजन्म-प्राप्तिसाध्यतत्तत्पदसंबन्ध्यखिलभोग्यानुभवाशा वारणीया । झटिति मोक्षप्राप्तिरस्त्विति त्वराऽवश्यमपेक्षितेति। तथा च द्वितीयपादेन त्याज्या भक्तिरेवोच्यते ; उपरि च प्रपत्तिरेवेति व्याख्येयम् ॥ १८ ॥

श्रुत्वा शब्दं श्रवणमधुरं तावकं पामरीणां
प्रत्यासन्नात् सपदि भवनात् सादरं निर्गतानाम् ।
अभ्रूभङ्गेऽप्यधिकसुभगैर्निश्चिताङ्गैः कटाक्षैः
देशान् एतान् वनगिरिनदीसंविभक्तान् व्यतीयाः ॥ १९ ॥

यदि अद्भुतसंहतिर्न द्रष्टव्या, तर्हि किं प्रस्थितेन मया क्वचिदप्यतिष्ठता एकप्रयत्नेन लंका गन्तव्येति प्रश्ने, 'यत्रयत्र दृष्टिः कार्या तत्तदवश्यं वक्ष्यते, श्रमपरिहारार्थं दिव्यदेशादिसेवार्थञ्च तत्र स्थितेरवर्जनीयत्वात् । अन्यत्र तु मा भूत् । तदितः प्रस्थितस्य विविधवनगिरिनदीसंविभक्तस्थानातिक्रमः प्रथमं मदर्थे कर्तव्यो भवति' इत्याह श्रुत्वेति । श्रवणयोर्मधुरं श्रवणमधुरम् । श्रवणपदं–श्रोत्रतृप्तिरासीत्, चक्षुःप्रीतिरपि संपाद्येति तासामभिसंधिर्भवतीत्याविष्कर्तुम् । पामरीणामिति । प्राकृतस्त्रीणामित्यर्थः । पामरपुरुषाणां तु ध्वनितदाश्रयहंसविषयश्रवणेपि दर्शनाद्यौत्सुक्यं न भवति ; अतिपामरत्वादिति भावः । भवनेषु मध्ये प्रत्यासन्नभवनस्थानां सपद्येव निर्गमनम्, ईषत्कालातिक्रमे दर्शनं न भवेदिति । शब्दं श्रुत्वा निर्गतानां शब्दकर्तृवस्तुदर्शनलालसानां पामरस्त्रीणां कटाक्षैः। कीदृशैः ? अभ्रूभंगेऽप्यधिकसुभगैः । भ्रुवो भंगः विक्षेपः उन्नमनम्, तदभावेऽपि । नागरिकस्त्रीणां भ्रूभंगः सहजः । आसां तु अद्भुतदर्शनेऽपि स न भवति । तावता कटाक्षसौभाग्यस्य न हानिः ; किन्तु आधिक्यमेव ; प्रीतिस्निग्धत्वात् । तथा च कालिदासः, 'भ्रूविकारानभिज्ञैः प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः' इति मेघं प्रति । लोचनानां भ्रूविकारानभिज्ञत्वमौपचारिकम् । अचेतने अभिज्ञत्वप्रसक्त्यभावात् । विकारशब्दाच्च भंगशब्दः श्रेयान् । भ्रूशब्दसाहचर्यञ्च तस्य सुप्रसिद्धम् ; अतः अभ्रूभंगेऽपीत्युक्तम् । तत्र पीयमान इत्युक्तपानकरण-त्वौचित्याय विस्तृताकारं लोचनमुक्तम् । अत्र सूक्ष्मे क्षणौचित्यात् कटाक्षपदम् । निश्चिताङ्गैः–अस्येद-मिदमङ्गमेवं भवतीति सर्वावयवनिर्धारणविषयभूतस्सन्। किमिमाः प्राक् हंसमेवाज्ञातवत्यः, उत ज्ञातवत्यः इति चेत्—अज्ञातत्वादेव दर्शनौत्सुक्यम् । अत एवांगानां निश्चयमात्रमुक्तम् । लोहितचञ्चुचरणत्वादिकं दृष्टम् ; हंसोऽयमिति विवेकस्तु नासीत्–इति केचित् । काकादिवत् अत्यन्तपरिचितत्वाभावेऽपि वनादि-

स्थानां वन्यादिवस्त्वपरिज्ञानायोगात् हंस इति ज्ञातवतीभिरेव तस्यात्यन्तं दर्शनीयतया महनीयतया च दर्शनार्थनिर्गमः एकैकावयवसंनिवेशनिश्चयार्थयत्नश्च घटत इत्यन्ये । एवं तासां दर्शनविषयो भव । तत्कटाक्षसौभाग्यमपि यथावसरं यथारुचि अनुभव । प्रीतेः कर्तव्यत्वात् । एतदधिकावश्यद्रष्टव्यवस्त्व भावात् देशानां वनगिरिनदीप्रायत्वात् एकेनैवोद्यमेनातिलंघितुमर्हसीति । **एतान्** माल्यवत्समीपस्थान् कर्णाटान्ध्रदेशतः पूर्वगम्यान् देशान् बहून् **व्यतीयाः** अतिलंघय ॥

(2) हे भक्ताग्रेसर । त्वया गमनावसरे ऐकान्त्यात् भक्तिभरेण मधुरगाननामसंकीर्तनादौ क्रियमाणे औत्सुक्यात् काश्चित् प्रजाः द्रष्टुं निर्गच्छेयुः । परंतु प्रत्यासत्त्यतिशयात् तासां भवनादौ सांसारिकेऽर्थे आदरोऽधिकः । तासां वेदशास्त्रकाव्यादिपरिचयाभावात् अनधिकृतत्वाच्च स्त्रीप्रायाणां त्वया कर्तव्य उपदेशः कोऽपि नास्ति । ता अपि त्वां स्वसहवासेऽयमप्रवृत्त इति निश्चिनुयुः । तदीयान् देशान् त्यज । द्रमिडैः पञ्चधा विभक्तायां भूमौ मरुप्रदेशवत् दुश्शिक्षजनभूयिष्ठाः वनगिरिनदीप्रदेशा अपि त्याज्या एव । यत्र गुरवः पूजिता भवितुमर्हन्ति, यत्र ज्ञानकर्मादिवासना वा समुत्कटाऽस्ति, तत्र देश एव स्थातव्यमिति ॥ १९ ॥

**इक्षुच्छाये किसलयमयं तल्पमातस्थुपीणां**
**संल्लापैस्तैर्मुदितमनसां शालिसंरक्षिकाणाम् ।**
**कर्णाटान्ध्रव्यतिकरवशात् कर्बुरे गीतिभेदे**
**मुह्यन्तीनां मदनकलुषं मौग्ध्यमास्वादयेथाः ॥ २० ॥**

एवं डयमानस्य ते वनगिरिदेशातिक्रमणानन्तरम् आन्ध्रकर्णाटसस्यादिसमृद्धक्षेत्रपूर्णदेशप्राप्ति- र्भवेत् । तत्रापि त्वया न ग्रामनगरादिकं प्रवेष्टव्यम् । किंतु संपन्नसस्यक्षेत्रपङ्क्तिपथेन गन्तव्यम् । एवमपि ते तत्रावशादनुभवगोचरीभविष्यति किञ्चिदित्याह **इक्ष्विति** । यत्रेक्षवः शालयश्च संवर्ध्यन्ते, तत्र क्षेत्रेषु यौवनोद्भेददशाभाजः कन्याः, कडङ्करीयैरन्यैश्च शालिनाशो मा भूदिति तद्रक्षणार्थमवस्थिता भवन्ति, तासाम् **इक्षुच्छाये** । इक्षूणां छाया बहुला इक्षुच्छायम् । 'छाया बाहुल्ये' इत्यनुशासनात् । स्ववपुस्सौष्ठवानुरूपं स्वक्लृप्तं **किसलयमयं** पल्लवात्मकं **तल्पं** शय्यां **आतस्थुपीणां** आस्थितानां तल्पे स्थितानाम् । **तैः** — तदा प्रियसमागमप्रसक्त्यभावात् तद्विषयकपरस्पराभिनिवेशसूचकैः । इदमित्थमिति मयेदानीं निर्धारयितुं न शक्यमिति ज्ञापनाय **तै**रित्युक्तम्। मया सीतया सह कृतपूर्वैः संलापैस्तुल्यैः, **संल्लापैः** मिथः क्रियमाणैर्भाषणैः **मुदितमनसां** मनसि मुदं प्राप्तवतीनां **शालिसंरक्षिकाणाम्**–क्षेत्रेषु वर्धमनानां कलमसस्यानां रक्षणार्थं स्थितानाम् । तादृशमोदवशादेव गातुं प्रवृत्तानां, 'रक्षितारो जनाः सन्ति, न गन्तव्यम्' इति परेषां बुद्ध्युत्पादनार्थमपि गाने प्रवृत्तानाम् , 'कर्णाटानां आन्ध्राणाञ्च तत्तन्नामकदेशयोः **व्यतिकरः** यद्वा कर्णाटैरान्ध्राणां व्यतिकरः मिथो गाढः संश्लेषः; तत्तद्देशप्रजासंकर इति यावत्। **तद्वशात्** —तदधीनतया **कर्बुरे** चित्रे। कर्बुर् इति किञ्चित् रौक्ष्यमपि सूचयति। **गीतिभेदे** गीत-

विशेषे शुद्धान्ध्रशुद्धकर्णाटगीतविलक्षणे मुह्यन्तीनां मूर्छनां प्राप्तम् आलापं कुर्वतीनां स्त्रीणां मदनकलुषं यौवनपूर्वसल्लापसंतानानुरूपमन्मथविकारव्यामिश्रं मौग्ध्यं शोभां सौभाग्यम् आस्वादयेथाः। इक्षुच्छाय प्रभृत्युक्ततत्तद्विशेषणविशेष्यसर्वांशविषयकसरसानुभवयुक्तो भव। मृदुमधुरध्वनिसंपन्नस्य ते तदनुभवविवेकोपि प्राप्तरूपः। व्योमगपतेस्ते पूर्वोक्तपामरीनिरीक्षणाद्यपेक्षयाऽत्र मनस्तृप्तिरभ्यधिकेति, एवं मदनकलुषं मनोमोदमूलकं मौग्ध्यं कदा सख्याः सीताया भविष्यतीति चिन्तयिष्यसीति च कृत्वा इदमिहोपक्षिप्तम्। अवश्यानुभाव्यं तु अनन्तरं वक्ष्याम इति भावः। एकत्र स्थले इक्षूणां शालीनाञ्चाभिवर्धनं कन्यानां तत्र पालनार्थं स्थितिश्च कालिदासोऽपि कथयति–"इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम्। आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः" इति। गोप्तुः राज्ञः। अत्र श्लोके गोप्तृपदस्य गोपीपदस्य आकुमारकथा इत्यस्य च घटनात् गोपस्त्रीभिस्तदा कौमारप्रभृतिकृष्णचरित्रं गीतमित्यपि ज्ञाप्यत इव। एवमिक्षुशालिबालकगोपीवृत्तमिश्रं कृष्णचरित्रं श्रीभट्टनाथदिव्यसूरिसूक्तावपि प्रसिद्धम् (३-१-६) "करुम्बार् नील् वयल्" इति गाथायाम् (अस्मदीयप्रबन्धरक्षा पु. 263–264)। एतद्गाथार्थ एवात्र भावार्थतया प्रकाश्यते॥

(२) हे विप्र! वनगिरिकुहरवासिनां लौकिकज्ञानमपि दुर्लभम्। वार्तायां वैश्यवृत्तौ कृष्यादिव्यापारे प्रवृत्तास्तु न तथेति यद्यप्यस्ति विशेषः, तथापि हंसध्वनितुल्ये भवदीयशब्दसंदर्भे ते बुद्धिं न निक्षिपेयुः। किंतु भोज्येषु यत् श्रेष्ठं गुडान्नं तत्राधिकरुच्या तत्प्रकृतिभूतानामिक्षूणां शालीनाञ्च क्षेत्रेषु अभिवर्धने बद्धपरिकराः स्त्रीजनानपि तद्रक्षणार्थं तत्रतत्र प्रेषयन्तः तदेकपरा भवेयुः। ते सर्वे न सर्वथोपेक्षणीयाः। किन्तु ते भवता श्रीकृष्णचरितमीदृशं किञ्चिदास्वादनीयाः। वैश्यकुले तदुद्धाराय चिरसंवृद्धो भगवान् श्रीकृष्णः इक्षुशालिप्रभृतिपरीतभवत्क्षेत्रतुल्यक्षेत्रपरिसरे वत्सान् चारयन् तत्र वत्सासुरे कस्मिंश्चित् प्रविष्टे स्थिते तज्जिघांसया स्ववत्सान् सर्वान् सस्यभक्षणार्थं प्रेरयामास। तदा ते सर्वे परमादरेण सस्यानि चरन्त आसन्। वत्सासुर एकस्तु तदुल्लंघनेन तूष्णीमास। तेनायमसुर इति सहस्थितान् बालकान् निश्चाय्य तं पादेषु गृहीत्वाऽतिवेगेन एकेन हस्तेन तत्प्राणवियोजनावधि भ्रमयन् अन्ते एकस्य कपित्थवृक्षस्योपरि चिक्षेप। तेन तत्र कपित्थफलनिकुरुम्बरूपेण लब्धशरीरः स्थितोऽन्योऽप्यसुरः पातितो मारितश्चासीत्। सर्वमिदं तत्रैवं कुर्वन् तत्र सस्यरक्षणार्थं स्थितायाः शालिकायाः गोपकन्यायाः स्वस्मिन् कामं प्रतिष्ठापयामास। सा हि वत्सचारणव्याजेन तत्र समागतं कृष्णमालक्ष्य मदनकलुषेण मौग्ध्येन, 'स्वकीयसस्यानि वत्सैर्भक्ष्यन्ते' इत्यप्यनालक्ष्य कौमारयौवनकर्बुरगीतिभेदपुरस्सरं तल्लीलादर्शनलालसैवाऽऽसीत्। एवम्भूतामस्मत्प्रियां तन्मातापित्रादयः सस्यनाशनिमित्तेन मा भर्त्सयेयुरिति विचिन्त्यैव, असुरद्वयसंघटनं तत्र कारितं कृष्णेन। तेन 'असुरभयात् कन्या तूष्णीमास; न तु कृष्णेऽनुरागात्' इति ते मंस्यन्त इति विभाव्यैवं सर्वसंघटनं कृतम्। एवमतीव नीचेष्वपि अनवधिकां प्रीतिं वहति भगवानिति तत्सौलभ्यं किञ्चित् तद्देशे प्रतिबोधनीयम्। कृष्णावतारकालिकगोपिकामदनकलुषमौग्ध्यतुल्यं तत् विलोक्य तद्देशानुग्रहः ईश्वरकर्तव्यो भवेदिति॥ श्लोके तैरित्यत्र स्वैरिति पाठः स्याद्वेति चिन्त्यम्॥ २०॥

(एतावदधिगमिताचार्यगुणादिसंग्रहः)

एवमत्र विंशतौ श्लोकेषु संसारिजीवपरिस्थितिः, तस्य स्वोज्जीवनेच्छा, ततो भगवतस्तस्मिन् आस्था, भगवता तच्छिक्षणाय समुचिताचार्यप्रेरणोद्योगः, तत्प्रेरणम्, तदा तेन कर्तव्यांशोपदेश इत्येतावद् अधिगमितम्। अत्रार्थात् कीदृशैराचार्यैर्भाव्यमित्यपि दर्शितमासीत्। श्रीवकुलभूषणदिव्यसूरि-श्रीमुखसूक्तौ प्रथमचतुर्थे 'अञ्जिरैयमडनाराय्' इति दशके आचार्यलक्षणानि सहचरसंपन्नत्वं सुवाक्त्वं सुचरितसुभगत्वं कृष्णसारूप्यं स्वाहारोदारशीलत्वं तनुधृतभगवच्चिह्नत्वं वाक्यगुप्तत्वं छात्रानुसारिवृत्तिकत्वम् अभिगतशिशिरत्वम् अन्तरंगत्वम् इतीमानि सूचितानि। न्यासविंशतौ च, 'सिद्धं सत्संप्रदाये' इत्यादिना अपेक्षिता आचार्यगुणाः प्रादर्शिषत। तत्रतत्रोक्ता अनुक्ताश्चाचार्यगुणा अत्र हंसवर्णनभागे तं प्रत्युपदेश-रूपभागे च यथायथमवधार्य ग्राह्याः। तत्रेदं दिक्प्रदर्शनम्–'क्रीडाखेलं कमलसरसि क्वापि कालोपयातम्' इत्यनेन यथाकालकृतस्नानादिमत्त्वम्, 'राकाचन्द्रद्युतिसहचरम्' इति सहधर्मचरसंपन्नत्वं, 'राजहंसम्' इति अवदातत्वम्, 'सीतागतिमनुगते' इति छात्रजीवानुसारित्वं, 'तद्दुकूलाङ्कमूर्तौ' इति तदर्पितवस्त्रादिधारित्वं, 'तन्मञ्जीरप्रतिमनिनदे' इति तदुपदेशयोग्यभाषादिमत्त्वं, 'कृत्वा बहुमतिमसौ भूयसीमाञ्जनेयात्' इति पूर्वा-चार्येभ्योऽतिशयिततया भगवदभिमानहेतुकत्वम्, 'वेदोदन्वत्' इत्यादिना सत्संप्रदायसिद्धत्वं, 'कमल-वसतेरौपवाह्यम्' इति गरुत्मदादितुल्यत्वं, 'तत्सावर्ण्यंन्' इति सात्त्विकत्वं, 'श्रवणरसना' इत्यादिना सुवाक्त्वं यज्ञशिष्टाशित्वं, 'व्यक्तोत्कर्षो महति भुवने' इति लोकश्लाध्यत्वं, 'व्योमगानां पतिः' इति देवगणसेव्यत्वं, 'स्थाने दूत्यम्' इति शास्त्रानुमतशिष्यपारतन्त्र्यम्, 'लक्ष्यालक्ष्ये' इत्यादिना दूरदेशं दुष्टमपि प्राप्य लोकशिक्षणप्रवणत्वम्, ततः मार्गे दिव्यदेश-दिव्यतीर्थ-सन्मतप्रवर्तकादिसेवनादिसंपाद्यमान-श्रीपतिप्रीतिकत्वम् विरुद्धमतव्यापृतवाचालव्यूहवाचंयमत्वापादकभाग्यसंपन्नसंमोदत्वं, आरक्तानामिति भोगादिप्रवणैर्गन्धर्वैरपि भक्त्या सेव्यमानत्वं, 'पर्यस्तैते' इति बन्धुजीवबन्धुबहुमान्यत्वं, सूक्ष्माकारैरिति संसारसंवरणक्लिष्टैरपि शुद्धभारतीविरोधिपरिहारेणाध्ययनप्रवृत्तविविधच्छात्रपरिव्रियमाणत्वं, द्रक्ष्यस्येवमिति एकान्तिपरमैकान्तिशिष्यदर्शनानन्दनिर्भरत्वं, प्रक्षीणामिति चिरानुवृत्तशिष्यसमाश्वासनपूर्वकं सर्वत्र सञ्चरणं, सार्धमित्यादिना विरक्तिसहितं विशुद्धविद्वज्जनवश्यत्वम्, अंगीकुर्वन्निति शिष्यैः प्रतिकृतिकल्पनया पूज्यमानत्वं, मार्गौ इति भक्तिप्रपत्तिरूपोपायादिविषयकविशदज्ञानशालित्वं, श्रुत्वेति स्वोपदेशश्रवणानर्ह-देशशीघ्रलंघनपरत्वम्, 'इक्षु' इति तत्तद्देशस्थितविशेषांशविज्ञानेन लोकज्ञत्वसंपत्तेरनुपेक्ष्यत्वञ्चेत्येवम्॥

विष्णोर्वासादवनिवहनात् बद्धरत्नैः शिरोभिः
शेषस्साक्षादयमिति जनैस्सम्यगुन्नीयमानः।
अश्रैर्युक्तो लघुभिरचिरोन्मुक्तनिर्मोककल्पैः
अग्रे भावी तदनु नयने रञ्जयन् अञ्जनाद्रिः॥ २१॥

आनम्रकणिशव्यतिकरशालि-शालिसमृद्धदेशातिलंघनेन लभ्यं सर्वैरपि मनुष्यैः सुखमारुह्य सर्वदा

संघीभूय समादरेण सेव्यमानं प्रथमं दिव्यस्थानं प्रथमं प्रस्तौति विष्णोरिति । अयं प्राक्पुच्छप्रत्यङ्मुख-बहुशीर्षपन्नगवद्दृश्यमानतया शेषवत् भाव्यमानः अञ्जनाद्रिः त्रिभिर्हेतुभिः साक्षात् शेष इत्येव लक्ष्यक् निराबाधम् । उन्नीयमानः—अनुमीयमानः । त्रीन् हेतून् प्रथमपादेनाह । विष्णोर्वासात् आदि-वराहक्षेत्रत्वात्, तेनैव परमपदादानीतक्रीडाशैलभागत्वात्, तत्र तेन भूम्या सह स्थिरम् उष्यमाणत्वात्, पश्चात् पद्मालयाप्रणयरक्षणाय तया सह श्रीनिवासमूर्त्या सर्वलोकदेश्यापियशस्कतया विष्णुपदान्वर्थनेन वैभवविशेषेणाधिष्ठीयमानत्वाच्चायं शेषः । विष्णुपदेन "सकलफलप्रदो हि विष्णुः" इत्यस्य स्मारणम् । प्रसिद्धं हि भगवतो वासस्थानस्य सर्वस्य शेषत्वम्, 'निवासशय्यासन' इत्यादौ । पर्वतापर्वतसाधारण्येन हेतुरुक्तः; पर्वतासाधारणं हेतुमाह अवनिवहनादिति । अवनेः भूमेर्वहनात्—भरणात् । पाताले स्थितोऽनन्तः सहस्रं फणा विस्तार्य भुवं समग्रां बिभर्तीति प्रसिद्धम् । पर्वतानामपि, भूधरः भूभृदित्यादीनि नामानि धारकत्वं दर्शयन्ति । कथमिति चेत्—एकैकस्याप्यद्रेरधोभागः प्रचितः भूमेरधस्तात् तां व्याप्य गृह्णन् वर्तत इति केचित् । समुद्रमध्ये पोतवत् स्थितायाः भूमेरमग्नतायै तत्रतत्र घनशैल निकरस्य यथार्हं गुरुत्वसाम्यकल्पनाय स्थापनं भगवता कृतमस्ति; अतो भूभरणमेतत्कृतमित्यन्ये । वृक्षलताफलादिभिः पशुपोषकतृणादिभिः वर्षुकवलाहकवासस्थानतया नानाविधनदीमूलभूमितया परितो वनसमृद्ध्या विरक्तजनैकान्तवासतपश्चर्याद्यनुकूलतया एवं बहुभिः प्रकारैः कृतं भूभरणमिति च भाव्यम् । सर्वपर्वतसाधारणधर्म उक्तः; प्रकृतासाधारणं धर्ममाह बद्धेति । बद्धानि — नित्यसंबद्धानि रत्नानि येषु शिरस्सु तैः । पन्नगश्रेष्ठानां विशिष्य शेषस्य च फणाग्रे रत्नं सहजमस्तीति संप्रतिपन्नम् । एतत्पर्वत शिखरेषु च सर्वत्र रत्नानि सन्ति । सूर्योदयसमये च तत्किरणसंपृक्तानि शिखराणि रत्नभासुराणि लक्ष्यन्ते । अनेकशिरस्कत्वाच्चायमनन्तः । ब्रह्माण्डपुराणादौ शेषस्यैवैवं वचनम्, "यथा शेषे मदङ्गे च वैकुण्ठे भुवनोत्तमे । शैलाकारे च मद्देहे नित्यमत्र वस प्रभो" इति । संशये सति हि प्रमाणमन्वेषणीयम्, प्रत्यक्षमनुमानञ्चैवात्र समस्ति । अयमिति प्रत्यक्षमदर्शि । सम्यगुन्नयने हेतवश्चोक्ताः । बाष्पे धूमबुद्ध्या पावकोन्नयनवत् निर्मुक्तनीरागां धवलानामभ्राणामत्र द्रष्टारः तेषु सर्पनिर्मोकताभ्रान्त्याऽपि अयमादिः शेष इत्याघोषयन्ति; तदाह अभ्रैरिति । अचिरात् सद्यः सर्पेण मुक्ताः स्वभोगान्निष्कासिताः ये निर्मोकाः सर्पनिर्मुक्तकञ्चुकाः धवलास्त्वचः, तत्कल्पैः तत्सदृशैः, तत्कल्पनाहेतुभिश्च । प्रायस्सर्पगात्रस्पर्शितयैव स्थितेरौचित्याय अचिरान्मुक्तत्वोक्तिः। लघुभिरित्युक्तो गुरुत्वाभावो निर्मोकसादृश्यपोषकः। तैर्युक्तः। एतेन हंसस्य शंकापि शमिता—महतः शैलस्य समीपे बहुगिरित्यजो मे गमनं कथम्, प्रायेण तत्र मेघानां समावेशसंभवादिति शंका । शरत्कालो ह्ययम् । सर्वेऽपि मेघाः निस्साराः सर्पनिर्मोकवत् अकिञ्चित्करा भवन्ति । अत आनन्दनिलयं प्रति आनन्देन गच्छेति प्रत्युच्यते । अग्रे भावी तव पुरतः स्वयमेव भविष्यति । न तदर्थं वक्रः पन्थाः विचार्योऽस्ति । तद्दर्शनमात्रेण तस्य भवत् फलमाह नयने रञ्जयन्निति । नयनानन्दनः । सन्मुखेन तत्र गत्वा भगवान् सेव्य इति रागश्च ते भविता । स ह्यञ्जनाद्रिः — अञ्जनस्य

नयनरञ्जकत्वं सर्वानुभूतम् । सर्वतः श्यामवनसमृद्ध्या चायमञ्जनवत् दृश्यः । हनुमन्माता चाञ्जना तत्रैव तपश्चचारेति तन्नाम्नां तस्याद्रेः अञ्जन इति व्यवहार इति च पुराणे । त्वद्भ्रातुर्हनुमतो माता त्वन्मातैव । अतो मातुर्गृहमिव तं द्रक्ष्यसि । **निर्मोककल्पैः** । ईषदसमाप्ताः **निर्मोकाः** निर्मोककल्पाः । समित्येकीकारे । समाप्तिरैक्यापत्तिः असमाप्तिः ऐक्यापत्त्यभावः ईषदित्यनेन भूयोधर्मवत्त्वरूपसादृश्योक्तिः । **अलघुभिरिति** पदच्छेदे अनल्पैः अतिविस्तृतैरित्यर्थः ॥ २१ ॥

**तत्राऽऽरूढैर्महति मनुजैः स्वर्गिभिश्चावतीर्णैः**
**सत्त्वोन्मेषात् व्यपगतमिथस्तारतम्यादिभेदैः ।**
**साधारण्यात् फलपरिणतेः सङ्घशो बध्यमानां**
**शक्त्या कामं मधुविजयिनस्त्वं च कुर्याः सपर्याम् ॥ २२ ॥**

'असंसेव्य हरिं साक्षात् दिव्यक्षेत्रातिवर्तनं' खलु महान् अपराधः । अतोऽञ्जनाद्रिदर्शनमात्रेण तृप्तो मा भूः । **असंसेव्येत्यत्र** समित्युपसर्गेऽवधानं कुरु । प्रणाममात्रं पर्याप्तमिति मा च मन्वीथाः । सपर्यामपि शक्त्यनुसारेण कुर्वित्याह **तत्रेति** । अत्र श्रीनिवासस्य देवमनुष्यजातिवर्णज्ञानसंपदादि-वैषम्यानादरेण अपेक्षामात्रेण सर्वफलप्रदत्वं निहीनविषये सत्त्वोन्मेषसंपादकत्वं तत्तद्गतरजस्तमोगुणयोः क्रमेण निवर्तकत्वं सर्वसुखाराध्यत्वञ्च बोध्यते । **महति** सप्ताचलत्वादतिविशाले असंख्येयपुण्यतीर्थविशेष-अद्भुतफलवृक्षादिमयारण्य-बहुविधतपश्चर्यासक्तमहाजननियतवासादिभिः प्राप्तमहिमनि **तत्र** **अञ्जनाद्रौ** । अस्य **बध्यमानामित्यत्रान्वयः** । **आरूढैः** – भूमितः सप्त अचलान् आरुह्यैवाऽऽगतैः **मनुजैः** मनुष्यैः मन्त्राधीनज्ञानरूपद्वितीयजन्मभाग्भिश्च । **मनुशब्दो** मन्त्रपरः । श्री वेंकटेशेतिदिव्यनामघटितेन अन्यादृशेन च मन्त्रेण लब्धज्ञानाः **मनुजाः** । **स्वर्गिभिः** सत्यलोकपर्यन्तस्थैर्देवैः । **स्वर्गपदप्रयोगात्** ततोऽव-तीर्णत्वं लभ्यते । उभयेषामपि विशेषणं द्वितीयपादः । **सत्त्वोन्मेषात्**—यतो भगवत्सेवार्थं दूरतः प्रस्थाय गोविन्देति नामघोषपूर्वकमास्थया महत्या समागताः, तत एव सत्त्वोन्मेषः सुग्रहः । अद्रि-स्पर्शमात्रेण चाधिकः सत्त्वोद्रेकः । अयं हि वेंकटाद्रिः । वें पापं कटति दहतीति । 'वेंकारोऽमृतबीजं स्यात् कटमैश्वर्यमुच्यते । अमृतैश्वर्यसंघत्वात् **वेंकटाद्रिरुदीर्यते** ॥' **मिथः** परस्परं देवानां मनुजानाञ्च, देवेषु अवान्तरभेदभिन्नानाञ्च, मनुजेषु नानाविधानाञ्च जातिवर्णकुलधनज्ञानाचारादिकृतं यत् तारतम्यम्, तत् आदिः कारणं यस्य भेदस्य सः **मिथस्तारतम्यादिभेदः** । **भेदः**—बुद्धिभेदः । सः व्यपगतो येषाम्, तैः । यद्यपि तत्र गतानां देवत्वमनुष्यत्वादिकमविनाश्यम् । ज्ञानधनादिकञ्च पुनर्निवृत्तावपि प्रागिव तरतमभावापन्नमेव । अतस्तद्व्यपगमो दुर्वचः, तथापि तत्प्रयुक्तः यः भगवता तत्रत्यैरर्चकादिभि; महनीयैश्च परस्परञ्च पुरस्करणे भेदः, पूर्वागतोऽपि मनुजत्वात् अपसार्यः, देवः पश्चादागतोऽपि प्रथमं स्थाप्य इत्यादिः । स एव व्यपगच्छति । सर्वे एकरूपं सर्वैराद्रियन्ते । "एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः । विष्णुना व्यपदेष्टव्यः तस्य सर्वं स एव हि" इति हि स्मर्यते । अतस्ते पक्षित्वेन तिर्यक्त्वात् पश्चात्करणं

स्यादिति न मन्तव्यमित्युक्तं भवति। काव्यादौ इदं दुर्घटमिव। तृतीयान्तस्य बध्यमानामित्यत्रान्वयः। **बध्यमानाम्**—आदरेण क्रियमाणाम्। **संघशः** नानाविधसंघभूतैः। कतिपये मनुजा देवाश्च मिथो मिलन्ति; अन्ये च तथा; क्वचित् देवा एव मिलन्ति, कुत्रचित् मनुजा एव। तत्रापि तत्तत्संघे प्रवेशो भवेदेव। ननु तत्तदपेक्षितस्य फलस्य विभिन्नत्वात् कथं संघीभाव इत्यत्राह साधारण्यात् फलपरिणतेरिति। अपेक्षितस्य फलपरिपाकस्यैकत्वादित्यर्थः। फलभेदे संघभेदः स्यान्नाम। साधारणत्वे संघैक्यं युक्तमिति भावः। फलस्येत्यनुक्त्वा फलपरिणतेरित्युक्त्या तत्तदपेक्षितस्य फलपरिणामकालस्य भेदेऽपि कामं संघभेदोऽस्तु इति ज्ञाप्यते। सत्त्वोन्मेषस्य जातत्वात् सर्वे भगवत्प्रीतिमेव फलमपेक्षन्ते इति च साधारण्यम्। 'चतुर्विधा भजन्ते माम्' इत्येतदनुसारेण सत्त्वतारतम्ये स्यात् संघभेदः। संघश इति शसा संघानेकत्वोक्तेः। एवम्भूतां **मधुविजयिनः सपर्याम्**—मधुसूदनस्य हयग्रीवरूपेणावतीर्य रजस्तमोगुणावेव मूर्तौ असुरौ मधुकैटभौ संहृतवतः सत्त्वप्रवर्तकस्य श्रीनिवासस्य पूजाम्। त्वञ्च—देवमनुष्यजातिप्रवेशाभावेऽपि स्थावरजातिविलक्षणस्त्वं हंसरूपेणावतीर्णभगवद्वंशजत्वादिगौरवादिकमपुरस्कृत्य नीचपक्षिपरिस्थितिभावनयाऽपि **शक्त्या** स्वच्छक्त्यनुसारेण **कामम्** इच्छानुसारेण। काममिति नात्राकरणाभ्यनुज्ञा। **कुर्याः** अवश्यं कुरु। शक्तिर्नास्तीति न क्लेशितव्यम्। पारमैकान्त्ये भगवत्प्रीत्यपेक्षसंघप्रविष्टो भव। फलान्तरापेक्षायामपि न व्रीडितव्यम्। प्रायो देवास्तथा क्षुद्रफलापेक्षिण एव। तत्रापि तव स्वस्कुलस्य चापेक्षितं वा काम्यताम्; मयेदानीं प्रेष्यमाणत्वात् मदीयो मनोरथः फलत्विति वा भगवते विज्ञाप्य तदर्थोऽपि सपर्या क्रियताम्। यथाकामं भवतु। बहुविधसपर्यैथा बहुविधफलापेक्षाऽपि युज्यते। इतःपरं वक्ष्यमाणा अर्चामूर्तय एवं सर्वफलप्रदा न भवन्तीति अपेक्षितप्रार्थनमत्र न विस्मर्तव्यम्। अन्यत्र तु कैङ्कर्यरूपेण किमपि कृत्वा गन्तुं युक्तम्। न तु पूर्णा सपर्या कार्येति निर्बन्धः। काम्यमपि कर्म यथाशक्ति क्रियमाणमत्राञ्जनाद्रौ फलहेतुर्भवतीति॥

पारमैकान्तिमात्रपरत्वे तु—**आरूढैः** आरुरुक्षुदशां विहाय भक्तिं प्रपत्तिं वा आरूढैः षोडशवर्णस्वर्णसदृक्षैर्मनुजैः, **अवतीर्णैः** अप्राकृतरूपग्रहणेन लब्धजन्मभिः **स्वर्गिभिः** परमपदवासिभिः। स्वर्गशब्दो दुःखासंभिन्नसुखवाची परमपद एव मुख्यः। मिथस्तारतम्यं—सर्वज्ञत्वासर्वज्ञत्वप्राकृतरूपवत्त्वाप्राकृतरूपवत्त्व-शास्त्रवश्यत्वतदभावादिरूपम्। तन्मूलकपुरस्कारभेदरहितैः अतीव सात्त्विकैः संघीभूतैः केवलं भगवत्प्रीतिमात्रोद्देशेन सपर्याप्रवृत्तैः मिलितः सपर्यां कुर्वित्यर्थः। श्रीवेंकटाद्रौ नित्यमुक्तानां निरन्तरवासः प्रसिद्धः। ते मनुजैः परमैकान्तिभिर्मिलन्तीति।

**तारतम्यशब्दस्य** तरतमयोर्भाव इति विग्रहः क्रियते। 'नात्र तरशब्दस्तमशब्दश्च तरप्तमप्प्रत्ययरूपः। प्रत्ययस्य पृथक् प्रयोगायोगात्। अतो न्यूनाधिकेत्यर्थे रूढस्तरतमशब्दः' इत्याहुः। तरः, तमः, तार्यं, ताम्यमित्यपि पृथक् प्रयोगाभावात् नित्यद्विवचनस्तरतमशब्द इत्यपि वक्तव्यम्। 'एवमपि इमौ तरतमौ' इति प्रयोगो भवति न वेति विमृश्यम्। एतदभावे तरतमता इत्यादिप्रयोगस्यापि भावात् तारतम्यं

तरतमता तरतमभाव इति शब्दद्वयमपि रूढमिति किं स्यात्, किंवा प्रत्ययैकदेशरूपौ तच्छब्दपरौ तरतम शब्दौ यथायथं लक्षितलक्षणया न्यूनत्वाधिकत्वपराविति विमृश्यम् ॥ २२ ॥

स्तोकोन्मग्नस्फुरितपुलिनां त्वन्निवासेच्छयेव
द्रक्ष्यस्यारात् कनकमुखरीं(रां) दक्षिणामञ्जनाद्रेः ।
आसन्नानां वनविटपिनां वीचिहस्तैः प्रसूना-
न्यर्चाहेतोरुपहरति या नूनमर्धेन्दुमौलेः ॥ २३ ॥

ततः प्रस्थाय गच्छतस्ते समनन्तरमेव सर्वफलप्रदश्रीनिवाससपर्याफलमानुषङ्गिकं किञ्चिद् भविष्यति। अवश्यं विश्रम्यानुभूय गच्छेत्याह स्तोकेति । कनकमुखरीं नदीं द्रक्ष्यसि अञ्जनाद्रेः आरात् समीपे । गमनमार्गे इति ज्ञापनार्थं अञ्जनाद्रेर्दक्षिणामित्यप्युक्तम् । स्वर्णमुखरीति नदीनाम । कनकेति पर्यायपदप्रयोगः । कनकमुखरामिति पाठादयं पाठः श्रेयान् । स्कान्दादिपुराणे स्वर्णमुखरी इत्येव प्रसिद्धेः, "सुवर्णमिव लोकानां भागधेयादियं नदी । नीता भुवमगस्त्येन मुखरीकृतदिङ्मुखा । तस्मात् यास्यति विख्यातिं सर्वलोकाभिनन्दिताम् । सुवर्णमुखरीनाम्ना धाम्ना कैवल्यसंपदः" इति । लोकव्यवहारोऽप्येवमेव । अयं मुखरीशब्दः नामैकदेशे नामग्रहणमिति न्यायेन मुखरीकृतदिङ्मुखेत्येतदेकदेशः । कनकञ्च सा मुखरी च कनकमुखरी । स्वर्णवदनर्घत्वात् शुद्ध्यतिशयाच्च कनकमियम् । तत्र क्षणं वासं सूचयति प्रथमविशेषणेन । मग्नपूर्वाणि सैकतस्थलानि शरदि क्रमेण जलस्यापचयात् तत्रतत्र जलादुत्थितानि दृश्येरन् । यदाह राम एव, "दर्शयन्ति शरन्नद्यः पुलिनानि शनैश्शनैः । नवसंगमसंव्रीडा: जघनानीव योषितः" इति । स्तोकं यथा तथा । किञ्चिदित्यर्थः । उन्मग्नानि जलादुत्थितानि पुलिनानि सैकतस्थलानि यस्यां ताम् । शरत्कालक्रमादेवंत्वेऽपि तत् अन्यथोल्लिखति त्वन्निवासेच्छयेवेति । पुलिनेषु वासो हि हंसेभ्यो रोचते । अतस्ते वासमिष्ट्वा नदीयं पुलिनं दर्शयतीति मन्ये । किमिति तस्यास्त्वय्यनुराग इति चेत्–भगवत्सपर्याफलाङ्कुरः एषः। द्रक्ष्यसि । नयनरञ्जनाञ्जनाद्रिदर्शनवत् एतद्दर्शनमपि भोग्यम्। अथ च सा दक्षिणा किल । दक्षिणापदेन दिक्परेणापि दाक्षिण्यं दोषप्रतिभटत्वं परोपकारश्च व्यज्यते । श्रान्तानां श्रमपरिहरणं नदीनां स्वभावः । अत्र "विवृत्तजघनां को विहातुं समर्थः" इति कान्तासमाधिरपि। नन्वेवं यदृच्छागतमन्निवासकामनावर्णनात् नद्याः नास्तिक्यं चारित्रभ्रंशो लक्ष्यत इवेत्यत्र तथा नेत्येतत् द्रढयति आसन्नानामिति। या नदी आसन्नानां कूलप्रान्ते स्थितानां वनविटपिनाम् आरण्यकवृक्षाणाम् । परकीयोपवनवृक्षत्वे प्रसूनहरणं चौर्यं स्यात्; तत्र देवार्थता न स्यादिति वनपदप्रयोगः। अनेनाप्यास्तिक्यसिद्धिः। तेषां प्रसूनानि पुष्पाणि वीचिहस्तैः, तरङ्गा एव पाणयस्तैः अपचित्य अर्चाहेतोः पूजार्थमुपहरति संभृत्य नयति। नन्वञ्जनाद्रेरुपरि दूरे स्थितो भगवान् कथमनया प्राचीं गच्छन्त्या प्रसूनैरेभिरर्च्यः स्यादित्यत्राह अर्धेन्दुमौलेरिति । अर्धः शकलभूतः चन्द्रः मौलिः शिरोभूषणं यस्य तस्य रुद्रस्य कालहस्तीशस्य । स्वर्णमुखर्याः शुकपुरीतः कालहस्तिक्षेत्रं प्रत्येव गमनादेवमुत्प्रेक्षा । नदीगतिरीतिपरिज्ञाने एवमर्थवर्णनमेव

प्रथमप्रत्ययेयम् । काञ्चीप्रस्तावे तत्र प्रसिद्धपशुपतिग्रहणवत् अत्र प्रसिद्धकालहस्तीशग्रहणौचित्याच्च । अथापि स्कान्दे सुवर्णमुखरीप्रस्तावे स्थितं वचनमनुरुध्यान्यमर्थमाहुः, "अत्रास्ति भगवान् ईशः ख्यातोऽगस्त्येशसंज्ञया । स्थापितोऽगस्त्यमुनिना लोकानन्दविधायिना । स्नात्वा तस्यां महानद्यां तल्लिंगं पूजयन्ति ये ॥" इति वचनात् तत्पूजनायोपहरति । यद्वा अद्रिदक्षिणभागे रुद्रेणागस्त्यं प्रति स्वेन भगवदुपासनस्य क्रियमाणतायाः वामनपुराणगतमाहात्म्ये उक्ततया रुद्रकर्तृकभगवदर्चाहेतोस्तानि रुद्रस्योपहरति, रुद्रहस्तेऽर्पयति नदी—इति । अस्तु यः कश्चिदर्थः । तथाच भगवद्भागवतपरिचर्यापरायाः तत्रापि देवताभूतायाः नैव नास्तिक्यप्रसक्तिरिति तत्र किञ्चिद्विश्रम्य गन्तव्यमिति भावः ॥ २३ ॥

निर्विश्यैनां निभृतमनभिव्यक्तमञ्जुप्रणादो
मन्दाधूतः पुलिनपवनैर्वञ्जुलामोदगर्भैः ।
अभ्यासङ्गः सपदि पदवीं संश्रयान्यैरलङ्घ्यो(ङ्घ्यां)
बन्दीकुर्युस्तटवसतयो मा भवन्तं किराताः ॥ २४ ॥

एवं स्वर्णमुखरीमनुभावयन् ततः क्षिप्रमेव प्रस्थानं बहुदूरातिलंघनञ्च प्रार्थयते निर्विश्येति । एनाम् उक्तरीत्याऽनुभाव्यां तां नदीम् अनभिव्यक्तमञ्जुप्रणादः- अभितो व्यक्तिः-बहुभिर्बहुदूरेऽपि श्राव्यता । अतादृशः मञ्जुः मनोहरः प्रणादः । अनतिव्यक्तत्वे कथं प्रकृष्टनादत्वमिति चेत्, अत्र प्रणादः संश्लेषानुरागजः शब्दः । 'प्रणादस्तु शब्दः स्यादनुरागजः' इत्यमरः । अनुरागजत्वमेव प्रकर्षः । तद्विशिष्टस्सन् निभृतम् निश्चलम् अनन्यपरतया निर्विश्य अनुभूय । मन्दाधूत इति द्वितीयपादस्थस्य पूर्वपादार्थात् पूर्वं पश्चाच्च योजना । पवनपरिष्वंगस्याध्वश्रमपरिहारकतया नदीनिर्वेशोपयोगित्वात्, निर्वेशानन्तरमप्युल्लासकत्वाच्च । वञ्जुलानां नीवारपुष्पाणाम् आमोदः अतिनिर्हारी गन्धः गर्भे येषां तैः पुलिनपवनैः हंसावासभूतसैकतमण्डलसंप्राप्तैर्मन्दमारुतैः मन्दं यथा तथा आधूतः ईषच्चालनेनोपचरितपक्षसंततिस्सन्नित्यर्थः । अभ्यासंगः स्वच्छत्वस्वादुत्वादिनदीगुणविशेषजनिततद्विषयकात्यासक्तिरहितस्सन् सपदि तदैव अन्यैः भूमिष्ठैः जनैः व्योमगैः पक्षिभिश्च अलंघ्याम् अप्राप्यां पदवीं भवज्जातीयादतोच्चस्थानसरणिं संश्रय बलवीर्योपपन्नः तां सरणिमारोह दक्षिणदिशागमनार्थम् । हंसानां मार्गश्च व्योम्नि विभक्त एवम्—"आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः । द्वितीयो बलिभोजानां ये च वृक्षफलाशिनः ॥ भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैः सह । श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् ॥ बलवीर्योपपन्नानां रूपयौवनशालिनाम् । षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा ॥" इति । किमर्थमेवं प्रार्थनेति चेत्— तटवसतयः स्वर्णमुखरीतीरं वासस्थानं येषां ते केचित् किराताः व्याधाः भवन्तं रूपयौवमनञ्जुनादमहनीयं त्वां मा बन्दीकुर्युः । कारागृहे स्थाप्यमानः प्राणी बन्दी । अबन्दीं त्वां बन्दीं मा कुर्वन्तु । प्रणादस्य तीव्रत्वे, तत्राधिककालस्थितौ, व्योम्नि नातिदूरप्रदेशगमने च कदाचित् किराता ग्रहीतुं प्रयतेरन्निति भीतिरिति भावः । अत्र बाणसुताम् उषां रहसि मञ्जुप्रणादपूर्वकं भुक्त्वा तत्रैव विलम्बनात्

बाणादिदुष्टबलिष्ठबन्दीकृतस्सन् अनिरुद्धोऽपि निरुद्धोऽभूत् किल। तथा न भवितव्यम्। सा यद्यपि त्वद्विश्लेषं न सहेत, तथापि प्रस्थातव्यमित्युच्यते। रागेण रहसि परदारोपभोगिधूर्तसाम्यकल्पनापेक्षया हंसस्यानिरुद्धसाम्यकथनं युक्तम्। अनिरुद्धोदाहरणं रामकथनार्हतादशपुरुषाभिप्रायेण ॥ २४ ॥

**तुण्डीराख्यं तदनु महितं मण्डलं वीक्षमाणः**
**क्षेत्रं यायाः क्षपितदुरितं तत्र सत्यव्रताख्यम्।**
**पत्यौ रोषात् सलिलवपुषो यत्र वाग्देवतायाः**
**सेतुर्जज्ञे सकलजगतामेकसेतुः स देवः ॥ २५ ॥**

वेंकटाद्रिवत् विशेषतो मान्ये हस्तिगिरौ वरदराजसेवां हंसेन कर्तव्यां वक्ष्यन् तुण्डीरमण्डलं प्रस्तौति। सर्वदिव्यदेशसेवोपदेशे कालहरणं स्यादिति **ख्यमात्रग्रहणम्। तुण्डीराख्यमिति।** तदनु— अलङ्घ्यपदवीसंश्रयणानन्तरं **तुण्डीर**मित्या**ख्या** प्रसिद्धिर्यस्य तत् **महितं** सर्वश्लाघितं **मण्डलं** देशमेदं **वीक्षमाणः** विशेषतः उच्चस्थानात् पश्यन् **तत्र** तन्मण्डलान्तर्गतं **सत्यव्रत**मिति **आख्या** यस्य तत्, **क्षपितानि दुरितानि** समाश्रितानां येन तत् **क्षेत्रं** पुण्यभूमिं **यायाः** प्राप्नुयाः। क्षेत्रमाहात्म्यं प्रागेव ब्रह्मणा समादृतं पश्चादभिवर्धितञ्चेत्याह **पत्याविति**। यथासंकल्पं कार्यपूर्तिकरत्वात् सत्यव्रतत्वेन प्रसिद्धे सकृत्कृतेन पुण्येन पुण्यकोटिफलप्रदे भूमण्डलतिलके तस्मिन् क्षेत्रे भगवन्तमश्वमेधेन यष्टुं प्रकान्तवति पत्न्या सावित्र्या सनाथे परमेष्ठिनि, प्रबलासुरपैशुनश्रवणरोषितायाञ्च सरस्वत्यां धर्मपत्न्यां प्रचण्डवेगप्रवाहरूपेणाऽऽविर्भूय सर्वयज्ञवाटविध्वंसनोद्युक्तायां विधिना प्रार्थितो भगवान् यथोक्तकारी सेतूभूय शयानः तं प्रवाहं न्यरुन्धेति **हस्तिगिरिमाहात्म्यम्**। तदत्राह। **पत्यौ** स्वभर्तरि **रोषात्** स्वोपेक्षया सावित्र्या सह यागः प्रकान्त इति कोपात्। स्त्रीपुंसयोर्मिथः कोपो रोषः। अन्यः क्रोधः। **यत्र** क्षेत्रे यज्ञभूमिक्षालनार्थं **सलिलवपुषः** सलिलं जलमेव मूर्तिर्यस्याः तस्याः **वाग्देवतायाः** सरस्वत्याः **सेतुर्जज्ञे** जलप्रसरनिरोधकसेतुबन्धो बभूव। कः। **सः** प्रकृतयज्ञसमाराध्यः, **देवः,** 'दिव्यो देव एको नारायणः' इत्युक्तः **सकलजगतामेकसेतुः,** 'अमृतस्यैष सेतुः' इत्यत्रेव षष्ठीविभक्त्यर्थान्वयाय सेतुशब्दे योगव्युत्पत्तिः। सिनोतेर्ण्यन्तस्य साययति-संबन्धयति प्रापयतीत्यर्थः। सर्वेषामात्मनां सर्वाभीष्टप्रापको वरद इत्यर्थः। यद्वा सेतुरिव सेतुरिति गौणीवृत्तौ सेतुसदृश इत्यर्थः। सादृश्यञ्च पारप्रापकत्वम्; अत्रासंकरकरत्वञ्च। जलसेतुस्तीरात् पारं प्रापयति, पार्श्वद्वयवर्तिनोर्जलाद्योरसंकरमपि करोति। **सकलजगतां** सकलजगद्विषये इत्यर्थः। सेतुत्वम्—चेतनमात्रग्रहणे पारप्रापकत्वम्, चेतनाचेतनोभयग्रहणे च तस्य तस्य तत्तत्स्वभावे स्थापकत्वम्। तथा च श्रुतिः, 'एष सेतुर्विधरण एषां लोकानामसंभेदाय" इति। पराधिकरणद्युभ्वाद्यधिकरणभाष्यादिकम् अनुसंधेयम्। 'द्यौः सचन्द्रार्क' इति श्लोकार्थघटनमप्यत्र कामं भवतु। सरस्वती चोद्धतवेगा सर्वमभिप्लाव्य प्रवहन्ती शयानं भगवन्तं प्रेक्ष्य व्रीडिता शान्तवेगा क्रतुनिष्पत्तये प्रादुर्भूतं भगवन्तं प्राणंसीत्। यज्ञवाटमनाक्रम्योत्तरतो दक्षिणतश्चात्मानं विभज्य सागरपर्यन्तं प्रावहत्। रुष्टयाऽपि सरस्वत्या स्वकान्ता

भिमानितयाऽस्य भगवदाविर्भावक्षेत्रस्य शाश्वतानेकप्रवाहरूपेण प्रकटीभूय सुबहूपकृतम्, तथा यथोक्तकारिमूर्त्याविर्भावहेतुतयाऽपि । यथोक्तकारि-वरदराजमूर्त्योरुपायफलभूतयोः क्रमेणाऽऽविर्भावे उपायभूतौ सरस्वतीचतुर्मुखौ । सत्यव्रतनामवत् तुण्डीरनामाप्यन्वर्थमासीत् । तुण्डिः मुखं तदीरणात् तत्प्रेरणात् वाक्प्रेरणम् । द्रमिडभाषायां तोण्डैमण्डलमिति व्यवहारः । तोण्डै कण्ठः । तत्रत्यानां मुखेषु वेगवतीसलिलपानसंपन्नवेगातिशयकमनीयकण्ठध्वनिसरस्वत्याविर्भावो भगवत्प्रीणनस्तदाप्रभृतीति ॥ २५ ॥

नानारत्नैरुपचितगुणां नित्यसङ्गीतनादां
भूमेर्द्रक्ष्यस्युचितविभवं भूषणं तत्र काञ्चीम् ।
यस्यां नित्यं निहितनयनो हस्तिशैलाधिवासी
द्वन्द्वातीतः स खलु पुरुषो दृश्यते सत्यकामः ॥ २६ ॥

तत्रत्यकाञ्चीदर्शने प्रेरयति नानेति । अञ्जनाद्रिर्यथा शेषसर्पाकारेण तथा, काञ्चीनाम्नी नगरीयं मेखलापर्यायकाञ्चीसमानाकृतिर्भवन्ती भूमिमध्यभूषणायते । अतो द्वयोरपि काञ्च्योरन्वयिविशेषणं नानारत्नैरुपचितगुणामिति । मेखलायां गुणाः स्वर्णसूत्राणि । नवविधैर्मणिभिर्विचित्रसंदब्धैरुपचितगुणालंभितवृद्धिर्भवति सा । इयमपि नगरी 'रत्नं स्वजातिश्रेष्ठेऽपि' इति रीत्या स्वस्वजातिश्रेष्ठसर्ववस्तुलम्भितगुणातिशया । नित्यः संगीतनादः नृत्तगीतवाद्यत्रयात्मकसंगीतसंबन्धिनादः यत्र नगर्याम् । भूषायां तु संगीतान्तर्गतनृत्तकालिकस्वनादो नित्यो यत्र तथात्वम् । काञ्चीविशेषणं भूषणमिति । भूषणविशेषणत्वात् उचितविभवमिति नपुंसकम् । स्त्रीभिर्ध्रियमाणा काञ्ची तत्तदैश्वर्योचितविभवा भवति । तदुपयुक्तस्वर्णरत्नेयत्ता तत्तच्छक्तिमनुरुध्य भवति । अस्याश्च विभवः भूमिमहिमोचितः । तथाच काशीप्रभृतीनि मुक्तिनगराणि कालमेघोपमकारुणिकसमाह्वनकाञ्चीसाम्यं न लभन्त इति भावः । कैः शिरोभिः ; श्रेष्ठैरिति यावत् । तैः रत्नैरञ्चितत्वात् काञ्ची । कैः सुखैः संगीतादिजनितैरञ्चितजनसमृद्ध्या काञ्ची । 'क इति ब्रह्मणो नाम तेन तत्राञ्चितो हरिः' इति परमेष्ठ्याराधितभगवन्नित्यसांनिध्याच्च काञ्ची । अर्थद्वयं पूर्वार्धज्ञापितम । तृतीयमर्थं दर्शयति उत्तरार्धेन कामुकस्य कामिनीकाञ्च्यामेव लोचनव्यापारः । कं—सुखस्थानं कामिन्यवयवमञ्चतीति । तथाऽत्र भगवान् भूमिकाञ्च्यां नित्यनिहितनेत्र इति । हस्तिशैलस्य अधिवासी उपरि वसन् । अत एव द्विरदशिखरिसीम्नेति सीमपदप्रयोगः। शिखरवासे सत्येव पूर्णकाञ्चीनिक्षिप्तनेत्रता स्यात् । अस्मिन् शैले वसतोऽस्य द्वन्द्वातीतत्वं भूमिदेवीस्तनद्वयत्वेन प्रसिद्धदक्षिणोत्तरवृषभाचलयोः नेत्रव्यापाराभावात् । तेनास्य क्षेत्रस्य तदधिकत्वमुक्तं भवति । सुखदुःखरूपद्वन्द्वातीतत्वं प्रसिद्धमेव । यस्मात् अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः, तस्मात् अशनायापिपासे शोकमोहौ जरामृत्यू च द्वन्द्वानि अतीतः। अथ च पुरुषः पुरि शयानः शयानश्रीरङ्गनाथादन्यूनः । सत्यकामः सर्वकामप्रदश्रीनिवासादन्यूनः । एवं सत्यकामः सत्यसंकल्पश्च भवति । अस्य क्षेत्रस्यापि सत्यव्रतत्वेऽस्य सत्यसंकल्पत्वमनुक्तिसिद्धम। एष पुरुषः काञ्चीनिहितनेत्रत्वेनास्माभिर्दृश्यते चेत्, स्वयमेतन्निरीक्षितकाञ्ची-

क्षेत्रनिक्षिप्तनेत्रा भवामः, द्वन्द्वातीताः सत्यकामाः सत्यसंकल्पाश्च भवेमेत्यप्यत्र ज्ञाप्यते ।

किञ्च ज्ञानबले, वीर्यैश्वर्ये, शक्तितेजसी इति द्वन्द्वानीति संकर्षणप्रद्युम्नानिरुद्धग्रहणम् । तदतीतः पुरुषः परवासुदेवः **सत्यकामः** नित्यसमृद्धनित्यविभूतिस्थानः । सोऽस्यां काञ्च्यां निहितनयनः । **यत्र** विभवावताराः उचिताः, मात्रात्रयात्मकसंगीतनादात्मकप्रणवोपास्याः हार्दाः, रत्नमयत्वसुवर्णरजतरूपत्व-सालग्रामशिलामयत्वादिभिरुपचितगुणा अर्चाश्च विविधाः सन्ति । तथाच क्रमेण अर्चा–हार्द–विभव–व्यूह–पररूपमूर्तिपञ्चकप्रस्ताव इह । एवंभूतां ब्रह्माण्डभूमेर्भूषणं काञ्चीं पुरीं द्रक्ष्यसीति ॥ २६ ॥

**तामासीदन् प्रणम नगरीं भक्तिनम्रेण मूर्ध्ना**
**जातामादौ कृतयुगमुखे धातुरिच्छावशेन ।**
**यद्वीथीनां करिगिरिपतेर्वाहवेगावधूतान्**
**धन्या[न्]रेणूंस्त्रिदशपतयो धारयन्त्युत्तमाङ्गैः ॥ २७ ॥**

काञ्च्याः द्रष्टव्यत्वमुक्तम्; नन्तव्यत्वमाह **तामि**ति । **ताम्**—हस्तिशैलालंकृतत्वतद्वास्याधिष्ठितत्व–तन्नयननित्यगोचरत्वरूपनिरतिशयमहिमानम् । अनेन प्रणन्तव्यत्वे कारणमुक्तम् । **आसीदन्**–समीपं गच्छन् तां नगरीं **प्रणम** । आकाशे डयमानेन कथं प्रणामः कर्तुं शक्यत इत्यत्राह **भक्तिनम्रेण मूर्ध्ने**ति । **भक्त्या** स्नेहातिशयेन **नम्रेण** नतेन शिरसा । भूमिस्पर्शपूर्वकर्तव्यप्रणामविशेषासंभवेऽपि मूर्ध्नो नमनमेव प्रणमनम् । तत्र मानसी भक्तिरप्यपेक्षिता । मुक्तिदायकेतरनगर्यपेक्षया अस्या विशेषमाह **जाता**मिति । कृतयुगस्य **मुखे** प्रारम्भे **धातुः** चतुर्मुखस्येच्छातो जाताम् । कृतयुगप्रारम्भजातनगर्यन्तरवैलक्षण्याय **आदा**वित्युक्तम् । तत्रापीतरापेक्षया पूर्वता स्यात्, आदौ जातत्वादिति । ननु चतुर्मुखाज्ञप्तविश्वकर्मविहितायाः अस्याः कथं तदिच्छावशेन जातत्वमिति चेत्—विश्वकर्मापि एतदिच्छाविरहे किं कुर्यात् । यथा यथाऽयमैच्छत् तथा तथा विश्वकर्मा विज्ञाय निरमात् । अतोऽस्या एतदिच्छाधीनत्वम् । **वश**शब्दोऽधिकः इच्छावश्यतां विश्वकर्मनिष्ठां वक्तीत्यपि सुवचम् । अनेन श्रीरामकाले काञ्ची आसीदित्यत्र किं मानमिति शंका शमिता । रामस्य त्रेतायुगेऽवतीर्णत्वात् । कुत इमामैच्छत् विधातेत्यत्र हेतुं वदन्नेव, भूमिष्ठाऽपि स्वर्गवासिभिरपि विशेषतः पुरस्कृतेयं व्योमगेन त्वया प्रणम्यत इत्यत्र न विस्मय इत्याह **यदि**ति । **करिगिरिः** हस्तिशैलः। तस्य पत्युः देवाधिराजस्य ब्रह्मोत्सवादिसमये ये **वाहाः** वाहनानि हंसगरुडादयः तन्नेतृजनसंघा वा । तद्वेगेन **अवधूतान्** भूमेरुत्थापितान् **धन्यान्** भगवद्वाहननेतृपुरुषपदसंबन्धबलेन पूतत्वापादकत्वरूपसंपदं **धनं** लब्धवत । **धन्या** इति च पाठः । **यस्याः** नगर्याः **वीथीनां** **रेणून्** रजांसि अतिवेगात् स्वर्गमागतान् वा गगनमारूढान् वा भूमिष्ठान् वा यथालाभं **त्रिदशपतयः** चतुर्मुखत्वपञ्चमुखत्वषण्मुखत्वादिबहुमुखप्रसिद्धयः अन्ये च स्वकीयाधमांगेनापि पदा भूमिस्पर्शमप्यनिच्छन्तः तद्वैपरीत्येन **स्वोत्तमांगैः**—शिरोभिः सादरं धारयन्तो धन्या भवन्ति । यत्र क्वचित् कोणे भगवतो वासेनापि पवित्रा काञ्ची; तत्सेविजनपदन्यासाच्च । तद्रेणुप्राप्तिस्त्रिदशानामनायासेन

भवति तद्वाहवेगावधूननकाले । ब्रह्मोत्सवो हि ब्रह्मणा क्रियमाणः कृतप्रदर्शितश्च । तत्राऽऽहूता अनाहूताश्च सर्वे त्रिदशाः समागम्य काञ्चीभूमिरेणुलाभेन भाग्यवन्तो निवर्तन्ते ॥ २७ ॥

मन्दाधूतात् तदनु महितो निस्सृतश्चूतषण्डात्
पार्श्वे तस्याः पशुपतिशिरश्चन्द्रनीहारवाही ।
दूरात् प्राप्तं प्रियसखमिव त्वामुपैष्यत्यवश्यं
कम्पापाथःकमलवनिकाकामुको गन्धवाहः ॥ २८ ॥

काञ्च्याः दर्शनं प्रणमनं तत्राध्वश्रमपरिहारः नदीषुपलभ्य स्नानम् देवालयदर्शनम् देवतादर्शनमिति सर्वं क्रमेण विवक्षन् श्रमपरिहारकलाभमाह मन्देति । तदनु गन्धवाहस्त्वामुपैष्यति । तत्स्पर्शमात्रेण सम्यगुपचरितो भविष्यसि । तस्य सौगन्ध्यसौशात्यभोग्यत्वादयो गुणाः कथ्यन्ते । तदनु प्रणामपूर्वक त्वदासत्त्यनन्तरमेव महितः मन्दत्वदक्षिणदिगागतत्वादिना स्वभावत एव मानितः, तस्याः काञ्च्याः पार्श्वे उत्तरभागे त्वदाश्रिते, मन्दं यथा तथा त्वेनैवाऽऽधूतात् कम्पितात् चूतषण्डात् आम्रवृक्षयूहात् निस्सृतः बहिः प्रसृतः। पशुपतेः महाकाञ्चीनिलयस्य एकाम्रेश्वरस्य शिरस्संबन्धी यश्चन्द्रः, तस्य हिमरुचित्वात् यो नीहारः हिमम्, तं वहति प्रापयतीति तादृशः। कम्पेति वेगवत्याः स्रोतोभेदः कम्पा । उत्तरश्लोके विवरिष्यते । तस्याः पाथसि जले वर्धमानां कमलवनिकां कामुकः कामयमानः । एवं विशेषणत्रयेण शैत्यसौगन्ध्यपावनत्वातिशयो गमितः । ईदृशो गन्धवाहः । ततः प्रागपि अनेकान् गन्धान् वहन् मारुतः दूरात्-तुण्डीरमण्डले क्वचिदप्यनवरुद्ध प्राप्तं प्रकर्षेण प्रीत्या प्राप्तं समागतं त्वाम्, प्रियसखमिव, समानसुखदुःखं प्रीतिपात्रं मित्रमिव उपैष्यति उपचरिष्यति । अवश्यमित्यनेन तत्स्थले मारुतसंचारनियमो ज्ञाप्यते । महित इति वंशविद्यादिकृतं महत्त्वं विशेषणान्तरद्वयेन वस्त्रालंकारादि च कमलवनिकाकामुकत्वानुरूपमुक्तम् । गन्धवाह इति सत्कर्मनिरततया, 'एवं पुण्यस्य कर्मणो दूरात् गन्धो वाति' इत्यादिरीत्या प्रसिद्धत्वञ्च । ईदृशेन सपत्नीकेन गृहस्थतल्लजेन क्रियमाण उपचारस्त्वया हंसेन स्वीकर्तव्य इति ज्ञापितं भवति ॥ २८ ॥

वर्णस्तोमैरिव परिणता सप्तभेदैर्महौघैः
मान्या मध्येनगरमभितः सेविता देवताभिः ।
स्वच्छस्वादुप्रसरसुभगा स्वामिनी वः कवीनां
वेगासंज्ञां वहति महतीं वल्लभा पद्मयोनेः ॥ २९ ॥

अथ वेगवत्यां स्नाहीति विवक्षुः प्रथमं सरस्वत्यास्तत्र बहुस्रोतोरूपतामाह वर्णस्तोमैरिति । सरस्वती हि वाग्देवता नदीरूपेण प्रोढवती । अतो वाक्साम्येन चमत्करोति । सरस्वत्यां भाषायां वर्णस्तोमाः अक्षरस्कन्धाः सप्तविधा भवन्ति । अकारादिर्विसर्गान्तः अच् इति कश्चित् स्तोमः स्वराख्यः । गीतिस्वरस्यैतदाश्रितत्वात् एषां स्वरत्वम् । अत्र वर्गाः पञ्चकरूपाः पञ्च कचटतपाः । यकारादयोऽष्टौ

तदधिका वा सप्तमः स्तोमः। महौघैः महिष्ठवाङ्मयहेतुभिः। नदीपक्षे औघैः एतत्तुल्यता सप्तत्वेन रूपेण। प्रवाहैः परिणता। सप्त प्रवाहरूपान् परिणामान् प्राप्ता। सप्त भेदाश्चैवं हस्तिगिरिमाहात्म्ये, "शुक्तिका कनका सुप्रा कम्पा पेया च वञ्जुला। चण्डवेगेति सप्तैताः कीर्तिताः सप्तनामभिः॥ विष्णोर्दक्षिणभागेन प्रययौ सागरं प्रति। तस्मा वेगवतीत्याख्या बभूव भुवनत्रये॥" इति। सरस्वतीनद्याः विष्णोरुत्तरभागादिना बहुधा विकीर्णत्वं सागरगामित्वञ्चेतः पूर्वं तत्रैवोक्तम्। सप्तसु मध्ये एकस्याः वेगेति नाम्नो माहात्म्यतोऽवगमेऽपि सप्तधा परिणतायाः पूर्णाया एव वेगासंज्ञा श्लोकतः स्वरसमवगम्यते। 'विदिता वेगवत्याख्ययैषा' इति सुवचत्वेऽपि तस्मिन्नेवार्थे वेगेति शब्दप्रयोग इति मन्तव्यम्। 'सप्तसु एकैव संप्रति शिष्टा। सा च वेगा। सैव वेगवती' इति ज्ञाप्यत इव। मान्या हयग्रीवानुग्रहास्पदत्वात् यथोक्तकारितन्मूर्तिविधेयत्वाच्च मान्या। सा सरस्वती सत्यलोके मध्येनगरं सर्वतः सर्वदेवतासेविता। इयमपि नदी काञ्चीमध्ये स्थापिताभिरनेकाभिरर्चामूर्तिभिरादृता। तथा हस्तिशैलेश्वरदिदृक्षासमागताभिश्च देवताभिः स्नानार्थं सेविता। एवं सरस्वत्याः वाक्प्रसरः स्वच्छः अत्यन्तनिर्दोषः यथावदभिव्यक्तवर्णसंबन्धी विवक्षितार्थविशदप्रकाशनचुञ्चुश्च। स्वादुः तत्तदुचितरसाविर्भावकत्वात्। तादृशप्रसरेण सुभगा मनोज्ञेति सर्वलक्षणसंपन्नत्वमुक्तम्। नद्यपि प्रसरणवेगात् अत्यन्तस्वच्छा भवति। अत एव स्वाभाविकमाधुर्याविर्भावः। वाग्देवता कवीनां कवयतां स्वामिनी। दिव्यस्थानादवतरन्ती हि पादन्यासं प्रथममनघा भारती वाल्मीकौ चक्रे। तेन स आदिकविरासीत्। 'मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती' इति कथनात् सरस्वतीप्रेरको ब्रह्मापि कवीनां स्वामी। तत्पत्नी स्वामिनी। ब्रह्मापि कविः; भारती हि तत्र रमते रसभावगुणीभूतैरलंकारैर्गुणोदयैः। किञ्च सर्गादौ के महाजले भगवन्नाभिपद्मे स्थितः विः पक्षी सः। अत इतरजलपक्षिरूपहंसादिकविस्वामित्वम्। हंसस्यास्य तद्वाहनहंसजातीयत्वाच्च सर्वकविस्वामिनी सा। वेगासंज्ञा गंगासंज्ञापेक्षयाऽपि महती। अतिशयेन गच्छतीति गंगा। सोऽतिशयो वेगेति पदेन व्यक्तमुच्यते। गंगा 'सीता चालकनन्दा च चक्षुर्भद्रा च संस्थिता' इति चतुर्भेदैव, इदं सप्तभेदा। अनिश्चितभर्तृकगंगापेक्षया अस्याः पद्मयोनेर्वल्लभात्वमप्यतिशयान्तरम्। पद्मयोनिपदेन नारायणस्नुषेति च सूचयति। श्वशुरस्य हस्तिगिरिपतेः परिचरणार्थमनाहूताऽपि प्रवृत्तेति सहधर्मचारिणीति प्रीत्यतिशयात् वल्लभाऽऽसीत् चतुर्ब्रह्मणः॥

(2) वर्णस्तोमैरित्यनेन, 'वर्णस्तोमैर्वकुलसुमनोवासनाम्' इति पादुकासहस्रश्लोकः स्मार्यते। अतः श्रीवकुलभूषणदिव्यसूरिसूक्तिरिह स्तूयते। ननु त्रेतायां स्थितो रामः कथं पश्चात्तनसूक्तीर्वेदेदिति चेन्न— व्यङ्ग्यार्थान्तराणां कविविवक्षितत्वस्यैवाभिप्रेतत्वेनादोषात्। इयं स्वच्छस्वादुप्रसरसुभगा। कवीनां स्वामी, दिव्यसूरिरयमेव; एतदीयेयम्। पद्मस्य—ब्रह्माण्डस्य योनिः कन्दभूतः (नाभिक्कमलमुदर्किलंगु) परमात्मा; तस्यात्यन्तमिष्टा। सप्तभेदैः गाथाव्यूहैः परिणता च; तिरुविरुत्तम, तिरुवाशिरियम्, पेरियतिरुवन्तादि, श्रीमुखसूक्तौ उपायपरं प्रथमशतकम्, उपेयपरं द्वितीयम्, उभयोपयोगिदिव्यमंगल-

विग्रहपरं तृतीयम्, उक्तार्थविवरणरूपं सर्वमवशिष्टमिति चतुर्धा विभाग: इति सप्त। प्रथमगाथाविवरणं त्रिंशता, तद्विवरणं त्रिशत्या, तद्विवरणं शिष्टेनेत्यपि चातुर्विध्यं श्रीमुखसूक्ते:। इदं दिव्यप्रबन्धचतुष्टयमपि श्रीदेवाधिराजविषयकमित्याशयेनात्रैतत्प्रस्ताव:। यादवाद्रीशश्रीमन्नारायणविषये 'ओरुनायकमाय्' इति गाथेव, उयर्वरेत्यादिगाथा देवाधिराजविषये श्रीभाष्यकारै: समर्पितेति सुप्रसिद्धम्। "प्रथमशतके वीक्ष्य वरदम्" इति चाचार्या: प्रथमशतकं पूर्णं तद्विषयमाहु:। एवमेव, 'इमैयोर् तलैवा' इत्युपक्रमगाथायां पश्यतां तिरुविरुत्तप्रबन्धोऽप्येतद्विषयक इति व्यक्तम्। एवमन्यदपि। एवम्भूताया: सूक्ते: अभितो देवताभि: सेवितत्वमप्यस्ति। भगवन्मूर्त्यन्तराणामपि यथायथमत्र वर्णनात्। सर्वा हि देवता: श्रीशठकोपमुनिसविधमेत्य स्वापेक्षामावेद्य स्वविषया: गाथा अलभन्त। देवाधिराजस्तवनप्रवृत्तोऽयं मध्ये ता अपि प्रास्तौषीदित्याशयेन मध्ये इत्युक्तम्। यद्वा कवीनामिति, "स सामभिर्यत् तत् कवयो वेदयन्ते" इति श्रुतिप्रसिद्धा: सूरय एवात्रावतीर्णा: सर्वे गृह्यन्ते। तेषां स्वामी श्रीवकुलभूषणदिव्यसूरि:। तदीया-तेन श्रीमन्नाथमुनये उपदिष्टा सर्वैतत्तदितरदिव्यसूरिगाथासंहतिरत्र विवक्षिता। एवमस्य श्लोकस्य दिव्यप्रबन्धविषयकत्वमभिमतमिति उपरितनश्लोके सारस्वतमिति पदप्रयोगादपि ज्ञायते। तद्धि, "यस्य सारस्वतस्रोतो वकुलामोदवासितम्" इति सारस्वतपदस्रोत:पदयुक्तं स्मारयति। तत्र सारस्वतपदेन श्रीपराङ्कुशसूरिप्रबन्धमात्रस्य तीर्थस्य विशेषत: सर्वैरवगाह्यमानस्य ग्रहणम्, अत्र तु सर्वप्रबन्धसंहते:। अस्या: सप्तविधत्वञ्च—स्वभावत एव परवासुदेवविषयिण्या: प्रवाहे, प्राकृतभूमौ क्षीरसागर-उत्तरदेश-तुण्डीरदेश-मध्यदेश-चोलदेश-पाण्ड्यदेश-केरलदेशरूपस्थानसप्तकाविर्भूतभगवद्दिव्यमंगलविग्रहविषयकत्वात्। परमपदमंगलाशासनं तु नित्यसूरिकार्यं प्रागेव सिद्धमत्र प्रबन्धे केवलमनुवादमात्रम्। अथवा परमपदनाथ-व्यूह-त्रिमूर्त्यन्तर्गतविष्णु-सूर्यमण्डलान्तस्स्थोपेन्द्ररूपविष्णु-भौमविभव-हार्द-सर्वार्चाविषयकतया सप्तभेदत्वम्। वेगेनार्थबोधकत्वात् सर्वफलहेतुत्वादिना वेगेति कथनार्हत्वमपि। यदा तु वेगेन गाथापादद्वयप्रथमप्रतीकमात्रसेवनं युक्तम् अयुक्तं वा, क्रियते, तदापि भगवत्प्रियभूता पूर्णगाथासंज्ञानं वहति। एवमस्या: नद्या: सामान्यतो वाक्साम्यवत् दिव्यप्रबन्धसाम्यमपीति प्रशंसा ॥ २९ ॥

तीर्थे पुंसां शमितकलुषे तत्र सारस्वताख्ये
स्नात्वा सार्धं मुनिभिरनघै: सम्यगुल्लासिताङ्ग:।
विश्वं चित्ते विगतरजसि व्यञ्जयन्तीमशेषं
वक्ष्यस्यन्तर्बहिरपि परां शुद्धिमक्षेपणीयाम् ॥ ३० ॥

अथ तत्र नद्यां पवित्रतमं स्नानघट्टं निर्दिश्य तत्र स्नानमर्थयते तीर्थे इति। तत्र नद्यामन्तर्गते सारस्वतनाम्नि शमितानि कलुषाणि पापानि स्नातानां येन तस्मिन्। पुंसां जीवानाम्। अस्य कलुषेऽन्वय:। तीर्थे सुखावतरणस्थाने। अस्तु वा पुंसां पुरुषाणां स्नानस्थानं स्त्रीणां तीर्थादन्यत्। अनेन वेगवतीत्वात् कदाचित् पूर्णप्रवाहालाभेऽपि तत्तीर्थं तत्र स्थिरमिति ज्ञाप्यते। अनघै: प्रागेव बहुकृत्वस्तत्र स्नानात्

निरस्तपापैः **मुनिभिः** तत्रत्यमूर्तिमननपरैः सह स्नात्वा ; तत्स्नानलब्धमहत्त्ववति ततः स्नानं कृत्वेति वा। पूर्वमञ्जनाद्रिवर्णने सर्वमनुजनिर्जरमेलनमुक्तम् । इह विलक्षणव्यक्तिसंसर्ग उच्यते। **सम्यक् उल्लासिताङ्गः** आर्द्रतापनयनाय विस्तारितविकासितपक्षादिकः भगवद्भागवततीर्थमहिम्ना **अक्षेपणीयाम्** अनाश्यां **परां** स्थलान्तरस्नानादिलभ्यशुद्ध्यधिकां **अन्तः बहिरपि शुद्धिं** अन्तः अज्ञानादिनिवृत्तिरूपाम् , बहिः धूलि-धूसरत्वाद्यपगमवत् अतिभास्वरस्वरूपाञ्च शुद्धिं **वक्ष्यसि**-लप्स्यसे। वहधातोः रूपमिदम्। शुद्धेः फलं दर्शयितुं विशिनष्टि **विश्वमि**त्यादिना। **विगतरजसि** । यथा बाह्यमंगं विगतरेणुत्वात् विगतरजः, तथा चित्तमपि रजोगुणापनयात् विगतरजः। तमोनिवृत्तिरप्युपलक्ष्यते। **विश्वं व्यञ्जयन्तीं** निर्मले दर्पण इव मनसि सर्वसाक्षात्कारयोग्यताधायिकां शुद्धिम् । "विश्वं विष्णुः" इति प्रसिद्धभगवद्व्यञ्जिकाञ्च । ननु **विश्वमि**ति सर्वस्योक्तत्वात् **अशेषमि**ति व्यर्थमिति चेन्न ; सर्वधर्मिग्रहणे तद्धर्मेष्वपि न किञ्चिदव्यञ्जितमिति ज्ञापनार्थत्वात् । यथोच्यते, 'यः सर्वज्ञः सर्ववित्' इति। तथा **विश्वमि**ति व्यष्टिमात्रग्रहणं न कार्यम् ; समष्टिरपि प्राप्नोति अशेषपदम् । वेगवतीस्नानसक्तानां तदैव यथावस्थितं तत्त्वज्ञानमाविर्भवतीति ज्ञापितं भवति ॥

(2) पूर्वश्लोकप्रस्तुतरीत्याऽत्र **सारस्वताख्यं** तीर्थमिति श्रीपराङ्कुशदिव्यसूरिदृष्टा द्रमिडोपनिषदुच्यते। तस्य तीर्थस्याधीतवेदवेदान्तभागोत्थित-परतत्त्वपरमहितपरमपुरुषार्थादिविषयकविविधविशयव्युदासकत्वात् **शमितकलुषत्वम्** । तत्र **स्नानमवगाहनमन्त**र्निगूढार्थग्रहणौपयिकम् । अनुभवाधीनो रोमाञ्चः कथ्यते **उल्लासिताङ्ग** इति। चित्ते **व्यञ्जयन्तीमि**त्यनेन 'केट्टरुलाय् अडियेन् शेय्युं विण्णप्पमे', 'एन् मनने' इति सूचितां हृदयनिक्षिप्तहस्ततामात्मनः प्रकटयता दिव्यविग्रहेण तत्र विराजमानस्य श्रीवकुलभूषणमुनेर्हृदये सर्वगाथाविर्भावोपयुक्तज्ञानभक्तिभरितता प्राक् स्थिता व्यञ्जिता । तद्वत् अन्येषामपि वेगवतीस्नानात् संपत्स्यत इति भावः। पतिप्रेरणाधिकं गौरवं श्वशुरप्रेरणे निक्षिप्य सरस्वती इहैवं सर्वेषामुपकरोति। **विगतरजसी**ति फलान्तरकामनाराहित्यमुक्तम् । **अन्तश्शुद्धिः** आत्मस्वरूपगतसर्वाघनिवृत्तिः । **बहिश्शुद्धिः** धर्मभूतज्ञाने संकोचरागद्वेषाद्यवस्थाराहित्यम् । **अक्षेपणीयाम्** । ग्रन्थान्तरतः कदाचिज्जातं तत्त्वज्ञानं पुनरन्यभागनिरीक्षणे क्षिप्तं भवेत् ; द्रमिडोपनिषदुत्पादितं तु अकम्प्यमवतिष्ठत इति भावः॥३०

**तस्यास्तीरे सरसिजभुवः सौम्य वैतानवेदिः**
**दिव्यं कुर्वन् द्रमिडविषयं दृश्यते हस्तिशैलः ।**
**यस्योपान्ते कृतबहुतपो यापयित्वा शरीरं**
**वर्तिष्यन्ते चिरमपि पदे वासुदेवस्य धन्याः ॥ ३१ ॥**

एवं वेगवतीस्नानपूतस्य वरदराजसेवां कर्तव्यां विवक्षुः तत्स्थानं हस्तिशैलं प्रस्तौति । अञ्जनाद्रेर्दूरत एव दर्शनं प्रथमभावि प्रागुक्तम् । इह तु काञ्चीं प्रविश्य स्नात्वा कश्चिद्गमनेन हस्तिशैलो दृश्यते इति वर्णनात् नायमुन्नतविशाल इति ज्ञाप्यते। कथं परिमाणन्यूनतेत्यत्र **वैतानवेदि**रिति स विशेष्यते। हे **सौम्य** प्रियदर्शन । तव प्रियदर्शनः शैलस्तत्र वर्तते । स **सरसिजभुवः** सरसिजात् पश्चात् भूतस्य

ब्रह्मणः कृतयुगे भगवत्प्रीणनायाश्वमेधमनुष्ठितवतो वैतानवेदिर्या, सैव । वितानः क्रतुः ; तत्संबन्धिनी वेदिः—अग्निहविरादिनिक्षेपभूमिर्यथाविधि निष्पादिता । तादृशः शैलो हस्तिनामकः द्रमिडविषयं कृत्स्नं द्रमिडदेशं स्वसंबन्धेन दिव्यं कुर्वन् । अन्यदिव्यताधायकत्वे स्वस्यापि दिव्यत्वं कैमुत्यसिद्धम् । अनेन द्रमिडविषयसर्वदेवालयापेक्षयाऽस्य प्राशस्त्यं प्रतिपादितं भवति । ननु सुप्रसिद्धे श्रीरंगे विराजति कथमेवमिति चेत् — उच्यते । उत्तरदेशं दिव्यं कुर्वन्नस्ति श्रीवेंकटशैलः । अयञ्च हस्तिशैलो द्रमिडविषयम् । वराहकल्पारम्भे वेंकटशैल आविर्भूत इति प्रसिद्धम् । अयञ्च कृतयुगे चतुर्मुखे समागत्य अश्वमेधमनुष्ठितवति। श्रीरङ्गं तु चतुर्मुखाराध्ये भगवति साकेतं समाश्रितवति त्रेतायुगकालिकतदागमनप्रतीक्ष शेषपीठसमागमात् संपन्नातिशयमिति क्रमः । श्रीरंगनाथसन्निधानात् पश्चादतिशयो वर्धमानः इति, श्रीभाष्यकारनिरन्तरवासाच्चातिशयान्तरमिति चान्यत्। ईदृशः शैलः तस्याः वेगायाः तीरे उत्तरस्मिन् दृश्यते। न केवलमयं शैलः भौमं द्रमिडविषयं दिव्यं करोति ; किंतु दिव्यमपि द्रमिडविषयं करोति । दिव्याः सर्वे अत्र सेवार्थमागत्य द्रमिडाख्यविषयभाजो भवन्ति। दिव्य उपरिस्थितो देशः द्रमिडानां विषयः प्राप्य देशोऽपि क्रियतेऽनेन ॥ दृश्यते । संनिहितत्वात् स्वयमेव दृश्यो भवेत् । ब्रह्मकृतयागप्रकारं तन्महिमवर्णन व्याजेन सूचयति यस्येति । यस्य शैलस्य उपान्ते समीपे । द्रमिडविषयस्य सर्वस्य दिव्यत्वेऽपि समीपदेशस्य प्रभावोऽतिशयित इति भावः । कृतवसतयः वासं कृतवन्तः । यद्वा क्षेत्रवासः कार्य इति गृहं परिकल्प्य नियतं वसन्तः । वसतिनिर्माणं भूतकालिकम्, वासस्तु वर्तमानोऽनुवृत्तः । स्वयं वासस्याकरणेऽपि परार्थे वासस्थानकारिणामपि तत् फलमिति च प्रशंसाऽभिमता । एवम्भूताः तद्वशादेव निष्पन्नोपायाः शरीरं यापयित्वा । शरीरस्थितिपर्यन्त एव विलम्बः । तावदेव चिरम् । तावति मोक्ष्यन्ते । अतः कदाकदेति प्रतीक्षमाणा अपि भवन्तीति चित्तपरिपाकः यापयित्वेति णिचा सूच्यते । कृतवसतयो यापयित्वेत्यनेन शरीरवियोगकाले तत्र वासस्य तत्फलमिति च सिध्यति । धन्याः धनलब्धारः लब्धोपायाः विततसि तमसः परस्तात् स्थिते वासुदेवस्य परस्य पदे श्रीवैकुण्ठे वर्तिष्यन्ते, न पुनरावृत्तिस्तेषाम् । लट्प्रयोगः पूर्ववत् इतःपरमपि सर्वस्मिन्नपि युगे एतत् फलं ध्रुवमिति ज्ञापयति । इत्थञ्च ब्रह्मणा परमैकान्तिना देवतान्तरयजनं विना शुद्धरीत्या अश्वमेधयजने कृते तदर्पितसर्वहविरास्वादनार्थमाविर्भूतो महादेवीसमेतो महाकारुणिकः तत्प्रार्थनया तत्र कृतवसतिः तत्र रुचिमतः सर्वान् परमैकान्तीकरोतीति तादृशयागफलसिद्धमिदं हस्तिगिरिमाहात्म्यमित्युक्तं भवति ॥ वरदेन ब्रह्मणे दत्तो वरश्चैवम्—"एकरात्रं त्रिरात्रं वा सप्तरात्रमथापि वा । निवसेत् यः स सहसा मुच्यते सर्वकिल्बिषैः ॥ जातो वाऽत्र मृतो वाऽपि पापानामतिपापकृत् । मम लोकमवाप्नोति न पुनर्भवमृच्छति ॥" इति । तत्रत्यभगवद्दर्शनाभावेऽपि वासमात्रफलमेतावत् इदंशैलमहिमायत्तम् ॥

(2) वेदिशब्द इकारान्तोऽपि विद्वद्वाच्यपि भवति । चतुर्मुखलम्भितप्रचारसर्वसनातनधर्मस्थापकः पण्डितवर्गः शैलवत् अप्रकम्प्यः परकीयस्थूलहस्तावलेपलोपकातिशयितमहिमहस्तसंपन्नः द्रमिडदेशे वैदिक-

मतनिरन्तरानुवृत्तिव्यवसायी कश्चित् श्रीवात्स्यवरदार्यश्रीमद्वेदान्तदेशिकादितुल्यमहात्मानुवृत्तः सर्वदा दृश्यत एव। भगवदनुग्रहात् तत्र सर्वलोपो न भवति। नन्वेवं कृतहस्तत्वे कामक्रोधेर्ष्यादिदुष्टत्वं स्यादित्यत्र तथाविधव्यावर्तनायापि **शैल** इत्युक्तम्। शीलस्यायं शैलः। शीलमेव मूर्तम्। शीलस्यायं परिणाम इति महागुणत्वमुदितं भवति। एवं दिव्यं परमपदस्थानमपि द्रमिडसुखलभ्यं द्रमिडभाषागाथानुभवपरम् 'पल्लाण्डुंपल्लाण्डे 'पाडुवोमे' इति गानव्यापृतं करोति। तदा तदा आविर्भवतस्तस्य तस्य महात्मन **उपान्तेकृतवसतयः** तदन्तेवासिन इति यावत्। **धन्याः** 'सा हि श्रीरमृता सताम्' इति संपदं कैंकर्यधनञ्च प्राप्नुवन्तः **वासुदेवपदे वर्तिष्यन्ते** — तत्राऽऽलये वेदान्तव्याख्यानादि करिष्यन्ति। वासुदेववत् मान्याश्च भविष्यन्ति। अन्तेवासिनां वासुदेवतुल्यमहिमत्वे गुरोर्महिमा निस्समाभ्यधिक इति निश्चीयते॥ ३१॥

**सञ्चिन्वाना तरुणतुलसीदामभिः स्वामभिख्यां**
**तस्यां वेद्यामनुविदधती श्याम(शीत)लं हव्यवाहम्।**
**भोगैश्वर्यप्रियसहचरैः काऽपि लक्ष्मीकटाक्षैः**
**भूयश्श्यामा भुवनजननी देवता सन्निधत्ते॥ ३२॥**

वितानवेदिभूतहस्तिशैलदर्शनमुक्तम्। तत्र भगवत्सेवार्थगमनं वक्तुं तत्र तत्सन्निधानमाह **संचिन्वाने**ति। पूर्वं (२६) 'द्वन्द्वातीतः स खलु पुरुषो दृश्यते सत्यकामः' इत्युक्त एवायम्। अथापि वैतानवेदिप्रस्तावात् तस्य वेदिगताग्नित्वेन वितानाराध्यदेवतात्वेन च वर्णनमत्र क्रियते। यज्ञस्य देवतासापेक्षत्वात् यज्ञाराध्या देवतेहायमेवेति ज्ञापनार्थः **देवता**शब्देन निर्देशः। स्त्रीलिङ्गनिर्देशोऽपि पुरुष एवेति ज्ञापनार्थमपि प्रथमतृतीयपादघटनम्। वेदिगतत्वात् अग्नित्वेन कल्पना। आराध्यतया देवतात्वं वास्तवम्। अस्यैवाराध्यत्वं कस्मादिति चेत्—परत्वात् लक्ष्मीविशिष्टत्वात् सर्वजगत्कारणत्वाच्चेति वक्तुं त्रिविधविशेषणनिर्देशः। **स्वाम्** — स्वरूपासाधारणीम् **अभिख्यां कान्तिम्** श्यामच्छायाम्। "श्यामा एकरूपा भवन्ति। एवमिव हि प्रजापतिः" श्यामरूपस्यैतदसाधारण्यं प्रसिद्धम्। **तरुणतुलसीदामभिः** स्वासाधारणैः अन्यदेवतासंबन्धरहितैः नवतुलसीकृतैर्माल्यैः स्वकान्तिं **संचिन्वाना** पुष्णन्ती। एवं परत्वमुपवर्ण्य तस्याऽऽराध्यतया संनिहितत्वमाह **तस्या**मिति। पूर्वोक्तायां हस्तिशैलरूपायामध्वमेध**वेद्यां हव्यवाहम्** अग्निमनु**विदधतीम्**—अनुकुर्वाणाम्। अग्निवत् स्थिताम्, वेदित्वभावनावसरेऽस्मिन् अग्नित्वभावनाऽपि स्वरसतो भवति। श्यामवर्णस्य कथमग्नित्वेन ग्रहणमित्यत्राह **श्यामल**मिति। अग्नित्वबुद्धिं दृढां श्यामत्वं न वारयति। अग्निरिदानीं श्याम आसीदिति तर्कयत इति भावः। नेदमसंभावितम्। स्वासाधारणमौष्ण्यं परित्यज्य शीतो भवति स रति ज्ञातमस्माभिः 'शीतो भव हनुमतः' इत्यादितः। असाधारणधर्मस्यैव त्यागे रूपत्यागो नासंभवी। एवमर्थविशेषसूचनायैव तालकोशे लेखकैः श्यामलमित्यनेन सह **शीतल**मित्यपि न्यवेशि। अथ तदपि पाठ्यत्वेन गृहीतम्। श्यामवर्णस्य तापशामकत्वं छत्रादौ प्रसिद्धम्। तत एव शीतलत्वमपि सिद्धम्। भगवति अग्नित्वबुद्धिः न केवलं

वेदिस्थत्वमात्रेण, किंतु हव्यवाहत्वेनापि—ब्रह्मार्पितसर्वहविर्ग्रहीतृत्वेनापीति दर्शयितुं पदान्तरमुपेक्ष्य हव्यवाहपदप्रयोगः । अयं विशेषः—सोऽग्निर्हव्यं परेभ्यो देवेभ्यो वहति । अयं तु स्वार्थमेव । अत्र, 'तत्तत्पदैः' इति वरद्गुरुपञ्चाशच्छ्लोकोऽनुसंधेयः । एवमुदितमाराध्यत्वं वक्ष्यमाणं कारणत्वञ्च लक्ष्मीविशिष्टस्यैवेति दर्शयति तृतीयपादेन । भोगश्चैश्वर्यञ्च भोगैश्वर्ये । आराध्यत्वोक्त्या भोक्तृत्वं सिद्धम् । "भोगमात्रसाम्यलिंगाच्च" इत्याद्युक्तोभयविभूतिविशिष्टानुभवरूपे भोगे तथा सर्वजगद्व्यापाररूपे ऐश्वर्ये च भगवतः प्रियाः सहचराश्च भवन्ति लक्ष्मीकटाक्षाः । उभयत्रास्य तत्कटाक्षसापेक्षत्वस्य नित्यत्वात् प्रियत्वात् । तयाऽपि प्रीत्या तत्करणात् सहचरत्वम् । तथाभूतैस्तैः भूयः अतिशयेन श्यामा वर्णातिशयं प्राप्ता काऽपि विलक्षणा वर्णविषये मेघातसीतमालाकाशनीलोत्पलादिसादृश्यमसहमाना, सर्वचिदचिद्विलक्षणा च कारुण्यमूर्तिः भुवनानां जननी सर्वजगत्कारणभूता ब्रह्मकृतयज्ञाराधिता देवता 'सेयं देवता' इत्यादिप्रसिद्धा च संनिधत्ते । ब्रह्मा तां देवतामाराध्यात्रैव नित्यसांनिध्यमपेक्षाञ्चक्रे । तदर्थमेवायं यज्ञ इति ततःप्रभृति तत्रत्यपरमैकान्तिप्रभृतिसर्वाराध्यदेवतात्वेन च संनिधत्त इति भावः । 'लक्ष्मीनैलोत्पलश्रीः' इति श्लोकोऽप्यत्रानुसंधेयः ॥ ३२ ॥

लक्ष्मीविद्युल्ललितवपुषं तत्र कारुण्यपूर्णं
मा भैषीस्त्वं मरकतशिलामेचकं वीक्ष्य मेघम् ।
शुद्धैर्नित्यं परिचितपदस्वादशैर्देवहंसैः
हंसीभूतः स खलु भवतामन्ववायाग्रजन्मा ॥ ३३ ॥

ननु भूयश्श्यामेति भवदुक्तिश्रवणे मेघश्यामेति मे धीरुदेति । यद्येवं मेघसाम्यम्, तर्हि हंसस्य मे तत्सांनिध्यमनिष्टमिति शंकायाम्—यथाऽयमग्निर्भवन्नपि अग्निस्वभावौष्ण्यादिरहितः, तथा मेघो भवन्नपि हंसविरोधादिमेघस्वभावरहितः प्रत्युतात्यन्तमनुकूलः। न चास्य साक्षान्मेघत्वमस्ति, किं तु साम्यमात्रम्, हंसत्वं तु साक्षादेवास्तीत्याह लक्ष्मीति । तत्र वेद्यां स्वम्, लक्ष्मीरेव विद्युत्—तटित् तया ललितं मनोहरं वपुः मूर्तिः यस्य तम्, कारुण्यपूर्णम् । यथा मेघो जलमात्रेण पूर्णः सर्वतो जलमयः, तथाऽयं कारुण्यमयः कारुण्यप्रतिकोटिभूतकोपलेशेनापि रहितः । मरकतशिलावत् मेचकः कृष्णश्च । ननु मरकतस्य हरितवर्णत्वात् तद्वन्मेचकत्वं नीलमेघस्य कथम्, वर्णभेदादेव हि इन्द्रनीलपद्धतिरन्या मरकतपद्धतिश्चान्या पादुकासहस्रे विभक्तेति चेत्—नीलहरितयोरनतिभेदात् न्यायसिद्धाञ्जने रूपावान्तरभेदनिरूपणे रूपचातुर्विध्यमेवेष्टम्', 'तच्च सितरक्तपीतकृष्णभेदम्' इति । भगवतश्च युगभेदेन एतद्वर्णचतुष्टयमेव वर्ण्यते । यद्यपि कृष्णान्तर्भावेऽपि मेघमरकतयोर्वर्णे अवान्तरवैषम्यमस्ति । अत एव, तत्र, "मरकत-मधुकर-जलधर-तमाल-दूर्वादीनां कृष्णभेदाः" इति मरकतजलधरयोर्वर्णभेदः प्रादर्शि—अथापि मरकते नानाविधभेदसत्त्वात् मेघे च निपीतजलवैषम्यमूलम्, विचित्रवर्णेन्द्रधनुरादिसंबन्धमूलञ्च वर्णवैषम्यसंभवात् मेघविशेषमरकतविशेषयोः सावर्ण्यं संभाव्य, उभयवर्णकरम्बितत्वं भगवद्वर्णे विभाव्य

चैवमुक्तिरिति ध्येयम् । वक्ष्यमाणार्थाभिप्रायेण वा मरकतशब्दप्रयोगः । तादृशं भगवन्तं मेघं वीक्ष्य—मेघत्वेनान्यथा गृहीत्वा मा भैषीः—भीतो मा भूः । तत्त्वज्ञाने सत्यपि दोषवशात् विभ्रमो भवन् सपदि शंकामंकुरयेत्, तन्मा भूदित्यर्थः । अयं हि कारुण्येन पूर्णः, न तु जलेन; एवं व्यतिरेकसूचनायैव जलपदाप्रयोगः । लक्ष्म्या ललितः, न तु विद्युता । तथा मरकतवन्मेचकः; न तु मेघवर्णेन । किञ्चायं हंसत्वादवश्यसेव्यश्चेत्याह शुद्धैरिति । सः भगवान् त्वादृशैः त्वत्सदृशैः । त्वमिव दृश्यन्त इति त्वादृशाः । सादृश्यं शुद्धत्वेनेत्याह शुद्धैः धवलैः निर्मलैश्च देवहंसैः देवाश्च हंसाश्च तैः देवाः—गृहस्थाः, हंसाः—संन्यासिनः, देवाः—ब्रह्मादयः उभयभावनाः कर्मभावनाश्च, हंसाः—ब्रह्मभावनाः । तैः नित्यं सर्वदैव परिचितपदः सम्यगनुभूयमानपरिचर्यमाणपदारविन्द एव सन् अनवरतहंसपरिचयादिव कदाचित् हंसीभूतः शुद्धैः देवहंसैः देवो ब्रह्मा, हंसाः सनकादयो विरक्ताः तैः तत्त्वज्ञानकांक्षिभिः परिचितपदः अभ्यस्ततत्त्वोपदेशवाक्यनिकुरुम्बः । विशदमिदं वेदोदन्वदिति श्लोके । एवं हंसत्वे वर्तमाने मेघत्वं कथम् । मेघसादृश्यमीषत् स्थितमपि न मेघत्वापादकमिति भावः। अहंसपक्ष्यपि हंसपक्षिरूपेणावतीर्णः भवतोऽन्ववाये हंसवंशे अग्रजन्मा प्रथमत्वेन गणितः शुद्धैः धवलवर्णैः त्वादृशैः त्वत्तुल्यैः देवहंसैः देवलोकस्थितैर्हंसैः हंसपक्षिभिः परिचितपदः, "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु ।" अभ्यस्तस्थानः लब्धसहस्थितिः परिचितव्यवसायश्च खलु । अतो न भेतव्यम्; प्रत्युतो पसर्पणीयः परया भक्त्येति ॥ ३३ ॥

सारास्वादी सवनहविषां स्वामिनस्ते स देवः
शुद्धं चक्षुश्श्रुतिपरिषदां चक्षुषां भागधेयम् ।
अङ्गीकुर्यात् विनतमसृतासारसंवादिभिस्त्वाम्
आविर्मोदैरभिमतवरस्थूललक्षैः कटाक्षैः ॥ ३४ ॥

एवं हंसीभूतत्वात् स्वसजातीयसर्वदेवहंसपरिचितस्त्वयाऽपि परिचेयपद इत्युक्तम् । न केवलं स्वसाजात्यात् कादाचित्कात्, किंतु सर्वदा स्वाराधकस्वपुत्रचतुर्मुखवाहनहंससजातीयत्वाच्च ते चतुर्मुखयज्ञभोगप्रीतिमूलकस्वानुग्रहं त्वत्पर्यन्तं प्रसारयेदित्याह, त्वत्स्वाम्याराधितरंगनाथाराधकवंशोद्भवमत्कार्यप्रवृत्ततया च त्वां मां मदीयञ्च त्वत्सेवनव्याजेनानुग्रहीतुं वरदान् कटाक्षान् व्यापारयिष्यतीति च सूचयति सारेति । सः हस्तिशैलाधिवासी देवः सर्वाराध्यः ते स्वामिनः—त्वज्जातीयवाहनभूतहंसस्वामितया त्वत्स्वामिनो ब्रह्मणो यानि सवनहवींषि । स्वामिन इति षष्ठ्याः सवनेऽन्वये सवनस्य - यज्ञस्य तत्कर्तृकत्वं संबन्धः । हविष्षु अन्वये स्वस्वामिभावः संबन्धः । विशेष्य एवान्वयान्न क्लेशलेशोऽपि । तदर्पितानां हविषां सारमास्वादयतीति सारास्वादी । 'याः क्रियाः संप्रयुक्ताः स्युः एकान्तगतबुद्धिभिः । ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्' इति अनन्ययाज्यात्मभूसमर्पितानि शिरसा प्रतिगृह्य सरसम् आस्वादितवान् । अत एवात परं देवस्य प्रत्यङ्मुखत्वम् । प्राङ्मुखेनाध्वर्युणा आहवनीये हूयमानानां हविषु-

ग्रहणार्थं तथाऽवस्थितेः। कथमेवं कर्तव्यमिति ब्रह्मणा ज्ञातमित्यत्राह शुद्धं चक्षुः श्रुतिपरिषदामिति। एतदनुग्रहबलेन श्रुत्यर्थः सर्वः सम्यक् तेनावोधि । मधुकैटभापहृतान् वेदान् पुनरानीय प्रदर्शनात् श्रुतीः प्रति, तद्व्याख्यानात् तदर्थांश्च प्रति एष चक्षुः । उक्तं हि भारते हयशिरउपाख्याने, सर्वदेवप्रार्थनपूरणार्थं वरदो भूत्वा वैष्णवं कतुं तैः कारयित्वा, "यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ । स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः" इति, वेदे युष्माकं मानवाराध्यत्वं तदपेक्षितफलप्रदत्वञ्च कल्पितवानस्मि इत्यनुगृह्य निष्कामैरनुष्ठितानां यज्ञानामहमेव भोक्तेति प्रतिबोधयामास ; अतः 'हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृत्' इति ब्रह्मा च प्रशशंसेति। तथाविवेकिना ब्रह्मणा श्रुतिपरिषदां प्रथमं तन्मूलमेव गृहीतत्वात् श्रुतिपरिषदां वेदव्यूहानामाविर्भावकत्वादर्थबोधकत्वाच्च चक्षुः । तथा यथा लोकाः स्वस्वचक्षुषि विशेषतोऽभिमानं वहन्ति, तथा श्रुतिकर्तृकाभिमानातिशयगोचरत्वाच्च तच्चक्षुः । अप्रामार्थबोधकाः वेदाः शास्त्रयोनिं तं मुख्यतया प्रतिपाद्य तच्छेषतयैवान्यत् सर्वमवबोधयन्ति। शुद्धं निर्दोषम् । एतदधीनतया ये श्रुतितदर्थदर्शकाः सन्ति, तेषां निर्दोषचक्षुष्ट्वं न भवति ; प्राकृतत्वात् । केचित् विभ्रमहेतवश्च । अनेन एतन्मण्डले विशेषतः श्रुतिप्रवर्तकत्वमप्यस्य सूच्यते। एवं यथावत् सवनानुष्ठानकारणमुक्तम्। अनुष्ठितसवनफलमाह चक्षुषां भागधेयम् । जातस्य चक्षुषः एतद्दर्शनादन्यदधिकं फलं न भवतीति भाग्यरूपोऽयम् । किञ्च अहो भाग्यं चक्षुषामस्माकं प्राकृतानाम् , यत् चक्षुषश्चक्षुरिति प्रशस्यमानस्य तस्यापि चक्षुर्भूतस्यापि चक्षुः असभ्यं दर्शकं भवति। 'न चक्षुषा गृह्यते' इति वेद्यमानोऽपि दृश्यते । "हस्तिधामनि न निर्णयेत कः देवराजमयमीश्वरस्त्विति" इति चाभियुक्ताः। चक्षुश्चक्षुषा न दृश्येत, अतीन्द्रियत्वात्। तदपि नश्चक्षुः पश्यति। एवं विमृश्य परमानन्देन पश्यन्तं विनतं प्रणतं स्वयमपि कटाक्षैरंगीकुर्यात्-स्वीकुर्यात्, स्वांगतुल्यं कुर्यात् , स्वपरिजनानन्तगरुडादिवत् परिजनीकुर्याच्च । कीदृशैः? अमृतासारसंवादिभिः संततप्रवृत्तामृतप्रवाहसदृशैः। संवादः समानार्थको वादः। साम्यमिति यावत् । 'सदृक्सदृशसंवादिसजातीयानुवादिनः' इति दण्डिना उपमावाचकत्वेन गण्यतेऽयम् । अनेन भोग्यत्वं स्थिरधारकत्वञ्चोक्तम् । आविर्मोदैः आविर्भवन् मोदः प्रीतिः यत्र तैः । प्रणमनाऽऽहिता प्रीतिः कटाक्षेण सहाऽऽविष्क्रियते इति तेषां तद्वैशिष्ट्यम् । कटाक्षकारणमुक्तम् ; फलमाह अभिमतेति । अभिमतानां प्रार्थयितुर्दातुश्चाभिमतानां वराणां व्रियमाणानां विषये स्थूललक्षैः बहुप्रदैः । सादरं वरदैरित्युक्तं भवति। एवं वरस्थूललक्षत्वादेव वरद इति प्रसिद्धिः । अत्र भगवतः वरदो द्विरदाधीशः श्रीनिधिः करुणानिधिः प्रणतार्तिहर इति पञ्चनामरूपाणि वरस्थूललक्षैः, हस्तिशैलाधिवासी, लक्ष्मीकटाक्षैर्भूयश्श्यामा, कारुण्यजुष्टम् , विनतममृतासार इत्येवं प्रयोगेषु क्रमेणेह हृद्गतानि । कटाक्षैरिति बहुवचनमनेकाभिमतवरप्रदत्वदर्शि । यथानन् सीताद्दृष्टिपात्यादिकमपि हंसकन्न्यनया रामाभिलषितं तत्र निविशते ॥ ३४ ॥

पश्चादासक्तं सरसिजमिव खिन्नमालम्ब्य पाणौ
देव्या हस्तं नदितरकरन्यस्तलीलारविन्दः ।

देवः श्रीमान् स यदि विहरेत् स्वैरमारामभूमौ
व्यक्तो बालव्यजनवपुषा वीजयेस्तं त्वमेव ॥ ३५ ॥

एवं वरदशब्दार्थानुचिन्तनेन वक्तव्यमुक्त्वा तस्य परमैकान्तिसक्तत्वात् तेनानन्तगरुडादिवत् अङ्गीकृतत्वाच्च तस्य विषये स्वयम्प्रयोजनं कैङ्कर्यमपि किञ्चिदावेदयति मध्विति। कैङ्कर्यस्योभयोद्देश्यकत्वात् दिव्यदम्पतिमूर्तिद्वयमेलनस्थलं हंसस्याऽऽलयान्तःप्रवेशानवकाशात् तदनुकूलमनुचिन्त्य दर्शयति प्रथमम् । प्रियया महादेव्या सह लीलया संचारे एकेन करेण तत्करम्, अन्येन च लीलार्थपद्मं गृहीतवान् स्यात् । पतिहस्तस्पर्शात् प्रियाहस्ते स्वेदोद्भवः । तेन तस्य मध्वासिक्तेन मधुबिन्दुपरीतेन पद्मेन तौल्यम् । का सा देवीत्यत्राह श्रीमानिति । महादेवी अत्र देवी । आराममभूमौ लालयानुबन्धिनि उद्याने शुक्रवासरादौ स्वैरं स्वेच्छया । अधिकं परिजनं विनेति यावत् । यदि विहरेत् — त्वद्गमनसमयः तद्विहारसमयश्चेदिति यावत् । त्वमेव बाह्योपकरणनिरपेक्षः वीजकव्यक्त्यन्तरनिरपेक्षश्च एवकारेण गरुत्मत्कार्यं तदा त्वयैव कार्यमित्युच्यते । व्यक्तः तत्र झटित्याविर्भूतः बालव्यजनवपुषा । बालव्यजनं= चामरम्, चमरीवालसहितं तालवृन्तं वा । तद्वपुषा तद्रूपेण स्वशरीरेण । स्वपक्षौ वितत्य व्यजनवत् परिकल्प्य तं श्रीमन्तम्; श्रियं पतिञ्चेति यावत् । वीजयेः व्यजनपवनेनोपचरेः । देवीकरस्वेदस्वैर-सञ्चारपरिश्रमापनयेति यावत् । विततौ पक्षौ व्यजनद्वयवत् विराजेताम् । तदन्तभागाश्च वालवत् स्युः । दिव्यदम्पत्योः परिश्रमाभावेऽपि तव किंकरत्वसिद्ध्ये त्वया कर्तुमर्हमिदं नोपेक्ष्यमिति च भावः । देव इत्यनेन सर्वजगद्व्यापारलीलाप्रवृत्त इत्युक्त्या सर्वस्य प्रकृतिमण्डलस्य तद्विहार-भूमित्वेऽपि प्रकृते आरामे दम्पत्योर्विशेषाभिमान इति ज्ञाप्यते । वीजधातोरदर्शनात्, कल्पने गौरवात्, द्रामिडं पदं संस्कृतीकृतमित्यस्य चानुचितत्वात् रसास्वादिन्युक्तं ग्राह्यम्—'ईज गतिकुत्सनयोः' इति धातोर्विपूर्वकात् णिजन्ताल्लिङ् इति ॥ ३५ ॥

जातप्रीतिर्जनपदमथो मध्यमं लङ्घयित्वा
दूराल्लक्ष्यक्रमुकनिवहश्यामलान् याहि चोलान् ।
प्रत्यग्रच्छन्नमकरवलन(य)स्तम्भितैः सह्यजायाः
स्रोतोभेदैर्विविधगतिभिः संविभक्तावकाशान् ॥ ३६ ॥

अथ तुण्डीरमण्डलात् प्रस्थापयन् प्रतिजनपदमद्भुतसंहतौ हंसदृष्टेर्मग्नतां वारितवान् मध्यदेशे कश्चिदप्यनवतीर्य चोलदेशप्राप्तिमेव प्रार्थयते जातेति । अथो–श्रीदेवाधिराजदर्शनकैङ्कर्यलाभानन्तरं जात-प्रीतिः इतोऽधिकमपि लब्धव्यमित्याशया विलम्बमकुर्वन् संतुष्टः चोलान् याहि । नन्वस्ति मध्यदेशः यत्र देहलीशदेवनाथादिमूर्तयः निस्संख्यमहात्मनिरन्तरानुभूयमानाः सन्तीति विमृश्य विलम्बमसहमानो लङ्घनमेव कामयमान आह जनपदमिति । महाजनानां स्थानत्वादपि जनपदम् । अथोशब्दः कार्त्स्न्य-परो वा; आनन्तर्येऽधिकप्रयोजनाभावात् । अहीन्द्रपुर्यादिमुख्यस्थानातिक्रमोऽपि कार्य इति तद्भावः ।

तुण्डीरमण्डलचोलदेशोभयमध्ये जनपदान्तराभावात् मध्यमजनपदशब्देन तुण्डीरस्यैव ग्रहणमित्याहुः। अत्र देशे दिव्यसूरिमंगलाशासनपददिव्यक्षेत्रविभजनाद्यवसरेषु पृथक् मध्यदेश परिगणनस्य प्रसिद्धत्वात् तुण्डीरभिन्नग्रहणमेव युक्तम्। कविश्चायं मध्यदेशे श्रीमदहीन्द्रपुरादिकं स्वात्यन्ताभिमतमविस्मृत्य मालया सूचयन्नेव मार्गं दिशतीति सांप्रतम्। तत्र प्रथमजदिव्यसूर्यादिसमादृतं देहलीशं विहाय देवनाथग्रहण-मनुचितम्। देहलीशप्रस्तावे जाते च स्वात्यन्ताभिमतदेवनाथोपेक्षणमयुक्तम्। तुण्डीरमण्डले महति एक-मूर्तिमात्रेणोपरम्य अल्पीयसि मध्यदेशे मूर्तिद्वयस्तवनमपि न न्याय्यम्। अतो व्यञ्जनमात्रेण तल्लं-घनकथनमेव ज्याय इति कविरभिसंधायैवं रामसंदेशमाह। दूरात् प्रसूतैर्नैर्वैरपि लक्ष्याः द्रष्टुं शक्याः अतीव पीनोन्नताः क्रमुकाः पूगवृक्षाः। तेषां संहत्या समूहेन श्यामलान् चोलान् देशान् याहि प्रविश। देशस्य, "कावेरी च महाभागा" इति ताम्रपर्ण्यादिष्वप्यनुक्तेन महाभागत्वरूपविशेषणेन सर्वो त्कृष्टतया ज्ञापितायाः कावेर्याः प्रभेदैरपि प्रकर्षमाह प्रत्युद्गच्छदिति। जलसमृद्धिज्ञप्तये इदं विशेषणम्। मकराणां मीनानां प्रवाहेषु प्रवाहगतिदिक्प्रतिदिग्गतिप्रयत्नशीलत्वं स्वभावः। तथाच प्रत्युद्गच्छतां प्रवाहगतिप्रतिकूलगतिपराणां मकराणां वलनेन आक्रमणेन। वलयेति पाठे वलयेन-अर्धचन्द्राकार-मण्डलतया निरन्तरस्थितमकरवर्गेण स्तम्भितैः निरुद्धगतिभिः अत एव विविधगतिभिः विलम्ब्य मकरवलयपार्श्वयोः लब्धप्रसरैः नानादिक्कैश्च स्रोतोभेदैः विभिन्नैः प्रवाहैः संविभक्ताः सम्यक्पृथक्कृताः अवकाशाः भूप्रदेशाः येषां तान्। स्रोतसामभावे अवकाशानां पृथग्भावो न स्यात्; एकत्वेन व्यवहारः स्यात्। एवं तीर्थसमृद्धिसंपन्नवैभवान् चोलान् याहीत्यन्वयः॥ ३६ ॥

सन्ध्यारागं सुरभिरजनीसंभवैरङ्गरागैः
केशैर्ज्योत्स्नाकलहि तिमिरं पालिकापीडगर्भैः।
आबिभ्राणाः सरसिजदृशो हंस! डोलाधिरोहात्
आधास्यन्ते मदकलगिरस्तेषु नेत्रोत्सवं ते ॥ ३७ ॥

तत्र स्त्रीमणीनां सन्ध्यावत् संभाव्यतामाह सन्ध्येति। आर्द्रहरिद्राचूर्णलेपस्फुटवर्णोत्कर्षाः पूग-पुष्पगुच्छालंकृतकवरीभराः सुदृशः समुदिताः संध्यावत् दृश्येरन्। हरिद्रालेपः सान्ध्यरागवत् कबरी-तिमिरवत् पूगपालिका च ज्योत्स्नावल्लक्ष्येतेत्युच्यत इह। सुरभेः स्वभावतः श्लाघ्यगन्धायाः रजनेः हरिद्रायाः संभवैः निष्पन्नैः अङ्गरागैः अङ्गलेपैः सन्ध्यायाः रागं रक्तिमानम् आबिभ्राणाः, तथा पालिका पूगपुष्पगुच्छ एव आपीडः भूषणं गर्भे मध्ये येषां तैः केशैः ज्योत्स्नाकलहि चन्द्रिकया सह कलहवत् युद्धवत्; ज्योत्स्नासहितमिति यावत्। कथं तमश्चन्द्रिकयोरेकस्थानकत्वं विरोधादिति शंकायाम् अत एव विरोधात् युद्धसमये एकस्थानस्थितिर्युज्यत इति वक्तुं कलहीति पदप्रयोगः। ज्योत्स्नाप्रारम्भकाले तमसः क्रमेणैव ह्रासात् कियन्तमपि कालं कलहिनोरिव एकत्र स्थितिर्घटत इति भावः। तादृशं तिमिरञ्च अन्धकारमाबिभ्राणाः। सन्ध्यारागतुल्यहारिद्राङ्गरागं सज्योत्स्नतमस्तुल्यसपालिककेशभरञ्च बिभ्राणा

इति यावत् । सरसिजदृशः इति विशेष्यसमर्पकम् । स्त्रियः । पद्मसमानलोचनाः ; दृग्भिः सरसिजानि आजिघ्राणा इत्यप्यभिप्रेतं स्यात् । हे हंस ! डोलाधिरोहात् डोलामधिरूढाः मदकलगिरः यौवनावस्थाकृतविकारेणाव्यक्तमधुरं भाषमाणाः ते — तव नेत्रोत्सवं नयनानन्दं तेषु चोलदेशेषु आधास्यन्ते करिष्यन्ति । कावेरीतीर्थसमृद्धक्षेत्रसारवशात् हरिद्राः अतिशयितवर्णास्तत्र स्युः । पूगपुष्पाणि च तत्राधिकानि । अलंकृतानां तासामुत्साहकार्यं डोलाधिरोहः । तदवस्थाकारितं गिरां मदकलत्वम् । सर्वमिदं भोग्यं स्यादित्युच्यते । सन्ध्याज्योत्स्ना–तिमिरसादृश्यवर्णनमुत्कर्षव्यक्त्यै इति भाव्यम् ।

ननु अतिशयित हरिद्रादीनामिव डोलाधिरोहस्य तद्देशासाधारण्याभावात् अनैयत्याच्च तदुक्तिः कुत इति चेत्— सरसिजदृक्त्वमदकलगीस्त्ववत् इतरसाधारण्येऽपि अनैयत्येऽपि भोग्यत्वसंभवादुक्तिः । ननु डोलाधिरोहो गृहान्तर्वा, बहिर्वा । आद्ये, हंसेन न तद्दर्शनसंभवः । बहिश्च डोलाधिरोहः प्रायो दुष्करः। विशिष्य चेदृशीनां स्त्रीणाम्–इति चेत्— सौधेषु सोत्साहं डोलाधिरोहसंभवात् अदोषः । बहिरपि बहुलं कन्यकानां तत्संभवाच्च ॥

(2) यद्वा डोलाधिरोहपदं न मुख्यार्थकम् ; किंतु संशयवत्त्वार्थकम् । संशयसंपत्त्या तासु नेत्रोत्सव उच्यते । तासां दर्शनमात्रेण, 'किमियं संध्या ? तर्हि रात्रौ कुत्रास्माभिर्वर्तितव्यम् । ज्योत्स्ना च लक्ष्यते । अहो कथं ज्योत्स्नायां सत्यामेव तिमिरम् । सत्यामेव चन्द्रिकायामहो सरसिजानि विकसन्ति । नूनं मदकलगिर इमाः मधुकरगिरः स्युः' इति संशयडोलाधिरोहस्ते स्यात् । ताश्च त्वां दृष्ट्वा, अहो कोऽयमतीव दृश्य इति विस्मयेरन् । काचित् ब्रूयात् हंस इति । अन्या, हंसो नाम सूर्यः स किमिति । अयि सखि । आह्लादमूर्तिरयं चन्द्रः स्यादिति । नन्वस्मिन् चन्द्रे राजति ज्योत्स्ना (पालिका) युज्यते ; कथं पुनर्नस्तिमिरम् । कथञ्च सरसिजानि सविकसानि इत्यादिकं च मदकलमपरिस्फुटार्थं भाषेरंस्ताः । एवं संशयरूपडोलाधिरोहकारितं मदकलवचस्त्वं ते नेत्रोत्सवायेति भावः । नेत्रेति श्रोत्रस्याप्युपलक्षणम् ॥ ३७

पृथ्वीलीलातिलकसुभगं पश्चिमं भागमेषां
नाम्ना वर्षं जलचर ! नदीमातृकं गाहमानः ।
द्रक्ष्यस्यारात् परिमिततया मग्नकैलासदृश्यं
श्वेतं शैलं फणिपतिमिव क्ष्मातलादुज्जिहानम् ॥ ३८ ॥

एवं चोलदेशं प्रविश्य गच्छता ततोऽपि तत्र पश्चिमो भागः तिरुवेल्लरै इति प्रसिद्धो दिव्यदेशो गन्तव्य इत्याह पृथ्वीति । हे जलचर जले सञ्चारकारिन् हंस ! पश्चिमं प्रतीच्यां दिशि वर्तमानं चोलदेशे वर्षनाम्ना व्यवह्रियमाणं भागं पृथ्व्याः भूमेः कण्ठस्थानापन्ने सति तुण्डीरमण्डले स्वयं तल्ललाटतिलकवद् भासमानम् । वर्षतीति प्रयोगात् नित्यं मेघोऽत्र वर्षतीति न मन्तव्यम् । नाममात्रं तथा । वस्तुतः स भागो वर्षनिरपेक्षश्च नदीमातृकत्वात् । नदीप्रवाहत एव कृषिस्नानपानादिसर्वकार्यनिर्वाहात् सा माता । जलचरस्य ते सर्वं तत्र सुभिक्षम् । वर्षशब्दः भूभागप्रदेशविशेषपरः । पूर्णभारतवर्षादिमह-

नीयत्वातिशयापादकत्वात् **वर्पेति** प्रसिद्धः सः । तं मार्गं **गाहमानः** प्रविशन्नेव **आरात्** समीपे **श्वेतं शैलं** श्वेताद्रिरिति (तिरुवेल्लूरे-औरशब्दोऽपि शिला-शैल-शैलशृंगवाची) कथ्यमानम् अन्वर्थत्वात् **कैलासवत्** शेषवच्च दर्शनीयं **द्रक्ष्यसि** । कैलासस्यात्युन्नतत्वात् अस्य च परिमिततया ह्रस्वतया तत्सादृश्यसंगतये **मग्नेति** विशेषणम् । अधिकभागे भूमौ मग्ने अवशिष्टांशस्याल्पत्वे कैलास एतावान् स्यादिति । एवं श्वेतत्वशैलत्वोभयांशसादृश्यम् । अथ शेषसादृश्यं श्वेतत्वोच्छ्रितत्वरूपतः । तस्य भूमेरधःस्थितत्वात् कथमुपरि दर्शनमिति शंकापनोदाय **क्ष्मातलादुज्जिहानमिति** विशेषणम् । **उज्जिहानम्**— ऊर्ध्वमागत्य स्थितम् । उद्गमनक्रियायाः वर्तमानत्वमविवक्षितम् । संपूर्णोद्गमनाभावद्योतनाय तथा प्रयोगः । फणिपतिमिवेति सादृश्यं शैलान्वयि । शैलोऽयं श्रीरङ्गात् प्राच्यां योजनाधिकदूरे स्थितः ॥

(२) श्रीमन्नाथमुनिशिष्यश्रीपुण्डरीकाक्षसूर्यवतारस्थलमिदम् । तस्य उय्यक्कोण्डार् इति द्राविडनामधेयम् । तद्दिव्यदेशार्चामूर्तिनाम्नः श्रीपुण्डरीकाक्ष इत्यस्यैवैतन्नामत्वात् अयं जन्मतः श्रीवैष्णव इति ज्ञायते । श्रीमन्नाथमुन्याज्ञया तद्देवीं तन्मातृकुलं नीतवान् अयं तत्र पर्युषितमन्नं भोजितः स्वगुरुश्वशुरगृहमिति गौरवेण परमान्नमिति भावयित्वा तत् स्वीचकार । नैतत् पश्चात् गुरुसंनिधावयं व्यजिज्ञपत् । अथापि कालक्रमेण स्वदेवीमुखादिदं विज्ञाय गुरुः, **उय्यकोण्डार्** इति नाम्ना तमाह्वयत । **उय्य**— उज्जीवनार्थं **कोण्डार्**— स्वीकृतवान् इत्यर्थः । स्वगुरुसंबन्धसंबन्धिपर्यन्ते गौरवेण कृतेन स्वोज्जीवनमाचकांक्ष। पर्युषितान्नरूपं **पुरातन**मन्नं सर्वप्रार्थनीयषड्गुणान्नरूपपुरातनपुरुषोत्तमवत् भोग्यममंस्त, न न्यषेधीदिति स्वीकरणमिदं गुरुश्वशूकुलस्याप्युज्जीवनायाऽऽसीदिति तन्नाम्नो भावः । अस्य पृथ्वीतिलकत्वं नाथमुनिपश्चिमत्वं **नदीमातृक**पदेन गुरुदेव्यां मातृभक्तिः नाम्नावर्षमिति उय्यकोण्डारिति नामलाभः इत्यादि सूचयते । एवमस्य शैवमतनिरासकत्वात्— कैलासो मग्नः नोत्थातुमर्हति **एतन्निकटे** इति तन्मतहासः ; श्रीवैष्णवसमृद्धिकरत्वात् शेषःप्रागधस्तात् निलीनः पुनरुत्थितोऽभूदेतत्काले । सत्त्वशीलप्रचुरत्वाचायं श्वेतःशैल इति चात्राचार्याणां हृद्गतम् ॥ ३८ ॥

**स्फारालोकप्रशमिततमस्तस्त्र्ववयं तत्र पुंसां**
**प्रत्यग्रूपं प्रगुणविभवं प्रार्थनीयं बुधानाम् ।**
**नेदीयांसं कुशलनिवहं नन्तुराधास्यते ते**
**दिव्यं तेजो जलधितनयास्नेहनित्यानुषक्तम् ॥ ३९ ॥**

अथ तत्र श्रीपुण्डरीकाक्षस्य सेवयाऽनुग्रहं भाविनमाह **स्फारेति** । तत्र दिव्यं तेजः नन्तुस्ते कुशलनिवहं नेदीयांसमाधास्यत इत्यन्वयः । अतिशयेन संनिकृष्टः **नेदीयान्** । अञ्जनादिगतं तेजः कुशलनिवहाधायकम् । तस्य समीपभावित्वापादकं हस्तिगिरितेजः । इदं तु तेजः तस्य नेदीयस्त्वाधायकमिति भावः । **स्फारेत्यादीनि** तेजोविशेषणानि । **स्फारेण**—सुदूरप्रसृतेन अतिशयितेन **आलोकेन**-कटाक्षेण प्रशमितः **तमस्तस्त्र्ववः** अज्ञानव्यूहो येन तत् । **पुंसामि**त्यस्य तम इत्यत्रान्वयः ।

अनन्वयेऽपि अज्ञानं तन्निष्ठमिति सुज्ञानमेव । ऐहिकं वा देवतान्तरमूलकं वा फलं नापेक्षन्त इति तत्तदज्ञाननिवर्तकोऽस्य कटाक्षः । द्वितीयपादेन क्रमेण कैवल्यैश्वर्यनिश्श्रेयसप्रदत्वमुच्यते । **प्रत्यग्रूपमित्यस्य** प्रत्यगात्मशरीरकमित्यर्थः । तेनतेन स्वस्वात्मानुभवस्यैव कैवल्ये कार्यत्वात् **प्रत्यक्पदस्य** च कस्य प्रत्यगिति सापेक्षत्वात् **पुंसामिति** पदं तत्रान्वेति । तथा च जीवानां यत् प्रत्यक् स्वं तत् **रूपं** शरीरं यस्येति । रूपपदस्य स्वरूपार्थत्वे **पुंसामिति** पदं तत्राप्यन्वियात् । तदा परमात्मशरीरत्वं विग्रहे षष्ठ्यैव लभ्यम् । पुंसां तत्तदात्मानुभवदायीत्यत्र तात्पर्यम् । **प्रगुणः** अतिशयितः **विभवः** ऐश्वर्यं प्राकृतलोकानुभाव्यं यच्च यावच्च, तावता तेन विशिष्टम् । तन्निर्वाहकमिति यावत् । **पुंसामिति** सामान्योक्तिः । अथ, 'प्रतिबुद्धस्तु मोक्षभाक्' इति विशेषमाह **बुधानां प्रार्थनीयमिति** । प्रकर्षेणार्थनीयम्, परमपुरुषार्थभूतं, **बुधानां** ज्ञानिनां परमप्राप्यभूतम् । एषु फलेषु यत् ते इष्टम् तद् भविष्यतीति भावेनैतावदुक्तिः। तत्र कारणं **नन्तुरिति** हेतुगर्भविशेषणदर्शितं नमनमेव । तच्च बहुप्रकारं मनोवाक्कायभेदादिना । **दिव्यम्** अप्राकृतं **तेजः** मङ्गलविग्रहः । दिव्यमङ्गलविग्रहविशिष्टः परमात्मेति यावत् । नन्तव्यत्वं श्रीविशिष्टस्यैव, नमननिर्वाहकत्वञ्च **श्रिय** इति विशेषं दर्शयति **जलधीति** । **जलधितनया**=श्रीः स्नेहेन तया नित्यानुषक्तम् । भोग्यतातिशयात् स्वाभिमतसर्वजीवसंरक्षणनिर्वाहव्यग्रत्वाच्च तस्या अस्मिन् **स्नेहः** । जलधितनयाविषयको यः स्नेहः नित्यं तद्विशिष्टमिति वा । जगद्रक्षणाय भुवमायान्तीं तामनुयाति खल्वयं स्नेहेन । **प्रत्यग्रूपमित्यस्य** स्वयंप्रकाशमित्यर्थं वर्णयन्ति । तदपेक्षया स्वस्मै प्रकाशमानमित्यर्थः दीपपक्षेऽनन्वयेऽपि परमात्मपक्षे ऋजुः । परंतु इदमर्थद्वयं जीवपरसाधारण्यात् प्रयोजनाभावाच्च न स्वीकृतम् । दीपपक्षे तु यद्वा तद्वा भवतु ॥

(2) अत्र प्राचीनव्याख्यायामनुक्तोऽपि दीपपरतयाऽप्यर्थः **रसास्वादिन्यां** दर्शितः; तद्वैशद्यमत्र भाव्यम् । स्फुटप्रतीयमानश्चायम् । **तेज** इति दीपरूपं तेजो विवक्षितम् । तत् **स्फारेण** महता **आलोकेन** स्वप्रभया अन्धकारवृन्दं प्रशमयति । **पुंसां प्रत्यग्रूपम्** । रूपं–रूपकम् । स्वस्वदेहदर्शनेऽप्युपयुज्यते । वस्त्वन्तराणामिव स्वदेहदर्शनार्थमपि दीपापेक्षाऽस्तीति भावः। यद्वा **प्रत्यक्** प्रतिवस्तु अञ्चत्, ज्वालानां क्षणिकत्वात् प्रतिक्षणं प्रत्यग्रतया अञ्चद्वा **रूपं** स्वासाधारणधर्मः प्रभा यस्य तदित्यर्थः । **प्रगुणविभवम्** । **गुणो** वर्तिः प्रकृष्टेन गुणेन विशेषेण भवतीति तथाभूतम् । **बुधानाम्** ज्ञानापेक्षाणां दर्शनसाकांक्षाणां पठनाद्यर्थं प्रकर्षेणार्थनीयम् । **जलधितनयेति** पदं जलोपस्कृतभूभागोत्पाद्यानां स्नेहोत्पादकौषधीनां लक्षकम्। तन्मूलेन स्नेहेन विविधतैलेनानुषक्तम् । तथा जलधितनयायाः लक्ष्मीवत् समुद्रे उत्पन्नायाः कामधेन्वाः **स्नेहेन** घृतेन नित्यानुषक्तम्, दिव्यतेजस्त्वात्—देवलोकवर्तिदीपत्वात् । दीपस्य प्रणमनमपि शिष्टाचारः । दीपस्य जलधितनयायाः लक्ष्म्याः स्नेहेन आदरेण नित्यानुषक्तत्वात्–तदत्यन्ताभिमतत्वात्। दीपवति गृहे हि देव्याः संनिधानम् । कृत्तिकादीपोत्सवविधानशास्त्रेषु च दीपप्रशंसा द्रष्टव्या । दीपं विनैव कार्यकराणां कदाचित् अपेक्षितलाभेऽपि स हस्तादिभिरितस्ततोऽन्वेषणात् विलम्बेन भवति । दीपविधेयस्य तु तल्लाभो नेदीयानिति।

(४) एवं दिव्यं तेज इति दिव्यं चक्षुः दिव्यं मन इति प्रसिद्धं धर्मभूतज्ञानमुच्यते। स्वयंप्रकाशतया तेजस्त्वं द्योतमानात्मस्वरूपसंबन्धित्वाच्च दिव्यत्वम्। तत् स्वप्रसरेणाज्ञानं सर्वं प्रशमयति। एकैकप्रत्यगात्म धर्मतया प्रत्यग्रूपम्–प्रतीचो रूपम्। तस्य गुणः संकल्पसुखादिपरिणामः विभवः व्याप्तिः। उभयं प्रकृष्टम्। मुक्तिकाले दृश्यमानं सर्वमनुकूलत्वेनानुभूयमानमेव भवतीति नेदीयःकुशलनिवहवहत्वम्। "समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम्" इत्युक्तरीत्या लक्ष्म्याः स्नेहेनोत्पाद्यमानतया जलधितनयास्नेहनित्यानुषक्तत्वमपि। एवं श्वेतगिरिदेवश्रीपुण्डरीकाक्षसेवनमुक्तम् ॥ ३९ ॥

स्निग्धच्छायं तदनु विततं तस्य धामेव नीलं
नीलीरक्षानियतललितं काननं संविचीयाः।
दृष्टे तस्मिन् अनिमिषवधूनित्यनिर्वेशयोग्ये
स्वर्गोद्यानश्रियमपि लघुं मंस्यते मानसं ते ॥ ४० ॥

श्वेताद्रेः पश्चात् श्रीरंगात् पूर्वं काननमेकं स्थितं कथयति— तदनु श्रीपुण्डरीकाक्षकटाक्षलाभानन्तरं तस्य भगवतः धाम दिव्यमङ्गलविग्रह इव नीलं स्निग्धच्छायं सान्द्रभोग्यच्छायायुक्तं विततं विस्तृतं नीलीनाम्न्या राक्षस्या क्रियमाणया रक्षया नियतललितं सर्वदा रुचिरं वर्धमानं काननं नीलीवनमिति श्रुतं संविचेयाः परिचितं कुरु; सम्यक् पश्येति यावत्। उपसर्गद्वययुक्तस्य 'चिञ् चयने' इति धातोः रूपम्। संविचेया इति प्रयोगस्यासाधुत्वं रसास्वादिन्यां विशदीकृतम्। अद्भुतसंहताविदमेकं मुख्यमित्याह दृष्टे इति। अनिमिषाणां देवानां वध्वः स्त्रियः। अनिमिषाश्च ताः वध्वश्चेति समानाधिकरणसमासो वा। ताभिः क्रियमाणो नित्यनिर्वेशः सार्वकालिकोऽनुभवः; तस्य योग्ये। ताभिः देवोद्यानानि विहायेदमनुभवितुमर्हम्, तथाभूते तस्मिन् कानने दृष्टे सति ते मानसं स्वर्गोद्यानश्रियं स्वर्गलोकस्थितनन्दनादिनानोपवनलक्ष्मीमपि लघुं लघ्वीमत्यल्पां मंस्यते अनुमास्यति। इदमेव सर्वदेवस्त्रीविहारयोग्यम्, किं स्वर्गोद्यानैरिति त्वं चिन्तयिष्यसीति भावः। श्लोके योग्ये इति पदेन नीलीरक्षितत्वात् देववधूनामपि तत्र न प्रवेशप्रसक्तिरिति सूच्यते। अत्र नीलीशब्देन नील्याख्यौषधिग्रहणं नीलीपुष्पस्तबकललितमिति पाठकल्पनञ्चायुक्तम्; श्वेताद्रिमाहात्म्ये श्रीरंगमाहात्म्ये च नीलीनामकनिशाचरीनियतरक्ष्यमाणवनत्वेन तस्य श्लाघिततया तदनुसारिप्राचीनपाठत्यागस्यायुक्तत्वादित्यभिप्रेतं रसास्वादिन्याम्। तत्रैव श्वेताद्रिमाहात्म्ये भगवता तत्र वने व्याघ्रासुरवधः कृत इत्युक्ततया असुराद्यनास्पदत्वभगवदभिमानपात्रत्वाद्यवगमादेव तस्य धामेव नीलमिति प्रशस्य श्रीपुण्डरीकाक्षधामतुल्यस्य तस्य दर्शनं कर्तव्यत्वेन कीर्त्यते। इदानीं तु तत् काननं नेषदपि लक्ष्यते ॥ ४० ॥

कुर्वन् नानाकुसुमरजसा यत्र चित्रं वितानं
पूगारण्ये मृदु विचलयन् पालिकाचामराणि।
पादन्यासक्षममवकिरन् क्ष्मातलं पुष्पजालैः
प्रायो वायुः परिजनविधिं पञ्चबाणस्य धत्ते ॥ ४१ ॥

अनिमिषवधूनित्यनिर्वेशयोग्यत्वोपपादनाय पञ्चबाणाभिमतसाधकत्वमरण्यस्य दर्शयति कुर्वन्निति । **यत्र** कानने वायुः **पञ्चबाणस्य** मन्मथस्य **परिजनविधिं** भृत्यकार्यं **धत्ते** पोषयन् अस्ति । किं किं कृत्वा ? तदाहाऽऽदित: । विविधपुष्परजोव्यापनेन वियति वितानविस्तारणमेकं रजःकार्यम् ; यस्याधस्तात् पञ्चबाणो विश्रमं लभेत । चामरवीजनं द्वितीयम्—**पूगारण्ये** क्रमुकवने याः **पालिकाः** तद्गुच्छाः तद्रूपाणां चामराणां चलनविधानात् । तत्संचारमार्गे मन्मथपदन्यासाय सर्वत्र पुष्पविकिरणं तृतीयम् । तेन हि मदनः मृदुपदन्यासं सुखेन करिष्यतीति । गृहस्यान्तर्वा बहिर्वा यत्र कुत्रापि शयनासनादिस्थानेषु ऊर्ध्वं वियति वस्त्राद्यास्तरणं वितानम् । उल्लोच इति पर्यायपदम् । **पूगारण्यं** । विविधपुष्पफल वृक्षवाटिकामये नीलीवने क्रमुकारण्यं कश्चिद् भागः । **प्राय** इत्युत्प्रेक्षा ; वायोः पञ्चबाणपरिचर्योद्देशेन तथा कर्तृत्वाभावात्, पञ्चबाणस्य तत्र प्रविश्य कर्तव्यस्यानिश्चितत्वाच्च । **पञ्चबाणस्येत्यनेन** वनमिदं तस्यापेक्षितसर्वबाणसमर्पकमिति च ज्ञाप्यते । तस्य बाणाः यद्यपि संख्यया पञ्चत्वमाप्ताः, अथापि वनमिदं विविधबाणप्रपञ्चनेनान्यादृशं पञ्चबाणत्वं साधयति । पञ्चशब्दो हि पञ्चास्य इत्यादाविव विस्तृतार्थकोऽपि । अस्मिन् श्लोके यत्रेति यच्छब्दश्रवणात्, तस्य पूर्वश्लोकप्रस्तुतकाननपरत्वात् पूर्व श्लोकेनास्यैकवाक्यता । तथाच मन्मथपरिचरणपरमारुतसञ्चारभूमिं काननं संविचीया इत्यन्वयार्थः । संविचीयाः=संगतः-सम्यक् विविच्यानुभवेत्युक्तं भवति ॥ ४१ ॥

**स्रोतोवेगादथ जनपदं सौम्य सीमन्तयन्ती**
**प्रत्यादेशो त्रिबुधसरितः स्यन्दते सह्यकन्या ।**
**कालेकाले परिणतिवशात् पर्वभेदावकीर्णैः**
**पुण्ड्रेक्षूणां पुलिनविशदैः गह्वरा मौक्तिकौघैः ॥ ४२ ॥**

अथ कर्तव्यं साक्षादेव कावेर्याः दर्शनं चन्द्रपुष्करिणीदर्शनञ्च त्रिभिः श्लोकैराह **स्रोत** इत्यादिना । अथशब्दस्य मंगलाद्यनेकार्थकत्वेऽपि आनन्तर्ये प्रसिद्धिः प्रचुरा । तत्रेह पूर्वोक्तः वायुकृतपञ्चबाणपरिचरणान्तरं 'कावेरी स्यन्दते' इत्युक्तौ सामञ्जस्याभावात्, पूर्वश्लोकान्वितततपूर्वश्लोकोक्तकाननसंविचयनानन्तरमित्यर्थस्यैव वर्ण्यत्वेऽपि तस्यानन्तर्यस्य सह्यकन्यास्यन्दनेऽन्वयायोगाच्च **अथे**त्यस्य **तस्मिन्निति** श्लोके चतुश्चत्वारिंशे द्रक्ष्यसीत्यत्रान्वयः । एवञ्च सौम्येति संबोधनमपि तत्रैवान्वेति । हे सौम्य ! **पश्य,** शृणु इत्येवमध्याहारापेक्षया उपरिश्रुतक्रियायामेव तदन्वयस्य श्लाघ्यत्वात् । एतदुत्तरश्लोके यच्छब्दश्रवणात् तस्यात्र श्लोकेऽन्वयात् । 'कावेरीं द्रक्ष्यसि' इत्यनुक्त्वा 'चन्द्रपुष्करिणीं द्रक्ष्यसि' इति परं कुतो वक्तव्यमिति चेत्—पूर्वं चोलदेशविषयोपक्रमश्लोक एव कावेरीस्रोतसां कथितत्वात् नेह तद्दर्शनमपूर्वमिति तदुपेक्षा । श्लोकद्वयेन कावेरीं प्रशस्य तद्वति जनपदे चन्द्रपुष्करिणी दृश्येति वचनभंग्या कावेर्यपेक्षया तस्याः पुष्करिण्याः प्रभावः प्रतिबोधितो भवतीति श्लोकत्रयैकवाक्यत्वादरणम् । तस्मिद्वये अत्र अथ सौम्येति पदद्वयप्रयोगः । संबोधनवशात् तत्कर्तृकक्रियायाम् अथशब्दार्थान्वय

इति ज्ञापितं भवेत् । यद्येवमेकवाक्यत्वं नेष्यते, तर्हि अथेत्यस्य कार्त्स्न्यादिरूपार्थस्वीकारेण, पूर्वं स्रोतोभेदा एवोक्ताः, कृत्स्ना सह्यकन्या यत्र स्यन्दते तत्स्थलमिहोच्यत इत्येवमर्थो भाव्यः । जनपदं चोलदेशं **स्रोतोवेगात्** स्वकीयप्रवाहजवेन **सीमन्तयन्ती** चिकुरभागद्वयमध्यवर्ति रेखाविशिष्टमिव कुर्वती । सुदीर्घस्य सह्यजाप्रवाहस्य सीमन्तत्वकथनेन पार्श्वद्वयेऽपि चिकुरनिकरवत् श्यामदीर्घविशालवृक्षषण्ड-सद्भावो गम्यते । सह्यकन्येयं **विबुधसरितः** देवनद्याः **प्रत्यादेशः** तिरस्कारसाधनभूता । करणे घञ् । **विबुधाः** विद्वांसः स्वसंबन्धेन विबुधसरिद्भूतामिमामाहत्य गङ्गारूपविबुधसरितं तिरस्कुर्वन्तीति इत्थं तत्तिरस्कारसाधनभूता । गंगापेक्षया अस्या आधिक्यं श्रीरंगमाहात्म्ये एवं वर्णितम् — विन्ध्याचलपार्श्वे विश्वावसुः सर्वा नदीः समेताः समीक्ष्य प्रणनाम । कतमस्याः प्रणामोऽयमिति नदीषु जिज्ञासमानासु ताभिः पृष्टः स प्रत्युवाच । या वः श्रेष्ठा, तस्याः प्रणाम इति । का पुनरिह श्रेष्ठेति जिज्ञासां ब्रह्मणे विज्ञापयामासुः । गंगैव श्रेष्ठेति तेन प्रत्यूचे । अथ चतुर्मुखतोषणेन गंगासाम्यं प्राप्य कावेरी, तावता तृप्तिमलभमाना भगवन्तमुद्दिश्य तपश्चचार । भगवांश्च, सकृन्मच्चरणान्निस्सृता गंगा यद्वैभवमविन्दत, ततोऽधिकं वैभवं त्वदन्तरीपे श्रीरंगद्वीपे मयि निरन्तरं निवासमाद्रियमाणे प्राप्स्यसीत्यन्वग्रहीदिति । तीर्थक्षेत्रोभयश्रैष्ठ्यं दर्शयति **कालेकाल** इति । क्षेत्रेष्वभिवर्धितानां **पुण्ड्रेक्षूणां** उत्कृष्टानामिक्षूणां **पर्वणां** संधिबन्धानां **परिणतिवशात्** परिपक्वताधिक्यात् यो **भेदः** विभागः ततः **कालेकाले** अवकीर्णैः उद्गत्य दूरे पतितैः **मौक्तिकौघैः** मुक्ताराशिभिः **पुलिनविशदैः** कावेरीसैकतमण्डलवत् प्रकाशैः **गद्गदा** निम्नोन्नता सती स्यन्दत इत्यन्वयः । मुक्तोत्पत्तिस्थानानि त्रयोदश, तद्वर्णभेदाश्च स्कान्दे रत्नपरीक्षाध्याये इति रसाह्लादिनी ॥ ४२ ॥

**सह्योत्सङ्गात् सपदि मरुता सागरं नीयमानां**
**भद्रालापैर्विहितकुशलां त्वादृशानां द्विजानाम् ।**
**यामस्कन्नास्सरसकुहलीपत्रपातैर्निशान्ते**
**मन्दस्मेरां मधुपविमलैर्वासयन्तीव पूगाः ॥ ४३ ॥**

सह्यकन्यां सागरगामिनीं भर्तृगृहगामिनीं वधूमिव मत्वा वर्णयति **सह्येति**। **सह्यस्य** तदाख्यस्याचलस्य पितुः उत्संगात्— अधित्यकारूपोर्ध्वप्रदेशात् **सपदि** उचितकालप्राप्तौ, विलम्बं विना । **मरुता** वायुना । कावेर्याः **मरुद्वृधेति** श्रौतं नाम । मरुता वर्ध्यमानत्वात् । अत एव तस्य समीरणत्वात् नेतृत्वमुच्यते । समुद्रं भर्तारं प्रति नीयमानाम् । **भद्रेति**, नदी हंसपक्षिसमानैः तोयपक्षिभिरन्यैश्च **भद्रालापैः** क्षेमंकरकण्ठध्वनियुक्तैः प्रस्थानकाले सूचितकुशला । **यां** सह्यकन्याम् **अस्कन्नाः** अशुष्काः **पूगाः** क्रमुकवृक्षाः **निशान्ते** उषसि **सरसकुहलीपत्रपातैः**। **कुहली**–पूगपुष्पम्। तत्संबन्धिनां **सरसानां** रसविशिष्टानां **पत्राणां** दलानां पातैः मन्दस्मेरां मन्दं यथातथा स्मितं कुर्वतीं मन्दस्मिततुल्यकुड्मलादिविशिष्टामिति यावत् । **मधुपविमलैः** मधुना वासनाद्रव्यैश्च **वासयन्तीव** वासनाविशिष्टां कुर्वन्तीव । यां वासयन्तीव सेति पूर्वश्लोकेनान्वयः

नववधू: काचित् स्वजन्मगृहात् भर्तृगृहं प्रति प्रस्थिता सोदरादिभि: सादरं नीयमाना सर्वयौतकसमृद्धा महतां ब्राह्मणानामाशीर्वादै: सर्वं कुशलमधिकृत्यानुगृह्यमाणा निशान्ते । निशान्तशब्दो गृहवाच्यपि । 'निशान्तं त्रिषु शान्ते स्यात् क्लीबं तु भवनोषसो:' इति मेदिनी । तत्रतत्र गृहे फलपुष्पताम्बूलादिप्रदानेन संतोषिता वासनाद्रव्यैरात्मनो देहं सुरभिलं विदधत्सु बन्धुषु मन्दस्मिता त्वरते इत्यानुभविकम् । सेयं रीतिरिह सह्यकन्यकाया इति । सरसकुहलीपत्रपातपदं फलपुष्पताम्बूलप्रदानार्थकम् । वधूपक्षे पदिन: पदवन्त: रथगजतुरगपदातिरूपा: तत्सहितं यथा तथा । 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु' इत्यनेकार्थत्वात् उचितं सर्वं ग्राह्यम् । महाजनाशीर्वादलाभमाह भद्रेति । त्वादृशानां हंसतुल्यानां स्वच्छहृदयानां द्विजानां विप्रादीनां भद्रालापै: मङ्गलवाक्यै: विहितकुशलाम् । अस्कन्ना: प्रेमार्द्रहृदया: अनपेता इति वा । पूग: क्रमुकवृन्दयो:' इति कोशात् पूगशब्दो बन्धुवृन्दपर: ॥ ४३ ॥

तस्मिन् द्रक्ष्यस्यमरमहिलामौलिगन्धैरवन्ध्याम्
आतन्वानां व्यपगतरसं मानसे मानसं व: ।
तीर्थैरन्यैरपि परिगतां शुद्धिहेतो: समन्तात्
चन्द्रोल्लाघ(स)प्रथितयशस: संपदं पुष्करिण्या: ॥ ४४ ॥

अथ चोलदेशे भगवत्समागमात् प्रागेव प्रसिद्धां चन्द्रपुष्करिणीं प्रस्तौति—तस्मिन् सह्यकन्यासंपादितसमृद्धौ जनपदे पुष्करिण्या: संपदं हे सौम्य द्रक्ष्यसि । अमराणां देवानां महिला: स्त्रिय: तासां । मौलिगन्धै: कबरीपरिमलै: अवन्ध्यां परिहृतवन्ध्यभावाम् । तद्गन्धगर्भामिति यावत् । अनेन ता अत्र शुद्धये नित्यमागत्य स्नान्तीति गम्यते । तद्दर्शने ते मानससरसि अत्यन्ताभिमतेऽपि प्रीतिरपेयादित्याह आतन्वानामिति । व: तव स्वजातीयानाञ्च मानसं मन: मानसे मानसाख्ये सरसि व्यपगतरसन् आशाहीनम् आतन्वानां—कुर्वाणाम् । स्वयमुत्तमतीर्थत्वेऽपि शुद्धिहेतो: स्वस्य स्वस्य तीर्थतासंपत्तये तीर्थैरितरै: समन्तात्–सर्वासु दिक्षु परिगतां प्राप्ताम् । चन्द्रोल्लाघ(स)प्रथितयशस: क्षयरोगपीडितस्य चन्द्रस्य तद्रोगनिवारणेन पूर्वाधिकोल्लासविधानेन च लोकप्रसिद्धाया: । उल्लाघेति पाठ: प्रसिद्ध: । उल्लाघ: रोगमुक्त: । भावार्थोऽपि । चन्द्रस्य य: उल्लाघ: रोगन्मुक्ति: तेन प्रथितयशस: । चन्द्रपुष्करिणीति नामार्थ: एवमुपपादितो भवति । तस्या: संपदं तीर्थसमृद्धिं द्रक्ष्यसि । चन्द्रो दक्षस्य दुहितॄरुपयेमे । तासु रोहिण्यामेव सक्त आसीत् । श्वशुरेण हितमुपदिष्टोऽपि तथैव स्थित: तेनैव क्षयार्तो भवेति शप्त आसीत् । अथ स इमां पुष्करिणीमागत्य चिरमुषित्वा प्रत्यहं स्नात्वा एतदुद्भवै: पुष्करै: पुष्करेक्षणमाराध्य, "तव क्षय: क्षयं यातु संधुक्षय यथापुरम् । जगन्मङ्गलसंभूतिर्भव त्वं नयनोत्सव:" इति तेनानुगृहीत इति गारुडपुराणे । धर्मवर्माणं राजानमुद्दिश्य मुनिभिरभ्यर्थितेन भगवता, "आगमिष्यामि कावेर्यां चन्द्रपुष्करिणीतटम् । रावणे निहते पापे मया राघवरूपिणा........अनन्तपाठे श्रीरङ्गं यूयं द्रक्ष्यथ मा चिरम्" इत्युक्तमिति श्रीरङ्गमाहात्म्ये दर्शनात् श्रीरङ्गनाथसमागमात्

प्रागेव चन्द्रपुष्करिणीति तस्याः यशः प्रथितमिति ज्ञायते । एवं सौगन्ध्यमाधुर्यशोधकत्वदेहोल्लासकत्वादिगुणां पुष्करिणीं पश्येत्युक्तं भवति ॥ ४४ ॥

तीरे तस्या विरचितपदं साधुभिस्सेव्यमानं
श्रद्धायोगाद्विनमिततनुः शेषपीठं भजेथाः ।
यस्मिन् अस्मत्कुलधनतया सौम्य साकेतभाजः
स्थानं भा(भ)व्यं मुनिभिरुदितं श्रीमतो रङ्गधाम्नः ॥ ४५ ॥

पुष्करिण्या इव शेषपीठस्यापि प्रागेव स्थितत्वात् तद्भजनमावेद्यते— हे सौम्य ! तस्याः चन्द्रपुष्करिण्याः तीरे विरचितपदं महनीयैः परिकल्पितस्थानकं सर्वदा साधुभिः ज्ञानभक्त्याचारात्मगुणपूर्णैः सेव्यमानं श्रद्धायोगात् चन्द्रपुष्करिणीप्रभावलम्भिततया अधिकश्रद्धया विनमिततनुः भगवत्सेवार्थे तनुः यावन्नमिता भवेत् ततो विशेषेण नमितशरीरः सन् शेषपीठं शेषाख्यमादिशेषावतारभूतं आसनं भजेथाः सेवस्व ; यथोचितं कैंकर्यं कुरु । ननु तस्य पीठत्वं कुत इत्यत्र रामः स्वकाले तत्र श्रीरंगाभावात् भावित्वेन तदाह यस्मिन्निति । अस्मत्कुलधनतया स्वस्य इक्ष्वाकुवंशधनत्वसंपत्तये स्वयम्भुवः प्रीतये च इक्ष्वाकुकाले साकेतभाजः सत्यलोकात् अयोध्यां प्राप्तस्य श्रीमतः महिमवतः रङ्गधाम्नः रङ्गाख्यविमानस्य यस्मिन् शेषपीठे स्थानं स्थितिः भाव्यम्—भविष्यत्तया (भविष्यतीति) मुनिभिः धर्मवर्माणमुद्दिश्य भगवन्तं प्रार्थितवद्भिर्मुनिभिः दाल्भ्यसहितैः उदितम् उक्तमस्ति । भाव्यशब्दः 'भाव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु' इति मेदिनीकोशात् भविष्यदर्थकः । भव्यगेयेत्यादिनिपातनात् भवनकर्त्रर्थकभव्यशब्दग्रहणेऽपि भव्यमिति पाठवत् भाव्यमिति पाठो युज्यते । भव्यमेव भाव्यमिति निर्वचनात् । कुलधनतयेत्यत्र, 'लब्ध्वा कुलधनं राजा लंकां प्रायात् विभीषणः', 'अनन्तपीठे श्रीरङ्गं स्थापयामास राक्षसः', 'इक्ष्वाकूणां कुलधनमात्मनोऽभ्यधिकं तदा । श्रीमद्रङ्गं महद्धाम' इत्यादिवचनबलात्, 'इक्ष्वाकूणां कुलधनमिदं रङ्गतां याति रङ्गम्' इति संकल्पसूर्योदये आचार्यप्रयोगाच्च कुलधनत्वं श्रीरङ्गस्यैव वक्तव्यमिति रङ्गधाम्न इति पदे कर्मधारयो ग्राह्यः । रङ्गमिति धाम, तस्येति । बहुव्रीहौ रङ्गनाथ इत्यर्थः स्यात् । तस्यापि धनत्वविवक्षायामुत्तरश्लोकानन्वयश्च । 'तस्य धाम्नः प्रसंगात्' इति धामप्रस्तावात् धामान्तर्वर्तिभगवन्मूर्तिध्याने मनो धावतीति कथनात् अत्र श्लोके भगवतोऽनेन पदेनाविवक्षितत्वसिद्धेः । अतः रङ्गनाम्नस्तु धाम्न इत्युक्तं भवति ॥ ४५ ॥

सत्त्वे दिव्ये स्वयमुदयतस्तस्य धाम्नः प्रसङ्गात्
मञ्जूषायां मरकतमिव भ्राजमानं तदन्तः ।
चेतो धावत्युपहितभुजं शेषभोगे शयानं
दीर्घापाङ्गं जलधितनयाजीवितं देवमाद्यम् ॥ ४६ ॥

रङ्गप्रस्तावात् रङ्गधाम्न इति पदप्रयोगाच्च तत्राऽऽविर्भूय स्थितं भगवन्तं प्रति रामस्य मनः

स्वयमेव जगाम। तदुक्तिं विना आत्मधारणमलभमानः तस्य भगवतः तत्र शेषे शयानस्य प्रतिबोधनं हंसं प्रति कर्तव्यमित्याशयेन च स्वानुसंधानमुद्घाटयति सत्त्वे इति। रजस्तमोमिश्रसत्त्वव्यावृत्तये **दिव्य**पदम्। शुद्धसत्त्वे इत्यर्थः। सत्ये इति पाठसत्त्वे सत्यलोके इत्यर्थः स्यात्। तदा दिव्य इति पदं तदाविर्भावोपयोगिमहिमवत्त्वं तस्य प्रदर्शयितुम्। सत्यलोके चतुर्मुखार्थे प्रथममाविर्भूतं हि विमानं पश्चादयोध्यायां कावेरीसैकते च क्रमेण संनिहितम्। सत्त्वे इति पाठे **दिव्यसत्त्व**पदेन नित्यविभूतिः ग्राह्या। तत्र विमानाकारं परिणामं प्राप्य ततः सत्यलोकं प्राप्तमित्याशयेन एवमुक्तिः। **स्वयमुदयतः** स्वयं व्यक्तस्य। भूतकाले निर्देष्टव्ये कथं शतृप्रत्यय इति चेत्——कालाविवक्षया प्रयोगः। तेन सत्ये अयोध्यायाञ्च उदितत्वम् कावेर्यां दिव्यसत्त्वे शेषपीठे उदेष्यत्त्वञ्च विवक्षितं भवति। क्लेशसहने उदयशब्दात् सार्वविभक्तिकस्तसिः। षष्ठी। तस्य धाम्नः स्वयमुदयस्य प्रसंगादित्यर्थः। **प्रसंगात्** प्रस्तावस्य जातत्वात् **तदन्तः** तस्य विमानस्य गर्भे **मञ्जूषायां** सुवर्णपेटिकायां मरकतमिव निक्षिप्तमरकतमणिमिवानर्घं श्यामवर्णञ्च भ्राजमानं देवं प्रति चेतो मे धावतीत्यर्थः। तद्विशेषणानि **उपहितभुज**मित्यादीनि। **उपहितः** शिरस उपधानीकृतः एको भुजो येन तं शेषस्य **भोगे** शरीरे शयानं **दीर्घापाङ्गम्**— अतिदूरागतभक्तजनस्वागतोदारस्वभावत्वात् दीर्घप्रसृतकटाक्षम्। यद्वा नेत्रान्तिमभागस्यैव दीर्घत्वे पूर्णस्य नेत्रस्य सागरवत् स्थितस्य वैशाल्यमनन्तमित्याशयः। एतदपाङ्गस्मरणेन, 'तस्येयमसितेक्षणा', 'सह पत्न्या विशालाक्ष्या नारायणमुपागमत्' इति प्राक् स्वयं भक्तिपुरस्सरं सेवनावसरे अक्षिवैशाल्येन स्वात्मानं कटाक्षितवती रङ्गनायिका स्मृतिपथमारूढा। अतस्तयाऽपि विशिनष्टि **जलधितनयाजीवित**मिति। लक्ष्म्याः प्राणभूतम्। यद्वा लक्ष्मीरेव यस्य जीवितम्, तम्। आद्यं ब्रह्मणोऽपि कारणभूतं अस्मदयोध्यायां तत्र शयानं देवमुभयविभूतिनाथं प्रति **चेतो धावती**ति। त्वमपि स इहाऽऽगमिष्यतीति बुध्यस्वेति भावः॥ ४६॥

> **चोराक्रान्तं तदनु विपिनं चोलपाण्ड्यान्तरस्थं**
> **झिल्लीनादश्रवणपरुषं शीघ्रमेव व्यतीयाः।**
> **तीर्णे तस्मिन् प्रकटय सखे शीतलांस्ते निनादान्**
> **शब्दायन्ते न खलु कवयः सन्निधौ दुर्जनानाम्॥ ४७॥**

चोलदेशो द्रष्टव्यमुक्तम्। ततः पाण्ड्यदेशं प्रस्थापयन् मध्ये स्थितं चोरवनमेकयत्नेनातिक्रामेत्याह चोरेति। हे सखे! समानसुखदुःख हंस! **तदनु** शेषपीठभजनानन्तरम् **चोलपाण्ड्यान्तरस्थं** चोलाश्च पाण्ड्याश्च। तेषां-तयोर्देशयोः **अन्तरे** मध्ये स्थितं, **चोरैः** पथिकजनप्रतिरोधेन धनाद्यपहाराय तस्करैः आक्रान्तं **झिल्लीनां** भृङ्गार्यादिपर्यायपदवोध्यानां घोरनादानां जन्तुविशेषाणां। तेषां सूक्ष्माकारत्वेऽपि तन्नादोऽतिकठोरः। तन्नादः **श्रवणयोः** श्रोत्रयोः परुषः यत्र तत् विपिनम्। नादस्य विशेषणत्वविवक्षया पूर्वनिपातः। नादश्रवणं परुषं यत्रेति वा। यद्वा **श्रवण**शब्दः आकर्णनाधिकरणपरः

झिल्लीनादश्रुत्याधारभूतम् अत एव परुषम् । अथवा झिल्लीनादैः श्रवणयोः कर्णयोः परुषं बाधापादकं शीघ्रमेव व्यतीयाः अतिलंघय । यद्यपि चोराः पान्थद्रविणापहारिणः पक्षिणस्ते हिंसायै न प्रवर्तेरन् , अथाप्यननुभूतविलक्षणस्वरूपदर्शने ग्रहणार्थे यतेरन् । अथवा ततोऽपायाभावेऽपि झिल्लीनादस्यासह्यत्वादेव गमने शैघ्र्यमपेक्ष्यते। न केवलं शीघ्रगमनमभ्यर्थ्यते, किं तु अतिलंघनपर्यन्तं त्वद्ध्वन्यनाविष्करणमपीत्याह तीर्णे इति । तस्मिन् विपिने तीर्णे अतिवाहिते सति शीतलान् श्रोत्रभोग्यान् ते निनादान् प्रकटय आविर्भावय । न तु प्रागित्यर्थः । ननु विपिने मदीयनिनदाविष्कारे का हानिरित्यत्राह शब्दायन्त इति । कवयः सहृदयहृदयाह्लादिवाग्व्यापारप्रावीण्यभाजः दुर्जनानां मूढानां, सत्यपि ज्ञाने खलानां दोषोद्भावकघोषबधिरितदेशानां संनिधौ समीपे न खलु शब्दायन्ते शब्दं न कुर्वन्ति हि । स्वकौशलं नाऽऽविष्कुर्वन्ति हि । त्वमपि कविः के जले चरन् पक्षी । त्वन्नादश्च जलचरनादत्वात् शीतलः झिल्लीनादेन परुषेणाभिभूयेत । सर्वेषां चोरत्वात् कार्यान्तरव्यग्रतया तत्र ते नादः काननचन्द्रिकेव च स्यादिति ॥४७॥

स्रस्तापीडं प्रचलदलकं व्यक्तताटङ्करत्नं
मुक्ताचूर्णस्फुरिततिलकं वक्त्रमुत्तानयन्त्यः ।
देशे तस्मिन् कुवलयदृशो जातकौतूहलास्त्वां
मालादीर्घैर्मधुरविरुतं मानयिष्यन्त्यपाङ्गैः ॥ ४८ ॥

तर्हि पश्चादपि विनैव नादं विषयान् अतिलंघयिष्यामीति न मन्तव्यम् । पश्चान्नादप्रकटनस्य फलमस्ति । बहुभिः सानन्दमनुभवादित्याह स्रस्तेति । तस्मिन् पाण्ड्यदेशे कुवलयदृशः पाण्ड्यदेशस्त्रियः भोग्यं ते निनादमाकर्ण्य त्वद्दर्शनकुतूहलेन बहिरागम्य त्वां द्रक्ष्यन्ति परमेण गौरवेण । तदा ताभिरुन्नमिते मुखे आपीडः शिरोभूषणतयाऽर्पितं माल्यादिकं चिरोन्नमनात् स्थानादीषत् च्युतं लम्बेत । अलकाः चूर्णकुन्तलाः मारुतवशात्स्वयं मुखचालनाच्च चलन्तः स्युः । ताटङ्के कर्णभूषणे स्थितानि रत्नानि सूर्यकिरणस्पर्शादिना व्यक्तिं प्रकाशाधिक्यं प्राप्नुयुः पाण्ड्यदेशे मुक्तामानाधिक्यात् मुक्ता एव चूर्णीकृत्य तास्तिलकं धारयेयुरिति तच्चूर्णमपि बाह्यालोकसंबन्धात् स्फुरेत् । एवं स्रस्तापीडत्वादिकं यथा स्यात् तथा वक्त्रं स्वमुखम् उत्तानयन्त्यः उत्तानम् उन्मुखं कुर्वत्यः मालादीर्घैः अनुस्यूतप्रवाहात् मालावत् स्थितैरपाङ्गैर्मानयिष्यन्ति । बहुमानेन द्रक्ष्यन्तीति यावत् । मधुरविरुतं मनोहरनिनादम् । शीतलानां निनादानामुपर्युपरि आविष्कारे ता अपि चिरं त्वामेवानुस्यूतं पश्यन्त्य एव स्युः । तेन मालावद् दीर्घता स्यात् तदपाङ्गानामिति ।

दुर्जनानां सविधे कवयो न शब्दायेरन् इत्युक्तम् । अन्यत्र कविव्याहारो महते मानायेति अलोच्यते–कुवलयदृशः भूमण्डलं कृत्स्नं दृष्टवन्तः लोकज्ञाः तत्रतत्र विद्वदविद्वत्तारतम्यादिवेदिनश्च महान्तः स्वयं सहृदयाः कवयो निरसूयाः मधुरविरुतं मधुरं विशिष्टं व्यवहारं कुर्वन्तं महाकविं स्वयं परैः प्रीत्या •समर्पितनानाविधापीडकुण्डलतिलकादिशोभिमुखत्वेऽपि, मधुरव्याहाररसास्वादपारवश्यात् कालोन्निद्र-

कदम्बगोलवपुषः कम्पस्फुरन्मौलयः अवशादुत्तानदत्ताननाः वाङ्मयसारस्यं प्रस्तुवन्तः अद्भुताः पुष्पमालाः रत्नमालाश्च हस्तैर्गृहीत्वा महाकविकण्ठेऽर्पयन्तः स्वकीयैः प्रियशीतलैरपाङ्गमाल्यैरप्यलंकुर्युरिति ॥४८॥

**नित्यावासं वृषभमचलं सुन्दराख्यस्य विष्णोः**
**प्रत्यासीदन् सपदि विनमद्भागधेयं नतः स्याः ।**
**यस्योत्सङ्गे बलिविजयिनस्तस्य मञ्जीरवान्तं**
**पाथो दिव्यं पशुपतिजटास्पर्शशून्यं विभाति ॥ ४९ ॥**

एवं मधुरनिनदश्रवणकृतमानवप्रीतिं हंसं तत्रत्यं दिव्यदेशं वृषभाचलं विनन्तुमर्थयते नित्येति । वृषभाचले विराजतो भगवतः सुन्दर इति सुन्दरबाहुरिति चाऽऽख्या । वृषभपदेन वाहनवृषभस्य सुन्दरपदेन तदनुगुणं कस्यचिच्च ग्रहणं मा भूदिति वृषभमचलमिति सुन्दराख्यस्य विष्णोरिति च प्रयुक्तम् । विष्णोरिति पदस्य त्रिविक्रमावतारे प्रसिद्धत्वात् स एव स्वमञ्जीरमुखेन तीर्थं परिकल्प्य तत्र स्नातानां स्वं दर्शयितुमाविर्भूत इति ज्ञाप्यते । विष्णोः नित्यावासं नियतवासस्थानम् । अर्चामूर्तित्वात् । अचलमित्यस्य प्रत्यासीदन्, नत इत्युभयत्रान्वयः । अचलस्य विनमद्भागधेयत्वमपि । भागधेयं हि नानाविधश्रौतस्मार्तकर्मसंपादितं विविधफलहेतुर्भवति । अचलश्चायं तादृशकर्मानुष्ठानाभावेऽपि विनमतां विषये स्वयमेव भागधेयस्थाने स्थित्वा सर्वं प्रयच्छति । अतस्तं नतो भव । स्याः-सत्तां भजेः । तन्नमनमात्रेण ते सत्ता सच्छब्दार्थपौष्कल्यवत्ता स्यात् । अवतारेषु अस्य त्रिविक्रमत्वेन भावने कारणमाह यस्येति । यस्य अचलस्य उत्संगे अधित्यकायाम् ऊर्ध्वदेशे पाथः तीर्थं दिव्यं विभाति । तदाविर्भावस्थलं दर्शयति बलीत्यादिना । त्रिपदीच्छया लोकत्रयं स्वायत्तीकृत्य बलिं पाताले निवेशितवतस्तस्य विष्णोः । ब्रह्मकृतपाद्यार्पणकाले मञ्जीरेण पादभूषणेन नूपुरेण वान्तम् आविर्भावितं विभाति विशेषेण भाति । ननु पादाङ्गुष्ठात् प्रसृततीर्थापेक्षया नूपुरवान्तस्य विशेषेण भानं कुत इत्यत्राह पशुपतिजटास्पर्शशून्यमिति । पादाङ्गुष्ठनिस्सृतं हि भगवत्पादोदकमिति गौरवेण पशुपतिना भगीरथप्रार्थनाकाले धृतं तज्जटायामेव चिरं लीनमासीत् । केशजलञ्च दुष्टमिति प्रसिद्धम् । पशुपतिर्वा भवतु, अन्यो वा । जटालीनस्य दुष्टत्वात् कथं स्नानपानार्हतेति केचिदाक्षिपेयुः । तदा गंगाप्रभावं शास्त्रमूलं प्रदर्श्य तीर्थस्य भूरिताश्चोपवर्ण्य प्रमाणबाधितस्तर्को न साधक इति प्रतिवक्तव्यम् । अन्यथा जह्नुकर्णमलजलमित्यपि त्याज्यतां स्यात् । अगस्त्यमूत्रजलमिति सागरोऽपि त्यज्येतेति । एवमपि शंकाकलङ्कितचेतसो बहवः सन्ति । इदं तु मञ्जीरतीर्थम् कदाचित् इतरजनवत् पशुपतिना समागत्य स्नानात् जटादिसर्वकेशस्पर्शवत्त्वेऽपि जटालीनत्वरूपदोषस्याप्रसक्तया सर्वैराद्रियते इति विशेषेण भाननमस्य । अतोऽयमचलः श्रेष्ठ इति ॥४९॥

**ईशादस्त्राण्यधिगतवतां क्षत्रियाणां प्रभावात्**
**कारागारस्मरणचकितैः सिक्तसस्यान् पयोदैः ।**
**पश्यन् यायाः परमलकया स्पर्धमानैरजस्रं**
**पुण्यावासैः पुरजनपदैः मण्डितान् पाण्ड्यदेशान् ॥ ५० ॥**

अथ पाण्ड्यदेशप्रभाव-धनधान्यसमृद्ध्यादिवर्णनपूर्वकं तदतिलंघनमभ्यर्थयते ईशादिति। अत्रेयं कथाऽनुसंधेया। चेरचोलपाण्ड्यदेशेषु कदाचित् दुर्भिक्षं दुष्परिहरमासीत्। तद्देशाधिपतयस्त्रयोऽप्यगस्त्यं मुनिवरमाश्रित्य किं कर्तव्यमित्यजिज्ञासन्त। स दक्षिणमधुरावास्तव्यं महेश्वरमाराधयतेत्युपादिक्षत्। तथा कुर्वत्सु तेषु त्रिष्वशरीरिवाक् आविरभूत्—स्वर्गं गत्वा मेघवाहनसविधे मदाशयमावेदयत। स वर्षिष्यतीति। तथेति ते स्वर्गं जग्मुः। इन्द्रश्चैषामागमनं प्रागेव प्रबुध्य त्रयाणां त्रीण्यासनानि परिकल्प्य प्रतीक्षाञ्चक्रे। तत्र गतानामेषां मध्ये चेरचोलराजयोरुन्नतासनोपविष्टयोः पाण्ड्यः शिष्टमासनं नीचमस्तीति निरीक्ष्य तत्रोपवेष्टुमनिच्छन् इन्द्रस्याऽऽसनमेवाऽऽक्रामत्। इन्द्रो योगक्षेमं विचार्य तौ बृष्ट्यर्थमनुगृह्य त्रीनपि विससर्ज। वितथमनोरथ एव पाण्ड्यस्तं किमप्यप्रार्थ्यैव धीरो निववृते। अथ कदाचित् मृगयामिषेण मलयं गच्छन् तत्र प्रसृतान् पुष्कलावर्तमेघान् प्रेक्ष्य तेषां कारागृहवासं कल्पयामास। ततो भीतास्ते तं देशमतिलंघितुं नाशक्नुवन्। तदधिगम्य देवेन्द्रस्तेन योद्धुं प्रचक्रमे। पाण्ड्यश्च परमेश्वरप्रसादलब्धसर्वास्त्रतया दिव्यास्त्रप्रयोगकौशलेन देवेन्द्रं परिबभूव। अथ स विषण्णः पाण्ड्येन मैत्रीं प्राप्य यथाकालवर्षविधानमेतद्देशक्षेमकरं सर्वदा स्वेन करिष्यमाणमावेद्य मेघान् परिगृह्य प्रतिन्यवर्तत। तदाप्रभृति पाण्ड्यदेशः देशान्तरापेक्षया समृद्ध्यतिशयसंपन्न आसीदिति। तदिदं स्वयमीशाधिगमिता-स्त्रपपञ्चकौशिकमुनिकृपालब्धसर्वास्त्रतया पाण्ड्यदेशराजं प्राक्स्थितं स्वसदृशं पाण्ड्यांश्च कोसलपतीकाशान् विभाव्य श्रीरामेणाऽऽदरेणैवमाविष्क्रियत इहेति कवेराशयः।

ईशात् रुद्रात् अस्त्राणि दिव्यानि अधिगतवतां गृहीतवतां तदुपदिष्टास्त्रविद्यानां क्षत्रियाणां पाण्ड्यदेशराजानाम् पुष्कलावर्तमेघबन्दीकरणेन्द्रपरिभवनादेरेकेनैव राज्ञा रुद्रलब्धास्त्रबलात् कृतत्वेऽपि ततः पश्चात्तनानामपि तन्मुखेन तल्लाभस्य इन्द्रभयानुवृत्तेश्च संभवात् क्षत्रियाणामिति बहुवचनम्। अगस्त्येन पूर्वमीशाराधने प्रेरणमस्त्रादिलाभमुद्दिश्य एषां तद्भक्तत्वादिति राजत्रयानुसंधानमप्यत्रेष्टमिव। प्रभावात् प्रभावमनुभूतमनुसंधाय काशायां बन्धनालये तत्क्षत्रियकारितस्य स्ववासस्य वृत्तस्य स्मरणेन चकितैः, अत्र अवर्षणे अतिवर्षणे वा कारावासस्तत्राऽऽपतेदिति भीतैः इन्द्राज्ञामप्यप्रतीक्ष्य यथाकालमनुकूल्ये प्रवृत्तैः पयोदैः मेघैः सिक्तसस्यान्, नदीजलाशयादिपूरणार्थकादाचित्कवर्षकृतमहोपकारमात्रेणानुपरम्य फल-समृद्धिसंपिपादयिषया वर्धमानसस्योपरि समुचितवर्षसेकेनापि सम्यक् पोषितसस्यभूयिष्ठान्। एवं धान्यसमृद्धि-रुक्ता, भोग्यभोगोपकरणतदुचितधनादिसमृद्धिम् आस्तिक्यपूर्तिञ्च प्रदर्शयति परमित्यादिना। अलकया सर्वनिधिसंपन्नया कुबेरनगर्या साकं अजस्रं सर्वदा परं भृशं स्पर्धमानैः कलहं कुर्वद्भिः। तदधिकैरिति यावत्। पुण्यानां शास्त्रीयधर्मानुष्ठानप्रवणानां महाजनानामावासभूतैः पुरजनपदैः नगरैः ग्रामबृन्दस्थानभूतप्रदेशैश्च मण्डितान् अलंकृतान् पाण्ड्यदेशान् पश्यन् वियति गच्छन्नेव वीक्षमाणः याया: तद्देशेषु उपरि गच्छेः। शिवाश्रितक्षत्रियपरिपालिते तत्र पुराणां जनपदानाञ्च पुण्यपुरुषावासत्वकथनात् तेषां क्षत्रियाणां विश्वामित्रादेरिव वैदिकश्रेष्ठत्वं शैवपाशुपतमतानभिमानित्वञ्च व्यज्यते ॥ ५० ॥

**मुक्ताजालैर्जनितपुलिनां शुक्तिसन्तानमुक्तैः**
**तारापूर्णां दिवमिव ततस्ताम्रपर्णीं भजेथाः ।**
**प्रत्यासत्त्या नियतविशदं पीतसिन्धोर्महर्षेः**
**पानीयं ते परिणमयिता तत्र मुक्तामयत्वम् ॥ ५१ ॥**

अथ ताम्रपर्णीं प्राप्य पानीयं पिबेत्याह मुक्तेति । "ताम्रपर्ण्याः शुक्तिकान्तः संरुद्धास्तोयबिन्दवः । षड्भिर्मासैर्घनीभूताः जायन्ते शुद्धमौक्तिकाः" इति रत्नशास्त्रे ताम्रपर्णीतीर्थस्य मुक्तापरिणामित्वमुक्तम् । मौक्तिकेषु शुक्तिकामौक्तिकानामेव श्रेष्ठ्यं संमतम् । ततः पाण्ड्यदेशयानानन्तरं शुक्तिभिः मुक्तास्फोटैः सन्तानेन अविच्छेदेन उत्तरोत्तरं मुक्तैः विसृष्टैः । सन्तानश्चायमेकशुक्तिविषये, उपर्युपरिमिलदनेकशुक्तिषु च द्रष्टव्यः । मुक्ताजालैः मौक्तिकराशिभिः जनितपुलिनाम् । ताम्रपर्ण्यां तत्र मुक्ताराशय एव पुलिनवल्लक्ष्यन्त इति भावः । अत एव तारापूर्णां नक्षत्रपरीतां दिवमिव गगनमिव स्थितां ताम्रपर्णीं नदीं भजेथाः । ताम्रपर्ण्याः मुक्तामयत्वकथनं तन्मूलं तवापि मुक्तामयत्वमभिलष्येत्याह प्रत्यासत्त्येति । पीतसिंधोः—समुद्रं पीतवतः महर्षेः । विशेषणबलादगस्त्यस्येति सिद्धम् । प्रत्यासत्त्या सामीप्यात् नियतं नियमेन-सर्वदा विशदं निर्मलम् । शरदि अगस्त्योदयः, तदा सर्वजलनैर्मल्यमिति प्रमाणसिद्धम् । उदितागस्त्यसुदूरसंबन्धेऽपि जलनैर्मल्ये, समीपे तस्य सार्वकालिकस्थितिः सर्वदा तन्नैर्मल्यहेतुरिति निश्चीयते। अत एवास्याः सर्वदा निर्मलं पानीयं तीर्थम् । पानीयशब्दप्रयोगः त्वयाऽप्यवश्यं पातव्यमिति ज्ञापनार्थः । तत् त्वयोपयुक्तं ते-तवापि तत्र--नद्यामेव मुक्तामयत्वं परिणमयिता । लुट् । मुक्तामयत्वापादकं भविष्यति । तत्तीर्थग्रहणेन शुक्तीनां मुक्तामयत्वं षड्भिर्मासैः । तव तु मुक्तामयत्वं तत्रैव । ततः प्रस्थाय गमनात् प्रागेव । पानीयपानसमन्तरमेव । तव शुक्तिकापेक्षयाऽतीव स्वच्छत्वात् । विवक्षितार्थस्त्वन्यः—तत्पानेन ते मुक्तामयता नीरोगता सुदूरसञ्चारदेहव्यथादिशमनं भविष्यतीति । तथा शरीरे रोगादिरस्ति चेत्—तन्निवृत्तिरपि भवेत् । मुक्तः आमयः येन स मुक्तामयः तत्त्वम् । 'ताम्रपर्णी नदी यत्र' इत्यारभ्य, 'ये पिबन्ति जलं तासां मनुजा मनुजेश्वर । प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः' इति तज्जलपानस्य अमलाशयत्वभगवद्भक्त्युत्पादकत्वादिकमुक्तं श्रीभागवते । तेन देहरोग-मनोरोगात्मरोगरूपरागद्वेषादिनिवारकत्वमप्यस्य । अतोऽपि त्वं मुक्तामयः स्याः। पानीयस्य मुक्तामयत्वं मुक्तावत् स्वच्छत्वं मुक्तोत्पत्तिहेतुसूक्ष्मांशभूयिष्ठत्वञ्च । तद्ग्रहणेन ते 'अन्नानुरूपां तनुरूपऋद्धिम्' इति न्यायेन मुक्तामयत्वं भवेत्। मुक्तावत् स्वच्छत्वं स्यात् । अगस्त्यसमुद्रपानकथा भारतेऽनुसंधेया । सिंधुं पीतवानयमिति अपां भये समुत्पन्ने स्वोदयेन सर्वनैर्मल्यं प्रदायानुजग्राह । स ताम्रपर्णीसमीप एव वासं रोचयते, नूनं स्वाभिमानास्पदद्रमिडभाषागौरवावहदिव्यसूक्तिसमूहाविर्भावकः श्रीवकुलभूषणसूरिरत्रैवाऽऽविर्भविष्यतीति इति कविरभिप्रैति ॥५१॥

**तस्याः स्वैरं सरसिजमुखास्वादसंप्रीतचेताः**
**शीतीभूतस्तरललहरीबाहुसंश्लेषणेन ।**

**अध्यासीनः पुलिनमनिलैर्वीजितश्चन्दनाद्रेः**

**श्रान्तिं शान्तिं गमयतु भवान् सागरं लङ्घयिष्यन् ॥ ५२ ॥**

पानीयं पातव्यमिति सूचितम् । न तावन्मात्रं पर्याप्तम् ; उपरि बहुदूरं पदेपदे विश्रमरहितं गन्तव्यं स्यादिति तत्र विशेषतो विश्रान्तिः संपाद्येति वदन् सुवर्णमुखर्यपेक्षयाऽपि ताम्रपर्ण्या अतिशयितत्वमभिप्रयन् परमोत्सुकनायिकाभोगसंपत्तिं लभ्यां दर्शयति **तस्या** इति । भवान् **सागरं लंघयिष्यन्** इतः परं सुदूरसमुद्रलंघनस्य कार्यतया **स्वैरम्** इच्छाप्रतिहतिशंकाविरहात् यथेच्छं **तस्याः** ताम्रपर्ण्याः **सरसिजं** तामरसमेव **मुखं** नायिकाधरोष्ठपुटात्मकम् तस्य **आस्वादेन**(अधरामृतपानेन) संप्रीतं लब्धातिशयितप्रीतिकं **चेतः** चित्तं यस्य सः । तत्कृतपरिरम्भेण सर्वाङ्गीणं सुखमाह **शीतीभूत** इति । **तरलाः** ईषच्चलन्त्यः **लहर्यो** वीचय एव बाहू तत्कृतेन **संश्लेषणेन** गाढालिङ्गनेन **शीतीभूतः** इतः प्रागस्थितं तापशमनमूलकं शैत्यं प्राप्तः एवं लब्धभोगः **पुलिनमध्यासीनः** सैकतमण्डले उपविश्य स्थितः निकटस्थितस्य **चन्दनाद्रेः** मलयपर्वतस्य **अनिलैः** मन्दमारुतैः **वीजितः** स्पर्शितः **श्रान्तिं** तावद्दूरगमनकृतं श्रमं **शान्तिं गमयतु** शमं प्रापयतु (भवान्) । श्रमः शमयितव्य इति । तत्र त्वत्प्रियतमा यावत्तृप्ति ते स्वाधरामृतपानमनुमत्य पुनः पुनर्बाहुभ्यां गाढमाश्लिष्य त्वां भोगिनं कृत्वा सैकते उपवेशं प्रार्थ्य चन्दनगन्धभोग्येन मन्देन मलयमारुतेनोपवीज्य, संजातश्रमपरिहृतिः बहुदूरलंघनश्रमानुत्पत्तिश्च यथा स्यात् , तथोपचरिष्यति । अतस्ते साम्प्रतमस्याः ऋश्यमूकस्थायाः पद्मिन्या इव सुवर्णमुखरीताम्रपर्ण्यादीनामपि त्वदीयतया त्वदनुरागपात्रत्वात् यादृच्छिकोऽभीष्टलाभः ॥ ५२ ॥

**सव्यं तस्याः कियदिव गतः श्यामतालीतमालां**

**त्वत्प्रायाणां तरुणवयसां चेतसो नन्दयित्रीम् ।**

**वेलामब्धेर्विविधलहरीदत्तमुक्ताभिरामां**

**द्रक्ष्यस्यारात् द्विगुणपुलिनां केतकीनां परागैः ॥ ५३ ॥**

ततो दक्षिणां गतेन वामतः सागरतीरं संदृश्यमित्याह तदनन्तरमपि त्वामन्या प्रिया प्रीणयिष्यतीत्याह **सव्यमिति** । **तस्याः** ताम्रपर्ण्याः **कियत् इव** अत्यल्पं **सव्यं** वामपार्श्वं गतस्सन् अब्धेः सागरस्य **वेलां द्रक्ष्यसि** । कीदृशीम् **श्यामतालीतमालाम्** तालयः तालवृक्षाः **तमालाः** हरितपत्रवृक्षाश्च **श्यामाः** यत्र वेलायाम् । **त्वत्प्रायाणाम्** । त्वया सदृशानि त्वत्प्रायाणि ; तेषां **तरुणानां** यूनां **वयसां** पक्षिणां **चेतसः नन्दयित्रीम्** आनन्दकरीम् , **विविधाभिः** नानाभूताभिः **लहरीभिः** वीचिभिः दत्ताः याः मुक्ताः ताभिः **अभिरामां** रमणीयाम् , तथा केतकीपुष्पाणां **परागैः** रजोभिः मुक्ताभिरिव **द्विगुणानि** रजस्संबन्धप्रागभावविशिष्टपरिमाणतुल्यं परिमाणान्तरं रजोभिः प्राप्तानि **पुलिनानि** जलोन्मग्नानि सैकतमण्डलानि यस्याः तथाविधाञ्च वेलां **आरात्** समीपे द्रक्ष्यसि । दूरादेव तालीतमालादय उन्नतास्तरवो दृश्याः । बहूनि वयांसि च गच्छन्ति दृश्येरन् । ततः किञ्चिद्गमने वीचयो दृश्येरन् । अथ वेलासमीपगमने पुलिनानि तत्र केतकीपुष्परजांसि च प्रेक्ष्येरन् ॥ ५३ ॥

**स्थित्वा तत्र क्षणमुभयतः शैलशृङ्गावतीर्णैः**
**स्रोतोभेदैरधिगतगुणं चारुविष्फारघोषैः ।**
**लक्षीकुर्वन् दशमुखपुरीं सौम्य पत्रप्रकृष्टो**
**वेलाचापं शर इव सखे वेगतस्त्वं व्यतीयाः ॥ ५४ ॥**

अथैषच्छद्मपरिहाराय लक्ष्यनिर्धारणाय च क्षणविलम्बमर्थयमानः, 'यथा राघवनिर्मुक्तः शरः श्वसनविक्रमः । गच्छेत् तद्वत् गमिष्यामि लंकां रावणपालिताम्' इत्युक्तवता हनुमतेव रिपुस्थानं प्रति गमनात् "पूर्वं कश्चित् वानरात्मा रामशरः प्रविश्य स्वाग्निना लंकामेव ददाह ; अथ कोऽयं हंसात्मा ; किमयं करिष्यति' इति तद्वीकरं शरवद्गन्तव्यमित्युपदिशन् शरत्वोपपत्तये तत्र धनुर्मौर्वीघोषसंपत्तिमपि दर्शयन् हंसं प्रोत्साहयति **स्थित्वे**ति । हे **सौम्य** ! मनोज्ञ ! स्वशरत्वेन हंसस्य भावनात् महावीरस्य शर एव मनोज्ञ इति सौम्येत्युक्तम् । सोमवत्प्रियदर्शनमत्प्रियत्वात् त्वं सौम्योऽसि पश्यताम् ; समये प्राप्ते शरवत् भायाः । त्वं हि शरवत् पत्रप्रकृष्ट इति प्रशंसा । पत्राभ्यां प्रकृष्टः **पत्रप्रकृष्टः** पत्रवत्तया लब्धप्रकर्षः । वेगवन्तं त्वामपि पत्रे प्रकर्षेण —वेगातिशयेन कर्षत इति च **पत्रप्रकृष्टता** । शरस्यापि पत्रे भवतो वेगसंपत्तये । चापात् प्रस्थितस्यैव शरस्य वेगातिशयः । तदर्थञ्च चापाग्रद्वये मौर्वीनामानौ गुणावपेक्षितौ । तयोर्गुणयोर्मध्ये दृढं बन्धनेन शरः क्षिप्यते । दार्ढ्यपरीक्षार्थे विष्फारघोषोऽपि क्रियते । तावतां संपत्तिरिहापि । शर इव स्थितो हंसः । तत्पक्षौ शरपत्रवत् । सागरवेलैव दीर्घा धनुः । तत्र हंसस्थितिदेशापेक्षया पूर्वत्र परत्र च स्थितं शैलशृंगद्वयं धनुरग्रभागौ । ततोऽवतीर्णे स्रोतसी धनुर्गुणौ । **स्रोतोभेदै**रिति बहुवचनं मौर्व्याः अनेकसूत्रसमाहाररूपतया तद्वत् स्रोतसि अवयवभेदाभिप्रायेण । धनुरग्रे पृथक्पृथक्स्थितानां समाहारेण पश्चात् मध्ये मौर्वीत्वसंपादनमपि स्यात् । मौर्व्यां विष्फारघोषो भवति ; स्रोतस्स्वपि जवेन प्रवहत्सु विशेषेण घोषो भवत्येव । ईदृशस्रोतोयुक्ततया मौर्व्याख्यगुणवत्त्वं वेलाचापस्य । तथाच तत्र **क्षणं** क्षणकालं **स्थित्वा** चलनरहितो भूत्वा तयो**भयतः** पार्श्वद्वये शैलशृंगाभ्या**मवतीर्णैः** अधः प्रसृतैः विष्फारः विशेषेण स्फारः प्रवाहघोषः धनुर्घोषात्मकविष्फाररूपो घोष इव स्थितः **चारुः** येषां तैः **स्रोतोभेदैः** घनमौर्वीसंपत्त्यर्थगुणाधिक्यसंपादकैरनेकैः प्रवाहैः **अधिगतगुणं** गुणयुक्तम् । मौर्वीसमानप्रवाहद्वयविशिष्टमिति यावत् । **वेलाचापं** धनुस्तुल्यां वेलां **वेगतः** जवेन **शर इव** मया प्रयुक्तो बाण इव **व्यतीयाः** विसृज्य गच्छेः कुत्रेत्यत्राह **लक्षीकुर्वन् दशमुखपुरी**मिति । रावणपालितां लंकां यथा हनुमान् तथा स्वभेद्यतया स्वप्रवेशस्थानतया च कल्पयन् ॥

(2) अत्र, "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत्" इत्येतदर्थ उपदिश्यते आचार्येण । प्रणवमध्यम् उकारः । शृङ्गे अकारमकारौ । स्वकृतकर्मप्रवाहभगवत्कृतनानापुरुषार्थरूपप्रवाहोभयमेदुरात् संसारात् जीवः शरवत् निष्क्रामति । तदा तन्नामसंकीर्तनादिरेव ज्याघोषः ॥ ५४ ॥

दावासक्तं वनमिव नभः सन्ध्ययेवानुविद्धं
सिन्दूराङ्कं द्विपमिव हरिं स्वाम्बरेणेव जुष्टम् ।
विद्युद्भिन्नं घनमिव सखे विद्रुमारण्ययोगात्
देहेनैकं मिथुनमिव च द्रक्ष्यसि त्वं पयोधिम् ॥ ५५ ॥

वियति डयनकाले पयोधिरधःस्थितः तवैवमेवमुल्लेखविषयो भविष्यतीत्याह दावेति । सागरस्य श्यामवर्णत्वात् तत्र प्रसृतानां प्रवालानां रक्तवर्णत्वात् तदुभयस्य दूरादवलोकने एवमेवं मतिर्भवति । **दावेन** वनाग्निना आ-समन्तात् सक्तम् अरण्यमिव । सर्वं द्वितीयान्तम् ; पयोधेरुपमेयस्य द्रक्ष्यसी त्यत्रान्वयात् क्रियान्तरत्वात् । संध्यया सन्ध्याकालस्थितरक्तवर्णद्रव्येण सूर्यकिरणच्छुरितमेघपटलादिना । **अनुविद्धं** संश्लिष्टं नभः गगनमिव । सिन्दूराङ्कं सिन्दूरम् अङ्कः लेपनद्रव्यं यस्य तं द्विपं गजमिव । स्व-**अम्बरेण**—स्वस्य हरेरसाधारणेन पीतेन वस्त्रेण जुष्टं युक्तं हरिं विष्णुमिव । विद्युता तडिता भिन्नं मिश्रं । संभिन्नमित्यस्य मिश्रमित्यर्थः। उपसर्गार्थस्य धातौ लीनत्वात् उपसर्गं विनाऽपि तस्मिन्नर्थे प्रयोगः। 'अन्यदारितमिश्रेषु भिन्नम्' इति च रत्नमाला । विद्युत् मेघे संयुज्य पूर्वदशापेक्षया तस्य भेदं वैलक्षण्य-मापादयतीति विद्युदापादितभेदवत्त्वाद्वा विद्युद्भिन्नता घनं मेघमिव। देहेन शरीरेण एकम् ; एकशरीर-कमिति यावत् । देहेन दृढसंश्लिष्टमिति वा । तथाभूतं मिथुनं अपृथग्भूततया श्लिष्टदेहकं स्त्रीपुंसात्मकं द्वन्द्वमिव । अनेनार्धनारीश्वरग्रहणमुचितम् । तत्र पार्वत्याः श्यामत्वं शिवस्य च रक्तत्वम् । पृथग्भूतयो-रपि संश्लेषदशायामेकीभावस्थित्या लक्ष्मीनारायणात्मकं द्वन्द्वमपि गृह्येत । पूर्वमेव हरिरुक्त इति चेत्—सत्यम् ; तत्राम्बरविशिष्टत्वेनोक्त इह लक्ष्मीविशिष्टत्वेनोच्यते । रक्तश्यामयोः पूर्वं विशेषणविशे-ष्यतया पृथङ् निर्देशवदिह निर्देशाभावात् स्त्रिय एव रक्तवर्णत्वं वक्तव्यमिति न निर्बन्ध इति ज्ञाप्यत इति गौरीशिवग्रहणेऽपि न दोषः । रक्तश्यामवर्णस्त्रीपुरुषद्वन्द्वसामान्यं वा ग्राह्यम् । चकारेण सर्वोपमा-समुच्चयः । एवं पयोधिं द्रक्ष्यसि । तत्र विद्रुमाणां प्रवालानाम् अरण्यस्य वनस्य योगादेवमुपमेयत्वम् ॥

(२) लंघ्यमानः सागरः संसारत्वेन भाव्यते । तत्र हि सर्वं मधुविषमिश्रान्नमिव भोग्याभोग्यमयम् । दावासक्तं वनमिव अतीव तापदाहहेतुः । संध्यानुविद्धं नभ इव लुप्तप्रकाशम् अन्धकारप्रवेशप्रदम् , गज इव गौरवयितव्यमपि भयेनोपसर्पणीयम् ; क्वचित् क्वचित्पीताम्बरधरः स्रग्वीव सात्त्विकभोग्यमपि । विद्युतोऽशनिपाताद्यवसरे भयावहत्वेऽपि अन्यदा महदानुकूल्यमपि । सर्वथा संसारमण्डलमिदं देवमनुष्य स्थावरतिर्यक्तदवान्तरासंख्येयभेदभिन्नं तदुचितदेहग्रहणात् तद्द्वारा मिथुनात्मकमेव सत् रागद्वेष सुखदुःखवर्धकमेवेति विभावनीयं हंसेन विरक्तेनेति ॥ ५५ ॥

असत्पूर्वैः सुरपतिहृतं द्रष्टुकामैस्तुरङ्गं
भित्त्वा क्षोणीमगणितबलैः सागरो वर्धितात्मा ।
सत्कारार्थं तव यदि गिरीन् आदिशेद् गुप्तपक्षान्
अश्रान्तोऽपि प्रणयमुचितं नैव बन्धोर्विहन्याः ॥ ५६ ॥

एवं सागरं पश्यत एव गच्छतो हंसस्य, शरवत् वेगेनाविश्रान्तं गतेः प्रागुक्तत्वेऽपि, हनुमद्गमनकाले तद्विश्रमार्थं सागरप्रेरितमैनाकपर्वतसमागमं तन्मुखेन ज्ञातं स्मरन्, मध्ये श्रमपरिहारं मित्रचिकीर्षितमनुपेक्ष्यमाह **अस्मदिति**। सागरेण प्रेरितो गिरिः सागरादुद्गम्य हंसमुपचरेदिति संभावना। तत्र सागरः कस्मात् प्रेरयेत्; गिरिर्वा कथमचल उत्तिष्ठेत् इति शंकापरिहाराय **वर्धितात्मा** इत्यन्तं **गुप्तपक्षान्** इति चोक्तम्। समुद्रस्य सागर इति नामलाभः तस्य सगरपुत्रवर्धितत्वादेव। चरितमिदं तेन पदेनैव ज्ञाप्यत इति सूचनाय सागरपदप्रयोगः। सगरोऽश्वमेधेन ईजे। भूभ्रमणाय प्रेषितं यागाङ्गमश्वमिन्द्रो यागविघातधिया गूढं जहार। अश्वरक्षणार्थमनुगताः सगरपुत्राः केनापहृत इत्यविज्ञाय पातालेऽश्वान्वेषणाय भुवमखनन्। तेन समुद्रो विस्तृतो गभीरः सागर आसीत्। तदाह **अस्मदिति**। अस्माकं **पूर्वैः** कुले पूर्वपुरुषैः **अगणितबलैः** इयदित्यनिर्धारितदेहबलैः तुरगान्तिना इन्द्रेण द्रोहिणा हृतं गूढं नीतं पाताले तपोनिरतकपिलवासुदेवसविधे विसृष्टं तत एव तत्र पाताले स्थितं **तुरङ्गम्** अश्वमेधपशुकामैः **द्रष्टुकामैः** दृष्ट्वा समानेतुमिष्टवद्भिः। **पूर्वैरिति** विशेष्यम्। **क्षोणीं** भूमिं पातालं प्रति गमनार्थं **भित्त्वा**--भूभेदनात् **वर्धितः** लब्धविस्तारजलाधिक्यः **आत्मा** स्वरूपं यस्य सः, अत एव **सागर** इत्युच्यमानः समुद्रः, 'स्ववर्धकपुरुषवंश्योऽहम्, मत्सखस्त्वमित्यादरेण तव **सत्कारार्थं** संमाननाय, स्वस्मिन् पूर्वं इन्द्रकृतपक्षच्छेदकाले इन्द्राद्भिया सागरे विलीय स्थातुमागतान्, तदा 'इन्द्रद्विष्टजनवर्धितेन मया इन्द्रद्विष्टगिरिरक्षणं कार्यम्' इति मनसिकृत्य सागरेण रक्षितान्, अत एव **गुप्तपक्षान्** पक्षसहिततया स्थितान् **गिरीन्** मैनाकादीन् यदि आदिशेत्-- तदा बन्धोः **उचितं** युक्तं **प्रणयं** प्रार्थनाम् प्रेम च नैव विहन्याः। एवं हि मैनाकेन हनुमान् प्रार्थितः, "तदिदं गन्धवत् स्वादु कन्दमूलफलं बहु। तदास्वाद्य हरिश्रेष्ठ विश्रान्तोऽनुगमिष्यसि॥" इति। ननु हनुमतैव एकहेलया लंघितः समुद्रः; मम कः श्रमः इत्यत्राह **अश्रान्तोऽपीति**। श्रमाभावेऽपि बन्धुसत्कारमात्रमुद्दिश्य क्षणं स्थित्वा संतोष्य पुनः प्रस्थातव्यमिति॥

(2) आचार्यः शिष्यान् आदिशति, **अस्मत्पूर्वैः** अस्माकं गुरूणां **पूर्वैः** पूर्वाचार्यैः तथाऽस्मदादिभिश्च असंख्यैः तुरङ्गं त्वरया भगवत्प्राप्तिपरमुत्तमाधिकारिणं जगति द्रष्टुकामैः क्षोणी सर्वा भिन्ना। सर्वत्राटित्वा बहवो हितबोधनेन पामरत्वाद्व्यावृत्ताः कृताः। इयं शक्तिर्नूनमगणितबलत्वात्---'आशिष्ठो द्रढिष्ठो बलिष्ठः इत्यादिसर्वप्रकारबलवत्त्वात्। एतैः **वर्धितात्मा** परिपोषितात्मा **सागरः**--सागरोपमः **अगैः** निर्विषैः निर्दोषैः दिव्यमहिषीपरिजनैः सहितश्च श्रीमन्नारायणः **गुप्तपक्षान्**। **पक्षः**--आदरः। नियतनिक्षिप्तादरान् **गिरीन्** महतः त्वदीयजीवितदशायां सत्काराय स्वयमेव यद्यादिशेत्, तदा, "अप्रयत्नागताः सेव्याः गृहस्थैर्विषयाः सदा" इति न्यायेन तेषां बन्धूनां माननार्थं तेषां प्रार्थना पूरणीया। यतिश्चेत्, उपेक्षितुमर्हति; न गृहस्थः। को नामात्र विस्मयः। भवत्समुद्रोलंघनावसरे सर्वनिर्मुक्तं विरक्तमपि भृशसंतुष्टभगवत्प्रेरणया आतिवाहिकाः परिवारपरिवृत्ताः सोपहाराः सत्कुर्युः, तत्र न वैराग्यस्य परीक्षा। भगवत्संबन्धित्वेन सर्वमनुकूलत्वेन तदर्थत्वेनैव वेद्यते। तत्र गमनकाले श्रमलेशस्यापि प्रसक्त्यभावेऽपि तदीयाः

सत्काराः सर्वे समादरणीया भवन्तीति। एतेन, "कर्तव्यो महदाश्रयः" इति महोदारपुरुषोत्तमाश्रितानामप्रतीक्षितैवाभिवृद्धिः स्वयमुपनमतीत्युच्यते ॥ ५६ ॥

तत्राऽऽसीनः क्वचन सरसि स्मेरहेमारविन्दे
लब्धास्वादो मधुभिरमितैः संविनीताध्वखेदः।
द्रक्ष्यस्यग्रे लघुतरगतिः शेषमुल्लङ्घ्य सिन्धोः
तोयाघातान्मसृणितशिलारम्यवेलं सुवेलम् ॥ ५७ ॥

ननु गुप्तपक्षाः गिरयो बहवः प्रीत्या सत्कर्तुमभ्युद्गच्छन्ति चेत्—सर्वेषां प्रणयाहानाय मया किं कार्यम्। एवं हि सति महान् कालातिपातश्च स्यात्, लंघनीयांशस्य बहोः सत्त्वादिति प्रश्ने — पूर्वं हनुमत्सत्काराय मैनाक उत्थितः कार्यत्वरया तेन सांत्वेन प्रतिनिवर्तितः। अतस्तथैवेदानीमपि स्यादिति धिया कदाचित् सत्काराय मैनाको नोद्गच्छेत्-अथाप्यहमहमिकयोद्गन्तुं बहवः सन्तीति ज्ञापनाय गिरीन् इति बहुवचनं प्रयुक्तम्। तेष्वन्यतम एवाऽऽगच्छेत्। अनेकागमनेऽपि त्वयाऽन्यतमादेव सत्कारग्रहणं पर्याप्तम्। तत्रापि यत्र क्वचित् कोणे क्षणस्थितिरप्यलम्। विलम्बेऽपि अग्रे शेषलंघनमीषत्करमेव-इति बोधयितुमाह तत्रेति। तत्र सागरादिष्टेषु गिरिषु क्वचन तत्र नेदिष्टे यत्र कुत्रचित् स्मेरहेमारविन्दे विकसितस्वर्णसरोजसंपूर्णे सरसि तटाके अरविन्दोपरि आसीनः लब्धास्वादः तद्रसप्रीतिपानकृत्। हनूमान् कन्दमूलफलाशनं गिरिणा प्रार्थितः। त्वया त्वद्रुचिर आहारो ग्राह्य इति भावः। अमितैः एकैकस्याप्यरविन्दस्य रससरोनिधित्वात् अपेक्षिताधिकैः स्वादिमातिशयात् सादरपीतैः मधुभिः मकरन्दैः संविनीतः सम्यग्विशेषेणापनीतः अध्वखेदः मार्गश्रमो यस्य। प्रागेव मार्गश्रमोऽपनीतः; ततः स्वल्पः पुनर्जातोऽप्यपनीयेत तत्र। अधिकमधुग्रहणात् पुनः श्रमो नोदियादपि। परंतु अधिकपानादेव गमनश्रमो भवेदिति तर्कणीयम्। क्षणं तत्रैव स्थित्वा प्रस्थानयोग्यं शरीरं कृत्वा प्रतिष्ठस्व। अथवा यथाशक्ति लघुतरगतिर्भूयाः। तदापि न हानिरिति। एवं लघुतरगतिः — मार्गस्य शिष्टस्य स्वल्पत्वात् अत्वरितगतिः। समुद्रलंघनं ते ईषत्करमिति पूर्वमेव त्वं लघुगतिः; इदानीं लघुतरगमनः। अतिशयेन लघुः लघुतरः। ततश्चापि लघुतरा। तादृशी गतिः गमनं यस्य सः। सिंधोः सागरस्य शेषं शिष्टं गन्तव्यमार्गम् उल्लंघ्य विहायसैव लंघयित्वा अग्रे पुरस्तात् सुवेलं तन्नामकंशैलं द्रक्ष्यसि। कथम्भूतम्। सिंधोरस्य तोयैः वेगोत्थापितवीचीसंततिसलिलैः कृतात् आघातात् उपर्युपरि अनवरताभिघातात् मसृणाः अदन्तुराः स्निग्धाः कृताः शिलाः उपत्यकाप्रस्तराः ताभिः रम्या रमणीया वेला सागरतीरं यस्य सः तम्। केवलपर्वतोपत्यकाप्रदेश एव दीर्घो विशालश्च तत्र वेलारूपेण स्थित इति भावः। अत एव तस्य सुवेल इति नाम। तवापि तत्र गमनवेला हनुमत इव शोभना भविष्यति ॥

(२) तिमितिमिङ्गिलमकरादितिर्यग्भूयिष्ठे लवणालये स्वादुतत्त्वस्वादकारी सुदुर्लभः। तत्र स्थावरोऽपि कश्चित् विवेकी स्वयमपि स्वादुभिः सत्करोतीति नूनं सितपक्षपात्यभिमानिभगवत्कृपायत्तमेतत्। आचार्यः

क्रिमिकीटपशुपक्ष्यादिशरीरान्तस्स्थिताः जीवात्मानो न बोधयितुमर्हा इति तान् विसृज्य तत् स्थलं गच्छेत्, यत्र वेलानतिक्रमः सुवेल(सन्मर्याद)जनसद्भावः; हृदयादौ दन्तुरत्वं नास्ति ; स्निग्धता च लक्ष्यते। उच्चावचतापत्रयाभिघातात् चित्तं संसारविरक्तं सद्विषये लब्धप्रवृत्तिकञ्च यदि, तद्वान् हि जीवः आचार्येणानुग्राह्यः स्यात्। एवंभूतो लंकायां देहतुल्यायां सीतारूपो जीवः हंसतुल्याचार्यसमाश्वासितो भविष्यतीति ॥५७॥

**यस्यासन्ने पयसि जलधेः स्वत्प्रतिच्छन्दचन्द्राः**
**पक्षच्छेदक्षरितरुधिरस्तोमसंदर्शनीयाः ।**
**वीचीप्राप्तैर्विषमितरुचो मौक्तिकैस्तारकाभैः**
**सन्ध्यामन्यां नियतमवनौ दर्शयन्ति प्रवालाः ॥ ५८ ॥**

सुवेलगताः प्रवालाः त्वद्गमनात् प्राक् अचन्द्रसंध्यावत् स्थिताः त्वदीयस्थितिकालं यावत् सचन्द्रसन्ध्यावत् भासिष्यन्त इत्याह **यस्येति**। यस्य सुवेलस्य **आसन्ने** संनिकृष्टे **जलधेः पयसि** समुद्रजले **स्वत्प्रतिच्छन्दः** त्वत्प्रतिबिम्बमेव चन्द्रो येषां ते। चन्द्रतुल्यत्वत्प्रतिबिम्बशालिपयोधिजलसंपृक्ता इति यावत्। यस्य सुवेलस्य **पक्षयोः** गरुतोः पुरा सर्वपर्वतपक्षच्छेदकाले गोत्रभिदा छेदात् क्षरितानां **रुधिराणाम्** असृजां **स्तोमाः** घनीभूतराशय इव संदर्शनीयाः। रक्तवर्णा इति यावत्। सन्ध्यात्वसाधकं चन्द्रवत्त्वं रक्तत्वञ्चोक्तम्। नक्षत्रवैशिष्ट्यमप्याह वीचीति। **तारकाणां** नक्षत्राणाम् आभेव आभा येषां तैः, **वीचीतः**— तरङ्गमुखेन **प्राप्तैः** समागतैः **मौक्तिकैः** मुक्ताभिः **विषमितरुचः** वर्णान्तरसंबन्धं प्रापितस्वकान्तयः **प्रवालाः**— गिरिच्छेदकाले गिरीणां पक्षरुधिराणां विद्रुमरूपेण परिणतिरासीदिति **स्कान्दे** रत्नपरीक्षाध्याये उक्तत्वात् तथा जाताः, प्रकारान्तरेण जाताश्च, समुद्रत उत्पन्नाश्च विद्रुमाः सर्वे सर्वतो व्याप्ताः अवनौ भूमौ अन्यां **सन्ध्यां** संध्यासमयपरिस्थितिं **नियतं** त्वत्स्थितिपर्यन्तं सर्वदा दर्शयिष्यन्ति। प्रवालाः संध्येव दृश्येरन्। प्रसिद्धा संध्या गगने स्थिता, इयमवनौ। तस्मादन्या। त्वद्गमनात् प्राक् अचन्द्रसंध्या संप्रति त्वया सचन्द्रसंध्येति च तदन्या। समुद्रवीचीसमानीतानि मौक्तिकजालानि नक्षत्रवत् भासेरन्। तदपि संध्यात्वसाधकम्। एकान्तरितश्लोके अस्य हंसस्य राजहंसीलाभो वक्ष्यते। तया सह विहारानुकूलः संध्याकाल इह दर्शितः। भोगोपकरणपुष्पादिलाभमनन्तरश्लोके वक्ष्यति। **आसन्ने** इत्येतदपेक्षया पक्षेत्यत्र यस्येत्यस्यान्वय आवश्यकः। आसन्नत्वं तु सुवेलं प्रत्यपि स्यात्; प्रवालान् प्रत्यपि; हंसं प्रत्यपि। **नियतमि**त्यनेन—सा संध्या कतिपयनाडीमात्रस्थायिनी, इयं बहुकालम्, परंतु हंसस्थितिकाले सर्वदेति विवक्षितम् ॥ ५८ ॥

**यत्रारण्यं वरुणवसतेर्वीचिवेगापनीतैः**
**मुक्तारत्नस्तबकशबलैर्विद्रुमैरुत्प्रवालम् ।**
**रक्षोभीतैः स्वयमनिमिषैराहृतस्थापितानां**
**मन्दाराणां मधुपरिमलैर्वासितं मौलिदघ्नैः ॥ ५९ ॥**

"तां रात्रिमुषितास्तत्र सुवेले हरिपुंगवाः । लंकायां (याः ?) ददृशुर्वीराः वनान्युपवनानि च ॥.... तच्चैत्ररथसंकाशं मनोज्ञं नन्दनोपमम् । वनं सर्वर्तुकं रम्यं शुशुभे षट्पदायुतम्" इति वर्णितमरण्यं प्रस्तौति **यत्रे**ति । सुवेलगतस्यास्यारण्यस्य स्वभावतः किसलयप्रसूनपरिमलसंभृतत्ववत् प्रकारान्तरेणापि तत्संपत्तिमाह श्लोके । **यत्र सुवेले अरण्यं** काननम् , **वरुणस्य वसतिः** वासस्थानं समुद्रः तस्य **वीचीनां** तरङ्गाणां वेगेन उपरि **अपनीतैः** प्रक्षिप्तैः **मुक्तारत्नस्तबकशबलैः-मुक्तानां** मौक्तिकानाम् , **रत्नानां** अश्मजातीनां च **स्तबकाः** गुच्छाः राशयः तैः **शबलैः** चित्रवर्णैः **विद्रुमैः** प्रवालैः । रत्नत्वजातेः मुक्तासाधारण्यात् सामान्यविशेषपदयोर्द्वन्द्वो न भवतीति सुदूरमुपपाद्य, मुक्ताभूतानि रत्नानीति वा मुक्तासु **रत्नानि** श्रेष्ठानीति वाऽर्थः स्थापितो **रसास्वादिन्याम्** । वादशब्दस्य वादजल्पवितण्डेति प्रयोगात् , **प्राणशब्दस्य** च प्राणापानव्यानेति प्रयोगात् विशेषेऽपि रूढिवत् प्रायिकव्यवहारमनुसृत्य अश्मजातिमात्रे रूढिरप्यस्तीति सुवचम् । किञ्च **गोबलीवर्द**मित्यादिप्रयोगे सामान्यवाचिपदेन पूर्वं प्रयुक्तेन बलीवर्दस्यापि क्रोडीकारात् भेदाभावान्न द्वन्द्वः । **मुक्तारत्ने**त्यादौ तु प्रथमतो विशेषवाचकपदप्रयोगे चरमश्रुतं रत्नपदं तद्भिन्नपरमेव भविष्यतीति द्वन्द्वो युज्यते । लक्षणया भेदविवक्षायामपि प्रयोगो नोचित इति कथनेन बहुप्रयोगासाधुत्व कल्पनापेक्षया व्याकरणवाक्यस्यान्यादृशतात्पर्यवर्णनमेव युक्तम् । गोबलीवर्दसमासविचारावसरे, "गाव उत्कालितपुंस्काः वाहाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते" इति भाष्यं विचार्यार्थम् । पुमान् स्त्रियेत्येकशेषेण गोपदं स्त्रीपुरुषोभयपरम् अनुत्कालितपुंस्कभिन्नत्वेन रूपेणेत्यप्याशयः स्यात् । स्त्रीलिंग गोशब्दग्रहणे तु सर्वोऽयं वृथाविस्तरः स्यात् । **तृणोलप**मित्यत्र मीमांसकादिप्रसिद्धतृणविशेषरूपवक्तृविवक्षितोलपराजिरूपार्थत्यागेन जलवाचित्वकथनमपि साहसम् । आस्तामेतत् । अस्तु वा मुक्ताशब्दस्य रत्नस्तबकशब्दस्य च द्वन्द्वः। एवम्भूतैः विद्रुमैः **उत्प्रवालम्** उद्भिन्नकिसलयम् । "वीणादण्डे प्रवालोऽस्त्री विद्रुमे नवपल्लवे" इति कोशात् किसलयार्थकता । अरण्ये सागरनीतरत्नानि किसलयवद् भासन्त इत्युक्तं भवति । तदरण्यानुरूपत्वैः पुष्पैरपि तस्य वासितत्वमाह **रक्ष** इति । **रक्षांसि** राक्षसाः तेभ्यो **भीतैः अनिमिषैः** देवैः रक्षोर्थे पूर्वमाहृतानां पश्चात् स्थापितानां मन्दाराख्यनन्दनवनस्थकल्पवृक्षकुसुमानां **मधुभिः** मकरन्दैः **परिमलैः** गन्धैश्च **मौलिदघ्नैः** रक्षश्शिखाकुन्तलभारप्रमाणकैः। मौलिः प्रमाणं येषां ते **मौलिदघ्नाः** । संपूर्णमौल्याच्छादकैरिति यावत् । मकरन्दपरिमलयोस्तावदवस्थायित्वम् । परिमलमात्रं तु अन्यत्रापि व्याप्नुयात् । **वासितं** गन्धविशिष्टं च कृतं भवति **अरण्य**मिति । रक्षोभूयिष्ठमपि स्थलमेवं तव सुखकरमेव भविष्यतीत्याशयः ॥ ५९ ॥

**तस्मिन् दृश्या तदनु (भवति) भवतश्चारुसौधावदाता**
**लङ्का सिन्धोर्महति पुलिने राजहंसीव लीना ।**
**त्वामायान्तं पवनतरलैर्या पताकापदेशैः**
**पक्षैरभ्युज्जिगमिषुरिव स्थास्यति श्राव्यनादा ॥ ६० ॥**

इति कवितार्किकसिंह......श्रीमद्वेदान्ताचार्यकृतौ हंससंदेशे प्रथम आश्वासः ॥

एवं सुवेलशैलतदरण्यप्राप्तिं कर्तव्यां ज्ञापयित्वा लंकानगरीं तत्रत्यां प्राप्तव्यामाह **तस्मिन्निति**। **यस्य, यत्रेत्यारब्धश्लोकद्वयस्य** तत्पूर्वश्लोकेनैकवाक्यतया, तत्तद्विशेषविशिष्टं सुवेलं द्रक्ष्यसीत्युक्तं भवति। अतः **तदनु** इत्यस्येदृशसुवेलदर्शनानन्तरमित्यर्थः। **तदनु** इत्येतत्स्थाने **भवतीति** पाठे तु अक्लिष्टोऽर्थः। लंकागतवनोपवनप्रवेशो वानरैः कैश्चित् कृतः, अन्यैश्च लंका जिगमितेति तत्रैवोक्तम्, "अन्ये तु हरिवीराणां यूथान्निष्क्रम्य यूथपाः। सुग्रीवेणाभ्यनुज्ञाता लंकां जग्मुः पताकिनीम्" इति। लंका चेयं त्रिकूटशिखरस्थितेति स्पष्टमुक्तम्। "ततो रामः सुवेलाग्रं योजनद्वयमण्डलम्। आरुरोह ससुग्रीवः हरियूथपसंवृतः। स्थित्वा मुहूर्तं तत्रैव दिशो दश विलोकयन्। त्रिकूटशिखरे रम्ये निर्मितां विश्वकर्मणा। ददर्श लंकाम्" इति। अथ च (४१), "क्षिप्रमद्य दुराधर्षां लंकां रावणपालिताम्। अभियाम जवेनैव सर्वतो हरियूथपाः॥ इत्येवं स वदन् वीरो लक्ष्मणं लक्ष्मणाग्रजः। तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः" इति लंकाविशदविलोकनार्थं सुवेलशृंगमारूढानां ततोऽवतरणं त्रिकूटशिखरस्थलंकाभियानाय कृतमुक्तम्। उत्तरकाण्डे च, "दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः। सुवेल इति चाप्यन्यो द्वितीयस्तत्र सत्तम" इति त्रिकूटसुवेलयोर्भेदः स्पष्टमेवोक्तः। सागरं लंघितवता हनुमता साक्षात् त्रिकूट एवावरोहणं कृतमिति ज्ञायते। सेतुश्च बद्धः सुवेलं यावदिति स्पष्टम्। अतः सागरनेदिष्ठः सुवेलः; तमपि प्राकारीकृत्येव तदनन्तरस्थितस्त्रिकूटः। सागरादेवाऽऽपाततो दृश्यमाना च लंकाऽऽसीत्। एवञ्च सुवेलत्रिकूटान्तरालगतं तदुभयव्यापि अरण्यमिह विवक्षितम्, तेनारण्येन सह त्रिकूटे लंकेति च। अतः, 'सिन्धोर्महति पुलिने' इति पुलिनत्वेनाध्यवसितो गिरिर्न सुवेलः, किं तु त्रिकूट इति ग्राह्यम्। अस्तु वा कृत्स्नं लंकाद्वीपं पुलिनत्वेनाध्यवस्यतीति। अत्र त्रिकूटस्य पूर्वमप्रस्तुतत्वात् **तस्मिन्** इति सुवेलग्रहणात्, तत्र लंकायाः स्थित्यभावेन तस्य पुलिनत्वायोगात् तस्मिन् **स्थितस्येति** षष्ठ्यन्तं भवत इत्येतद्विशेषणमध्याहर्तव्यमिति रसास्वादिन्यामुक्तम्। प्रस्तुतसुवेलतदरण्यादिघटितद्वीपात्मकसमुदायस्य **तस्मिन्नित्यनेन** ग्रहणसंभवे तु पुलिनविशेषणमेव **तस्मिन्निति** भवति। वनोपवनात्मकारण्यस्य लंकामभिव्याप्य स्थिततया **तस्मिन्निति** पूर्णद्वीपस्य, अरण्यस्य वा ग्रहणसंभवात्। **रसास्वादिन्याशयस्तु** यथा सुवेलमारूढाः रामादयो लंकां ददृशुरित्युक्तम्, तथा हंसेनापि सुवेलस्थितेन सा दृश्या भवत्विति। पक्षित्वादस्य गगने स्थितिकाल एव लंका दृश्या भवतीति लंकावस्थानभूमिप्रदर्शनमेवात्र चिकीर्षितम्। **महतीति** विशेषणमपि अरण्यस्य पूर्णव्यापित्वज्ञापनेन लंकायास्तन्मध्यवर्तित्वं सूचयति। महति-सत्रिकूटे तस्मिन्नरण्ये लीना लंका पुलिने लीना राजहंसीव भवतो दृश्येत्यन्वयः। **लीनेति** पदमपि तदन्तर्भावाशयेनैव। **भवतेति** तृतीयान्तप्रयोगे द्रष्टव्यत्वविधिरिति प्रतीयेत। न तद्विवक्षाऽत्र। राजहंसीवत् भोग्यत्वेन द्रष्टुमर्हत्येव विवक्षितमिति तदप्रयोगः। 'राक्षसीं राजधानीं प्रविशतो मे किं भविष्यति' इति न भवता शंकितव्यम्। तत्रतत्र मार्गे लब्धेभ्यो भोगेभ्योऽतिशयितो भोगो भवतः संपत्स्यते। मध्येमार्गं हि महानद्यो बहवस्ते भोगान् विविधान् अर्पयामासुः। राजहंसस्य ते राजहंस्यां सजातीयायामेव हि रागाधिक्यम्, तस्याश्च त्वयि। अतः अत्रत्यपद्मिन्यपेक्ष-

याऽपि तत्र भोगाधिक्यं भाव्यम् । न च सा राजहंसी त्वयि रागरहिता । बहोः कालात् भवत्प्रतीक्षैव तया क्रियत इत्यवगमादित्याह त्वामिति । लंकायां तत्रतत्र निबद्धानां ध्वजानां याः पताकाः । ता न पताकाः ; तथा व्याजोक्तिः ; किं तु राजहंसीपक्षा एव ते । सा प्रत्युद्गम्य त्वां सोपचारं ग्रहीतुं प्रस्थिता पक्षान् उद्धुनोति । डयनप्रारम्भे पक्षोद्धूननं पक्षिणां सहजम् ; वाताधीनचाञ्चल्यशालिपताकारूपपक्षोद्धूननपूर्वकोज्जिगमिषा च तस्याः त्वामभ्युद्गन्तुमेवेति । श्राव्यनादा च सा । "क्रौञ्चबर्हिणसंघुष्टैः राजहंसनिषेवितैः । तूर्याभरणनिर्घोषैः सर्वतः प्रतिनादिताम्" तां स्वागतव्याहारात्मकभव्यनादयुक्तां राजहंसीमेव मन्यते रामः। तत्रैव, "खमिवोत्पतितां लंकाम्", "कैलासशिखरप्रख्यामालिखन्तीमिवाम्बरम् । डीयमानामिवाऽऽकाशमुच्छ्रितैर्भवनोत्तमैः" इति उत्पतनडयनोल्लेखनात् तदनुसृत्य डयमानराजहंसीत्वोपमानं प्रकृतानुगुण्येनाऽऽदृतम् ॥

एवं प्रस्थितस्य हंसस्य सर्वत्र सुखसञ्चारः मुख्यगन्तव्यस्थलेऽप्यप्रतीक्षिताद्भुतस्वागतपूर्वकसमाह्वानाधीनमहानन्दलाभश्चादर्शि । तदेवं गन्तव्यप्राप्त्यर्थपथप्रतिबोधनेन प्रथमाश्वासपूर्तिः । अथ द्वितीयेन संदेष्टव्येष्टवस्तुदर्शनसंदेशनादिकं वर्तयिष्यते ॥ ६० ॥

इति हंससंदेशव्याख्याने संजीवनाख्ये प्रथम आश्वासः ॥

—o—o—

॥ अथ द्वितीयाश्वासः ॥

(61) लीलाखेलं ललितगमनाश्चारुनादं सशिञ्जाः
भल्लाक्षं त्वां स्मरशरदृशो गौरमापाण्डुराङ्ग्यः) ।
मुग्धालापं मधुरवचसो मानसार्हं मनोज्ञाः
यत्रानीताः सुरयुवतयो रञ्जयेयुः समक्षम् ॥ १ ॥

अथ लंकां प्राप्तेन हंसेन सीतायै वक्तव्यं संदेशं तं वेदयितुं प्रवृत्तेन रामेण तदावासस्थलमावेदनीयम्। तच्छेषतया तां लंकामेव पञ्चभिर्वर्णयति । चतुर्षु श्लोकेषु नगरीवाचकयच्छब्दश्रवणात् श्लोकचतुष्कस्य पूर्वाश्वासान्तिमश्लोकेनैकवाक्यता । वाक्यैकवाक्यताया आश्वासभेदेऽपि संभवात् । तत्र प्रथमं सुरस्त्रीसंघरञ्जितत्वं हंसस्य भावीति वर्ण्यते । मेघसंदेशे द्वितीयारम्भे कैलासप्रासादानां मेघसाम्यं वर्णितम् । तेन, 'सर्वः सगन्धेषु विश्वसिति' इति न्यायेन मेघस्य कैलासे मनो लग्नं भवितुमर्हतीति कामुको मन्यत इति कवेराशयः। तद्वदत्रापि चेतनं हंसं तत्साम्यापन्नाश्चेतनाः बुद्धिपूर्वकं वा दृष्टिगोचरत्वमात्रेण वा रञ्जयिष्यन्तीत्युच्यते । तत्र प्राक् राजहंस्याः प्रसक्तत्वात्, 'राजहंस्या इव तत्र सुरस्त्रीणां हंससाम्यपौष्कल्यात् तत्स्वीकृतं रञ्जनमेव लंकारूपराजहंसीरञ्जनं भाव्यम्, नगरीगतं रञ्जकत्वं हि तत्रत्यप्रजागतं रञ्जकत्वमेव' इति विमृश्य तदनुरूपं वर्ण्यते । सुरस्त्रीणां हंसरञ्जकतया स्थितिश्च स्वाभाविकैराकारैरिव, स्वानुकूलाऽऽचरणाय समागते तत्र स्वयं तदज्ञानेऽपि दैवकृतात् अव्याजस्नेहादपि भवितुमर्हति । तत्र साम्यभूयस्त्वात् तं साम्याकारं हंसगतं स्त्रीगतञ्च सुखग्रहणाय प्रत्येकं मेलयन् व्युत्पादयति लीलाखेलमिति । सर्वं द्विती-

यान्तं हंसविशेषणम् ; प्रथमान्तं स्त्रीणाम् । लीलया **खेलः** संचरन् त्वं भविष्यसि तत्र । ताः स्त्रियोऽपि स्वभावतो **ललितगमनाः** सविलासमनोहरगतयः। तव नादः **चारुः** मधुरः। ताश्च गतिकाले मञ्जीरशिञ्जा-विशिष्टाः । तव ध्वनिरिव खलु स्त्रीणां नूपुरध्वनिः । तव **भल्लाक्ष** इति नाम ; भल्लायुधसमानलोचन-त्वात् । ता अपि किञ्चिदायुधसमानलोचनाः । तल्लोचनगतसादृश्यनिरूपकं सरसिजं हि **स्मरस्य शरो** बाणो भवति । स्मरस्य शरा इव **दृशः** नेत्राणि यासां ताः । त्वं **गौरः** धवलवर्णः । ता अपि तथा । तवाऽऽ**लापः** व्याहारः **मुग्धः** अव्यक्तमधुरः । पूर्वं ध्वनिमात्रमुक्तम् ; इदानीं वर्णरचना विवक्षिता । ताश्च मधुस्यन्दिव्याहाराः । त्वं मानसस्यार्हः । न केवलं मानससरसि वर्तमानत्वात्, किंतु मनःप्रिय-त्वादपि । ता अपि **मनोज्ञाः**, न केवलं रमणीयत्वात् मनसि ज्ञा = ज्ञानं यासां ता इति मानसगत-प्रीतिरूपापन्नज्ञानविषयत्वरूपात् ; किंतु परमनोविषयकज्ञानाश्रयत्वात् पराभिप्रायवेदनसामर्थ्यरूपा-दपि ; तादृश्यः **सुरयुवतयः** । कथं लंकायां सुरस्त्रिय इति चेत् —रावणेनाऽऽनीतत्वात् । **समक्षं** सर्वेषां पुरस्तात् यत्र त्वां रञ्जयेयुः। स्त्रीणां ते च मिथो दर्शनेन मनो रज्यतीत्येतावदेव न ; पश्यन्तस्तत्रा-नुकूलाः प्रतिकूला वा सर्वे सानन्दं साम्यं समीक्षिष्यन्त इति भावः । मया प्रेषितस्त्वं सीतासंदेशहारीति न कश्चित् तत्र ज्ञास्यति । प्रीतिपूर्वकं प्रेक्षिष्यन्ते । सुरस्त्रीष्विव त्वय्यपि रावणो रज्येत् । अतो **महद-नुकूलमिति** । **समक्षमित्यस्य** हंसविशेषणत्वकथनं क्लिष्टम् । स्वाक्षितुल्यतया त्वां रञ्जयेयुरित्यर्थेऽपि न स्वारस्यमस्ति । अतः पूर्वोक्त उचितोऽर्थः। यत्र रञ्जयेयुः, सा लंका दृश्येति पूर्वश्लोकेनान्वयः ॥१॥ (61)

(62) **उग्रैः शापैरुपहतिभिया रक्षसा दूरमुक्ताः**
**दग्धुं योग्या हुतवहमपि त्वत्प्रियावर्णशुद्धाः ।**
**उत्पश्यन्तो जनकतनयातेजसैव स्वरक्षां**
**रोधं यस्यामनुविदधते लोकपालावरोधाः ॥ २ ॥**

सुरस्त्रियः आनीता इत्युक्तम् । न केवलं दुष्टैः राक्षसान्तरैः सामान्यस्त्रियः आनीताः ; किंतु रावणेनैव आनीताः ; साक्षात् दिक्पालदेव्य एव चेत्याह **उग्रैरिति** । एवमानीतानामपि पातिव्रत्यभंगस्तेन न कर्तुं शक्य आसीदिति प्रथमविशेषणेनाऽऽह । यद्यपि स्त्रीर्दृष्टाः स्वाभीष्टाः सर्वाः स्वपुरं निनाय, अथापि बलात्कारेण ताभिः संश्लेषं न चकार । कस्मात् । चतुर्मुखादिभिः कृतैः **उग्रैः** भयङ्करैः **शापैः** स्वविषयैः । हेतौ तृतीया । स्वयंप्राप्तानेकोग्रशापत्वादिति यावत् । **उपहतिभिया**–स्वस्य नाशो भवेदिति भयेन रक्षसा तच्छापनिवारणानुगुणशक्त्यभावात् नपुंसकप्रायेण रावणेन नपुंसकेनेव दूरं मुक्ताः भोगार्थस्पर्शकेलिपरि-रम्भादिविषयतामप्यनासादिताः । शापाश्चैवं सन्ति वर्णिताः—रावणः स्वयमेवाऽऽह ब्रह्मकृतं शापम्, "पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थालाम् । चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव । सा प्रसह्य मया भुक्ता कृता विवसना ततः ।....अथ संकुपितो देवो मामिदं वाक्यमब्रवीत् । अद्यप्रभृति यामन्यां बला-त्कारीं गमिष्यसि । तदा ते शतधा मूर्धा फलिष्यति न संशयः" इति । एवम्, 'उमा नन्दीश्वरश्चापि

रम्भा वरुणकन्यका' इति नानाशापा निर्दिष्टाः । (उ. २६) 'सर्वाप्सरोवरा रम्भा दिव्यपुष्पविभूषिता, सैन्यमध्येन गच्छन्ती रावणेनोपलक्षिता, नलकूबरस्य कृतसंकेता गच्छतीति विज्ञायैव बलात् तेन भुक्ता विमुक्ता भ्रष्टमाल्यविभूषणा नलकूबराय वृत्तं निवेदितवती यदा, तदैव सः, "गृहीत्वा सलिलं सर्वमुपस्पृश्य यथाविधि । उत्ससर्ज यथा शापं राक्षसेन्द्राय दारुणम् । यदा ह्यकामां कामार्तो धर्षयिष्यति योषितम् । मूर्धा तु सप्तधा तस्य शकलीभविता तदा" इति । (२५)कदाचिच्च, "निवर्तमानः संहृष्टो रावणो वरुणालयात् । जह्रे पथि नरेन्द्रर्षिदेवगन्धर्वकन्यकाः ॥ एवं पन्नगकन्याश्च राक्षसासुरमानुषीः । यक्षदानवकन्याश्च विमाने सोऽध्यरोपयत् । दुःखशोकसमाविष्टा विलेपुः सहिताः स्त्रियः । इदं त्वसदृशं कर्म परदाराभिमर्शनम् ॥ यस्मादेष परक्यासु रमते राक्षसाधमः । तस्माद्वै स्त्रीकृतेनैव प्राप्स्यते दुर्मतिर्वधम् ॥ सतीभिर्वरनारीभिरेवं वाक्येऽभ्युदीरिते । नेदुर्दुन्दुभयः खस्थाः पुष्पवृष्टिः पपात च ॥ शप्तः स्त्रीभिः स तु समं हतौजा इव निष्प्रभः" इति । एवमुग्रैश्शापैरिति शापबहुत्वं सिद्धम् । 'शप्तोऽहं वेदवत्या च' इत्युक्तो वेदवतीशापस्तु नाऽऽक्रोशवचनम्; किं तु शपथः, 'शापे त्वयि मयोत्सृष्टे तपसश्च व्ययो भवेत्' इति तयैवोक्तत्वात् । "तस्मात् तव वधार्थं वै समुत्पत्स्ये त्वहं पुनः" इति प्रतिज्ञैव तया कृता । नन्दीश्वरशापस्तु यथावत् । उक्तं हि, "यस्मात् वानररूपं मामवज्ञाय दशानन । अशनीपातसंकाशमुपहासं प्रमुक्तवान् ॥ तस्मान्मद्रूपसंपन्ना मद्वीर्यसमतेजसः । उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः ॥" इति । नन्दीश्वरशापस्य साक्षात् स्त्रीसंश्लेषनिरोधकत्वाभावेऽपि यत्किञ्चित्स्त्रीसंश्लेषोऽपि प्रबलवानरमूलकस्वपुत्रादिरूपकुलध्वंसहेतुर्भवेदिति भीतिहेतुत्वं भवत्येव । ननु चतुर्मुखनलकूबरशापयोर्मूर्धभेदनरूपैकफलकत्वात् एकतरशापे सति कथमन्यां स बलादुपभुज्य मूर्धभेदमप्राप्त एवाऽऽसीदिति चेत्—रम्भाधर्षणं तयैव साक्षात् तदैव नलकूबरायोक्तमिति तदीयः शापस्तदैव जातः । चतुर्मुखेन तु पुञ्जिकस्थलया साक्षादनुक्तत्वात् कालक्रमेण ज्ञात्वा विलम्बेन रम्भाधर्षणानन्तरमेव स्वयमपि शापः कृत इति, "तच्च तस्य तदा मन्ये ज्ञातमासीन्महात्मनः" इति वाक्यशैल्यैव ज्ञायते । तदेति शब्दोऽपि तद्धर्षणे निर्वृत्ते इत्येतावत्परं न तत्क्षणग्राहकम् । न केवलमिदम्; 'मामिदं वाक्यमब्रवीत्', 'गमिष्यसि', 'ते शतधा मूर्धा' इति प्रयोगबलात् अतिविलम्बेन रावणदर्शनावसरे ब्रह्मशाप इति च ज्ञायते । क्रोधोत्पीडेन सः, न नलकूबरोक्तरीत्या सप्तधैव, शतधाऽपि भिद्येतेति शशापेति च ।

एवमानयनप्रयोजनाभावे किमिति सर्वा एवं निनायेति चेत्—प्रलोभने स्वैश्वर्यदर्शनेन स्वयमेव ताः कामयेयुः । ततो भोगो न हानये इत्याशयेन । स्वैश्वर्यं सुविस्तृतं हि स वर्णयामास सीतायै । ईदृशशापाभावेऽपि तस्य दुराक्रमणमिमाः स्त्रियः किञ्चिदवधिकमेव सहेरन्, तपसो व्ययो मा भूदिति । बलात्कारप्रसक्तौ तु स्वयमेव स्वात्मानं रक्षेयुरिति तासां प्रभावं प्रकटयति दग्धुमिति । सर्वदाही हुतवहोऽपि दह्येत, आसां पातिव्रत्यतेजः उपयोक्तुं मनीषा जायेत चेत्—"अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति" इत्युक्तं सीताया इव तासामप्यविशिष्टमिति भावः । दग्धुं योग्याः दहनसमर्थाः, तथापि

तत्राप्रवृत्ताः ॥ कुतो नोपयोजयन्ति । परपुरुषस्पर्शादिरपि दोष इति तदुपयोजनमेव हि ज्याय इत्यत्राह **त्वत्प्रियावर्णशुद्धा** इति । तव **प्रियायाः** हंस्याः वर्णवत् **शुद्धाः**—धवलाः शुद्धिमन्तः । पापिनां पापानुरूपं मालिन्यं शरीरेऽपि प्राक्काले दृश्यमासीत् । अन्ततः सूक्ष्मदर्शिनां वा तत् व्यक्तम् । अत एवार्जुने मालिन्यमभिलक्ष्य कानिचन पापानि निर्दिश्य एतेषु किं त्वया कृतमिति प्रश्ने तेन प्रत्युक्तम्, "नेदं पापाचरणात्, किंतु कृष्णवियोगात्" इति (वि.पु.) । तदत्रोच्यते । यतस्ताः स्त्रियः त्वत्प्रियाधावल्यं स्वदेहे बिभ्रति । अतो न तासां पापमिति मन्यस्व । क्षीरनीरविवेकिना हि त्वया सुदर्शमेतत् । कामनाया ईषदप्यभावे परपुरुषहठकारितः स्पर्शो न दोषमावहति । मुख्यभोगत्वेन परिगणितकतिपयांशाभावे कामविकारहेतुनर्मस्पर्शाद्यभावे च तदा न दोषः । कामकणिकासक्तौ तु भाषणविलोकनादिकमप्यवद्यवहमेव । रक्षणसमर्थपत्यादिना नाथवतीनां तपोरक्षणोद्देशेन तदंशसहनं शास्त्रानुमतमिति ताः स्त्रियः तूष्णीकाः त्वत्प्रियावत् बहिर्वर्णपर्यन्तपूर्णशुद्धिसंपन्ना इति । तत्तन्नाथानामशक्तत्वस्य सुनिश्चितत्वात् कथं मर्षणमित्यत्राह **उत्पश्यन्त** इति । दिक्पालस्त्रियो हि ताः । ता जानन्त्येव सीतामुखेन समाधानं भविष्यतीति । सीताहरणं निरीक्ष्य चारण्ये विष्णुपदस्थितैः ब्रह्मादिभिः, 'प्रतीक्षितं निर्वृतम्' इति परितुष्टम् । तत् एतदाशयेनैव । **जनकतनयातेजसा**, स्वतेजोविनियोगं विना स्वरक्षाम् देवावरोधा उत्पश्यन्ति । तदिदं हनुमन्मुखादिनाऽवगतं मन्तव्यम् । ननु साऽपि, "न त्वा कुर्मि दशग्रीव ! भस्म भस्मार्हतेजसा" इति तेजोऽनुपयोज्य तूष्णीमास्ते । तत्र कथमेवमुद्दर्शनमिति चेत् — नेदं तेजः तत्पातिव्रत्यात्मकम्; किंतु "अप्रमेयं हि तत् तेजो यस्य सा जनकात्मजा" इत्युक्तं रामाख्यमद्रूपं तेजः । सा च, "शरैस्तु संकुलां कृत्वा लंकाम्" इति संदिदेश हि । किञ्च शापेषु अनरण्येन सूर्यवंशजेन रावणपरिभूतेन, 'मद्वंशे जनित्वा महापुरुषस्त्वां हनिष्यति' इति कृतं शापम्, वेदवतीकृतम् अहमेवायोनिजा पुनराविर्भूय भर्तृमुखेन भस्मीकरिष्यामीति शापञ्च विशिष्य देवस्त्रियो जानन्तीति युज्यते सीतातेजसा स्वरक्षणप्रतीक्षणम् । तस्मात् लोकपालानाम**वरोधाः**=अन्तःपुरस्त्रियः सर्वरक्षोविनाशवाञ्छया रावणमात्रनाशासहिष्णुतया स्वक्लेशं सहमाना **यस्यां** नगर्यां **रोधम्** बन्धम् बन्दीकृतत्वं **अनुविदधते** अनुसरन्ति । सीताया आगमनात् पूर्वं पश्चाच्चैवं विमृश्यैव सहन्ते । तदनुसारमालोच्य च सीताऽपि तेषामवरोधानां रोधपरिहारार्थमेव स्वरोधमपि सहत इत्यहमप्युत्पश्यामि । तत् तथैव भविष्यतीति त्वया सा संप्रति आश्वासनीयेति ॥ २ ॥ (62)

(63) **अध्यासीना बहुमणिमयं तुङ्गशृङ्गं त्रिकूटं**
**दिक्पालेषु प्रथितयशसा रक्षसा रक्ष्यमाणा ।**
**अग्रे मेरोरमरनगरीं या परिष्कारभूम्ना**
**स्वाहूयेव ध्वजपटमयान् अग्रहस्तान् धुनोति ॥ ३ ॥**

नन्वयं राक्षसः, देवस्त्रीमणयोऽपि स्वं कामयेरन् इति कथं मुह्यतीत्यत्र तदैश्वर्यमपारमखिलमनः-

कर्षकं तथा कारयेदिति तस्याभिसंधिरिति ज्ञापयितुं देवनगर्यतिशायितां लंकाया दर्शयति अध्यासीनेति। न केवलं नगरी ; तदाधारस्त्रिकूटपर्वतोऽपि मणिमयः। सुवर्णसुमेरुस्थानस्थितामरनगर्यतिशयित-अनवद्यानेकविधमणिमयमहीधरशिखरालंकारलंकाहंकारो वाचामगोचर इति वक्तव्यम्। बहुमणिमयं बहुविधमणिप्रचुरम्। एवंविधा मणयोऽधिका इह; अन्यत्र न्यूना इति भावः। तुंगानि शृंगाणि यस्य, तुंगं स्वाधारभूतमेकं शृंगं यस्येति वा। "शिखरं तत् त्रिकूटस्य प्रांशु चैकम्" इति वर्णनात्। अत एव त्रिकूटमित्येव पाठः; न तु सुवेलमिति। "लब्धसंस्थां त्रिकूटे लंकां गन्तुं तव समुचितम्" इति प्रागेव त्रिकूटस्थताया उक्तत्वाच्च। तं त्रिकूटं पर्वतम् अध्यासीना; त्रिकूटे निर्बाधं स्थिता। नगरीवैभववत् रावणपराक्रमोऽपि वीरपत्नीनां मनःकर्षकः स्यादिति स मन्यत इति ज्ञापयति दिक्पालेष्विति। अतो लोकपालावरोधान् आहर्तुं लोकपालाः नायान्तीति भावः। प्रथितं प्रसिद्धं यशः पराक्रममूलकीर्तिः यस्य तत्। तेन रक्षसा दिग्विजयार्थं प्रस्थाय सर्वे परिभूता इति भावः। रावणस्य नैऋतत्वात् निऋतिदिक्पतित्वसंभवात् दिक्पालान्यतमत्वमिति न स्वरसम्। सर्वं स्वायत्तीकुर्वत एकदिक्पालत्वे विशेषाभावात्; अप्रसिद्धेश्च। एवम्भूतोऽपि रावणो मम पुरस्तात् क्लीबतुल्य इति सूचयितुं नपुंसकनिर्देशः। तेन रक्षसा रावणेन रक्ष्यमाणा या लंका ध्वजपटान् धुनोति। नेदं पवनस्फातिकृतं ध्वजपटाधूननं मन्तव्यम्। किंतु नगर्याः अग्रहस्तधूननमेव। तच्च स्पर्धितुकामया मेरुशिखरामरावतीसमाह्वानमेव। ननु स्पर्धायां तस्य विजयः कथमवधारित इति चेत् आह परिष्कारभूम्ना त्विति। परिष्काराणां स्वालंकारभूतसैन्यसमृद्धिदुर्गसमृद्धि-रक्षणसमृद्ध्यादीनां निरीक्षणेन गर्वातिशयादाह्वानम्। अग्रभूता हस्ताः अग्रहस्ताः। तान् ध्वजपटवद् भावितान् धुनोतीवेत्यन्वयः। अत्र ध्वजपटेषु पवनभावितः पटपटेति शब्दः आह्वानम्—हे अमरावति! पश्य मे समृद्धिमिति संबोध्य वचनम्। हस्ताग्रधूननञ्च तया प्रत्युत्तरादानात्, 'अपसर; अनन्तरक्षणे अस्मदधिपतिमूलमपनेष्यामि' इति सूचकम्। एवं शत्रोरैश्वर्यं पराक्रमः तावत्सत्त्वेऽपि स्वापेक्षया निकर्षात् रावणवत् लंकाया अप्यस्थानाहंकारभूयिष्ठत्वञ्चोक्तम् ॥ ३ ॥ (63)

(64) काले यस्यां व्यपगतघने त्वद्विहारोचितेऽस्मिन्
चन्द्रालोकैर्विलुलितधियां शर्वरीगर्वहासैः ।
स्वर्गस्त्रीणां विरहजनितं बाष्पमुद्वेलयन्त्यः
निष्यन्दन्ते सलिलकणिकाश्चन्द्रकान्तस्थलीनाम् ॥ ४ ॥

स्वपत्नीमपहृतामानेतुं प्रवृत्तस्यातिवेलकरुणस्य सुवेलसमीपे विलपन्तीनां पतिव्रतानामेव बुद्धौ सदा विपरिवर्तमानत्वात् पूर्वं श्लोकद्वयेनेव पुनरेकेनापि श्लोकेन ताः गृहीत्वा किञ्चिदाह काले इति। एवमाम्रेडनमेतत्परिहारप्रवृत्तेरावश्यकत्वं मानसलोलहंसमानसे लग्नं स्यादिति। बन्दीकृतस्त्रीवासस्थानान्यपि चन्द्रकान्तादिमयानीति ऐश्वर्यातिशयः, तादृशस्थलेऽपि स्थिते स्वपत्नी (अशोक) वनवासमेव रोचयामासेति तस्या मनःपरिपाकश्चानुसंहितो भवतः। तथा न केवलं राक्षस्य एव तत्र पतिव्रताभर्त्सनव्यग्राः;

देवता अपि रावणस्यानुकूलतयाऽवतिष्ठन्ते। चन्द्रः प्रादुर्भूय विरहशोकं वर्धयति; बाष्पान् निस्सारयति। शर्वरी च प्रियचन्द्रसहधर्मचारिणी सगर्वं हसति। ज्योत्स्नाप्रसरो नाम शर्वरीहास एव। तद्दर्शनेन कामोद्भेदेन कदाचित् ताः रावणानुकूला भवेयुरिति तत्तदभिसंधिरिवेति मत्वा वर्णयति। **त्वद्विहारोचिते**तव सर्वत्र यथेच्छसञ्चारस्यानुकूले **व्यपगतघने** वार्षिकमेघविवर्जिते **काले अस्मिन्** शरदि **यस्यां** लंकायां **शर्वरीगर्वहासैः** पतिसंश्लेषलब्धगर्वायाः विरहदूनविविधस्त्रीदर्शनं परमलाभं मत्वा परितुष्टायाः हासवत् स्थिताः ये चन्द्रस्य **आलोकाः** प्रभाः तैः **विलुलितधियां** विच्छिन्नबुद्धीनां रावणेनापहृतानां स्वर्गस्त्रीणां स्वस्वप्रियविश्लेषव्यसनोद्भावितं **बाष्पं** दुःखाश्रु **उद्वेलयन्त्यः** उत्क्रान्तवेलं कुर्वत्यः। **वेला** मर्यादा तीरञ्च। वर्धयन्त्य इति यावत्। **चन्द्रकान्ताख्यमणिनिर्मितस्थलीसंबन्धिन्यः सलिलकणिकाः** जलकणाः। **निष्यन्दन्ते**। कणिका अपि शर्वरीवत् रावणानुकूला भूत्वा ता बाधन्ते। चन्द्रिकास्पर्शे हि चन्द्रकान्तमणयो जलं वमन्ति। तत्कणिकामात्रस्याधिकप्रवाहरूपत्वासंभवेऽपि उद्वेलबाष्पपूरितत्वात् उरस-वर्षोभयमूलमिव उदकमभिवर्धेतेति एवं दुःखप्रवाह इव जलप्रवाहेऽपि ताः परिप्लवेरन्निति भावः ॥ ४ ॥ (६४)

(65) **भासा तादृक्परिणतिजुषा मैथिलीशोकवह्नेः**
**भस्मीभूतां पवनतनयस्नेहिना पावकेन।**
**अन्तस्त्रासादवहितधियः संविधास्यन्त्यवश्यं**
**प्रत्यादिष्टप्रथमरचनं(नां) विश्वकर्मादयस्ताम् ॥ ५ ॥**

ननु हनुमता कतिपयदिनमात्रकालतः प्रागेव भस्मसात्कृतायां लंकायां रक्षोगणानामेव वासदौःस्थ्ये स्वर्गस्त्रियः कथं तत्र स्थास्यन्ति; कथं तस्याः अमरावत्या स्पर्धितुमवसरः; कथं स्थलीनां चन्द्रकान्तमयता चेत्यत्र पूर्वातिशायि संस्थानं प्रत्यग्रं प्राप्तमित्येव निश्चेतव्यमित्याह **भासेति**। **विश्वकर्मादयः**—संकल्पमात्रेणेव सर्वं क्षणमात्रेण कर्तुं प्रवीणाः विश्वकर्मा मय इत्यादयः **अवश्यं** निस्संदेहं तां संविधास्यन्ति। ननु संव्यधुः, संविहितवन्तः स्युरिति प्रयोक्तव्ये कथमितःपरमेव करिष्यमाणतयोक्तिरिति चेत्—विहितामेव तामुपर्युपरि शोभाधायकांशघटनव्यग्राः, प्रत्यादिष्टप्रथमरचना यथा स्यात् तथा करिष्यन्तीत्याशयः। यद्वा त्वया सह सल्लापकालेऽस्मिन् लंकाया दग्धवत् स्थितत्वेऽपि त्वद्गमनकालतः प्रागेव कतिपयास्वेव नाडीषु उपक्रम्य यथावन्निर्मास्यन्तीत्यर्थः। अथवा संविहितवन्तः स्युरित्यर्थ एव तात्पर्यम्। कीदृशीम्? पावकेन **भस्मीभूताम्**। पावकप्रक्षेपः केन कृत इत्यत्राह **पवनतनये**ति। आञ्जनेयेत्यर्थः। **पावकस्य** अग्नेः पवने स्नेहः प्रसिद्धः सखित्वात्, स्वपोषकत्वात्, दाह्यानां शोषणेन दाहानुकूल्यसंपादनाच्च। तथाच लंकायाः शोषणं दाहनञ्च क्रमेण संपन्नम्। सख्युः पुत्र इति हनुमत्यपि स्नेहः प्रेम। प्रेमात्मकः स स्नेहः तैलरूपस्नेहवत् पावकस्योपयुक्त आसीत्। 'शीतो भव हनूमतः' इति सीतानुग्रहेण पावकस्य हनुमति स्नेहः प्रसिद्धः। अत एव हनुमतोऽपि तस्मिन् स्नेहः प्राप्तः। सोऽपि तैलम्। ननु रावणाद्भीतः पावकः कथं दहेदित्यत्र प्रथमपादः। **मैथिल्याः** जानक्याः यो रामविरहकृतः शोकः, स एव वह्निः

तस्य भाः प्रभा ; तद्वत् स्थितेन । पावको वदेत् नाहं दहामि, सीताविरहाग्निरेव दहतीति इति भावः । नात्र विरहाग्नेः पूर्णस्यापेक्षा । आशा एककिरणरूपेणाग्निना ; तच्छोकवह्निर्दग्धुं प्रवृत्तश्चेत् , सर्वमपि रावणीयं दह्यात् । अतः तदीयप्रभया स्फुलिंगेन वा परं पूर्णलंकामात्रदाहानुरूपपरिणामं जुषते प्राप्नोतीति तादृशेन भस्मीभूतां तां प्रत्यादिष्टा तिरस्कृता प्रथमरचना—पूर्वरचना पूर्वकृतसंनिवेशः यस्मिन् कर्मणि तथेति क्रियाविशेषणम् । प्रथमपदेन लंकानगरी स्वोत्पत्तेः पश्चात् कचिदपि कोणे ईषत्परिष्करणमप्यप्रतीक्षमाणा तथैवासीदिति ज्ञाप्यते । बहुः काल आसीत्; अतो दाहोत्पत्तिरानुकूल्यायैवेति च प्रशस्य अतिरमणीयं कृतवन्तः स्युः । अतोऽधस्तात् मदुक्तं सर्वमुपपन्नमित्यर्थः॥ रचनामिति स्त्रीलिंगपाठेऽपि विधेयविशेषणत्वमेव ॥

(66) मध्ये तस्या निशिचरपतेः सद्म रुद्धान्तरिक्षं
युग्मं नेयैर्दिवि सुमनसां सेव्यमानं विमानैः ।
कारागारं विबुधसुदृशां वीक्षमाणो विचित्रं
शोकप्रीतिव्यतिकरवतीं वक्ष्यसे चित्तवृत्तिम् ॥ ६ ॥

वन्दीकृतवृन्दारकवधूजनस्थानदर्शनं कर्तव्यं प्राधान्येन प्रतिपाद्य तत्समीपे रावणसदनं विवक्षुः तच्छेषतया विश्वकर्मादिभिर्लंकानवीकरणं सम्यक् संभाव्य राजगृहमेव वर्णयति मध्ये इति । तस्याः लंकायाः मध्ये । राज्ञां हि राजधानीमध्य एव वासो युक्तः । निशिचरपतेः राक्षसेश्वरस्य रावणस्य सद्म प्रासादं वीक्षमाणः । सद्मविशेषणानि चत्वारि । रुद्धान्तरिक्षम् औन्नत्यातिशयात् रुद्धम् पूर्णतयाऽऽक्रान्तम् अन्तरिक्षं सूर्यचन्द्रादिगमनदेशभूतं गगनं येन तत्; तत् । द्यावापृथिव्योर्मध्यगतमन्तरिक्षं रुद्धमित्यनेन तावन्मात्रोन्नतमिति न विवक्षितम् ; किंतु स्वर्गलोकस्पर्शो एव कृत इति ज्ञापयन् देवविमानसेव्यत्वमप्याह युग्ममिति । युग्मं स्त्रीपुंसद्वन्द्वं मन्दोदरीरावणरूपं वा, कलत्रान्तरसहितरावणरूपं वा, तदासक्तकतिपयदेवस्त्रीसहितरावणरूपं वा, रावणपुत्रबान्धवसेवकादिस्त्रीपुंसद्वन्द्वं वा यथायथमभिलषित स्थानं प्रति नेयैः नेतुमर्हैः ; नयनार्थं यथावत् परिशील्य निर्दोषतया परिकल्पितैः । विमानानि रावणगृहं दिवि चरन्त्येव सेवन्ते तस्यात्युच्चत्वादिति पर्यालोचने देवलोके इतस्ततो गमनार्थं देवैरेव स्थापितैः देवस्त्रीपुंसनयनार्हैः तन्नयनकारिभिर्गच्छद्भिर्विमानैरित्यप्यर्थः सुवचः । इदानीं रावणादिराक्षसमिथुननयनार्हत्वेऽपि अचिरेण तेषां वधे जाते तत्र बन्दीकृता योषितः तत्तत्पुरुषाः स्वस्थानं नेष्यन्तीति युग्मं देवमिथुनमेवाचिरेण स्वगृहं नेतुमर्हैरित्यप्यर्थः स्यात् । राज्ञामुपायनतया गजादीनामर्पणे द्वन्द्वतयाऽर्पणं कार्यमिति, "सम्राजामुपहाराय युग्मं नेयाः गजादयः । इयं हि राज्ञां मर्यादा, न त्वेकैकं कदाचन" इति श्लोकतोऽवगमात् विमानानि देवैरुपायनतया युग्मं यथा तथाऽर्प्यन्त इति तादृशैरित्यप्यर्थः स्यात् । श्लोकोऽयमेवमानुपूर्वीकः स्वप्ने आचार्यैरनुगृहीत इति रसास्वादिन्यामुक्तम् । तथाऽऽचार्यानुग्रहभाजनं ते श्रीपरकालस्वामिनः । एवम्भूतैः सुमनसां देवानां विमानैः दिवि सेव्यमानम् । स्वर्गव्यापित्वात् सद्मनः स्वर्ग एव विमानैः सेव्यता । एवंभूतराजसदनस्य कारागृहत्वमप्याह कारेति । विबुधसुदृशां

देवस्त्रीणाम् कारा बन्धनस्थानम्; तद्रूपोऽगारः गृहम्। तत् विचित्रं रत्नस्वर्णादिनिर्मितत्वेन अतिदीर्घायतत्वेन सर्ववैभवसंपन्नत्वेन चाद्भुतं सद्म वीक्षमाणः शोकस्य दुःखस्य प्रीतेः मोदस्य च व्यतिकरः मिथःसंसर्गः। अतिशयेन तद्युक्तां चित्तवृत्तिम् मनःपरिस्थितिं वक्ष्यसे लप्स्यसे। 'वह प्रापणे' इत्यस्मात् आत्मनेपदे कर्तरि लृट्। प्रीतिशोकेति परिवर्तनं कार्यम्। तदा यथासंख्यम्। समृद्धिदर्शनेन हर्षात्, विबुधस्त्रीबन्धनदर्शनेन च शोकात्। यद्वा देवविमानैः सेव्यत्वदर्शनात् शोकः। वैचित्र्यदर्शनात् प्रीतिः, तथा रावणादिराक्षसवैभवदर्शनात् शोकः, विबुधसुदृशां प्रीतिपात्राणां बन्दीकृतानां पातिव्रत्यप्रेक्षणात् प्रीतिः इति न परिवर्तनावकाशः ॥ ६ ॥ (६६)

(67) ईषत्कोपात् चकितपवनामिन्दुसन्दिग्धसूर्याम्
नित्योदारामृतुभिरखिलैर्निष्कुटे वृक्षवाटीम्।
सीताशोकज्वलनसहजैः तत्र दीप्तामशोकैः
आपद्येथाः प्रथमलुलितामाञ्जनेयप्रचारैः ॥ ७ ॥

अथाशोकवनिकां गन्तव्यामाह ईषदिति। ईषत् कोपात्—अत्यल्पात् रोषादपि चकितः भीतः पवनः वायुर्यस्यां ताम्। वृक्षवाटिकापुष्पफलादिपतने रावणः कुप्येदिति भीतोऽतिमन्दं वातो वाति। पवनो यत्र बिभेति, तत्र तत्सुतो भयङ्कर आसीत्। इन्दुसंदिग्धसूर्याम्। इन्दुः चन्द्र इति संदिग्धः, इन्दुत्वेन संदिह्यमानः औष्ण्यस्येषदप्यभावात् चन्द्र इति, प्रकाशातिशयात् शैत्याभावाच्च सूर्य इति कोटिद्वयावगाहनात् संदेहः। "नैनं सूर्यः प्रतपति पार्श्वे वाति न मारुतः" इत्युक्तेः। सूर्यः शान्तचण्डिमा। तं फलत्वेन मत्वा भोक्तुं प्रस्थितस्तु पवनतनयः प्रतापोष्णस्तत्र। अखिलैः खिलभिन्नैः अन्यूनैः सर्वैः ऋतुभिः वसन्तादिभिः षड्भिः नित्योदाराम् सर्वदा संपन्नतत्तदृतुपुष्पफलादिसमृद्धिम्। आम्राद्यनेकफलवृक्षपरिकर्मितत्वेऽपि अशोकवनिकेति नामानुरूपं अशोकवृक्षसमृद्धिं दर्शयति सीतेति। सीतायाः शोकात् विरहदुःखात् जातः ज्वलनः अग्निः, तस्य सहजैः तेन सहोत्पद्य वर्धमानैः तद्भ्रातृस्थानस्थितैः, तत्सदृशैरिति यावत्। नाम्ना अशोकैः वञ्जुलवृक्षैः दीप्तां लब्धप्रभाप्रसराम्, आञ्जनेयस्य—अञ्जना सुप्रजा येन तस्य हनुमतः प्रचारैः प्रकृष्टैः संचारैः। सीतासंदेशग्रहणानन्तरं राक्षसबलपरीक्षया वेगविहितैः स्वशाखामृगत्वानुगुणैरुत्प्लवनशाखाचलनादिभिः प्रथमलुलिताम् प्रथमं खण्डिताम्। रावणगृहोद्यानमिति सर्वैर्भीत्याऽपसृत्य गम्यते। ईषत्कोपादपि चकितः पवनो जीर्णं पत्रमपि तत्र न स्वयं पातयति। ईदृशं वनं को नु खण्डयेत्। हनुमानेव प्रथममेवं चकार। अञ्जनातपःप्रभावफलमेतत्, यत् राक्षसतत्संबन्धिवस्तुविशरणविधानं विशिष्टेन धैर्येण। वायुना परिष्वक्ता अञ्जना तेनैव प्रकृष्टपराक्रमं पुत्रं प्राप्स्यसीत्यनुगृहीता। तत्फलमिदानीमेव प्रथमं दृष्टम्। एवं लुलिताऽपि पुनरपि ववृधे; ऋतूनां ततो भीतत्वात् स्वकार्यविधानात्। तथाविधां वृक्षवाटीम् उपवनं निष्कुटे रावणगृहसमीपे स्थिताम् आपद्येथाः गच्छेः-प्राप्नुहि ॥ ७ ॥ (६७)

(68) तस्यामन्यैर्वियति विहगैः सार्धमानन्दनिघ्नैः
स्थानेस्थाने निहितनयनो वर्तयन् मण्डलानि ।
द्रक्ष्यस्येकां जनकदुहितुः सौम्य दुर्जातबन्धुं
न्यस्ताकल्पां क्वचन विटपे शिंशुपां सान्द्रशाखाम् ॥ ८ ॥

तस्यां वृक्षवाटिकायामशोकदीप्तायां यन्मूले देवीवासः, तां शिंशुपां पश्येत्याह तस्यामिति । तस्यां वृक्षवाट्यां शिंशुपामेकां द्रक्ष्यसीत्यन्वयः । अन्यैः त्वत्सजातीयैः आनन्दनिघ्नैः आहार-विहारसौलभ्यसौकर्यातिशयात् त्वदवेक्षणाच्च प्रमोदपरवशैः विहगैः सार्धं पक्षिभिः सह विहायसि मण्डलानि भ्रमणरूपान् गतिविशेषान् वर्तयन् आवर्तयन्नेव स्थानेस्थाने जननिवासार्हस्थलं यत् यत् तत्र सर्वत्र निहितनयनः प्रेरितवीक्षणस्सन् गच्छन् । मण्डलगतिः सर्वेषां पक्षिणाम् तत्रतत्र । निहितनयनत्वमन्येषामाहाराद्युद्देशेन भवतु ; मा वा भूत् । एकां काञ्चित् शिंशुपां तदाख्यं वृक्षं द्रक्ष्यसि । कीदृशीम् ? जनकदुहितुः जननप्रभृतिसादरातिशयं जनकमहाराजेन सुखसंवर्धितायाः तत्पुत्र्याः मत्पत्न्याः सीतायाः दुर्जातबन्धुम् दुर्जाते व्यसनावसरे बन्धुभूताम् । छायादिना बन्धुवत् उपकारिणीम् । 'दुर्जातं व्यसनं प्रोक्तम् असम्यग्जातवस्त्वपि' इति कोशात् । शिंशुपासु बह्वीषु इयं सीताबन्धुरिति कथं ज्ञायेत । तत्राह न्यस्तेति । क्वचन एकस्मिन् विटपे शाखायां न्यस्ताः सीतया निक्षिप्ताः आकल्पाः स्वकीयभूषणानि यस्यां ताम् , सान्द्रशाखाम् अधस्तात् वासार्हतया भूरिच्छायाप्रदपर्णाङ्कुरपल्लवसमृद्धनिबिडानेकविटपयुक्तां शिंशुपां द्रक्ष्यसि । "वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् । तान्याभरणजालानि शाखाशोभीन्यलक्षयत्" इत्युक्त रीत्या स्वयमाभरणानि धर्तुमनिच्छन्त्या सीतया स्वस्थानशिंशुपाशाखायां निक्षिप्तानि तच्छोभावहान्यासन् । तदिदं हनुमन्मुखादधिगत्य रामेणैवं सुनिश्चितमुक्तम् । तथा च तदाभरणजालशोभिशाखायुक्तशिंशुपा-निरीक्षणे, अत्रैव सीता वसति, अत्रत्या सीतैवेति त्वया सुज्ञानमिति भावः ॥ ८ ॥ (६८)

(69) मूले तस्याः किमपि सवनक्षेत्रसंस्कारजातं
यत्र क्वापि स्थितमपि सखे तावहीनं महिम्ना ।
काले तस्मिन् कथमपि मया वीर्यशुल्केन लब्धं
दृश्यं तत् ते दिनकरकुलद्योतकं दिव्यरत्नम् ॥ ९ ॥

यदर्थं त्वद्गमनं मया प्रार्थ्यते, तत् रत्नं ते तव दृश्यमित्याह मूले इति । सखे ! सत्कार्यनिर्वहणोत्सुक ! मित्र ! तस्याः शिंशुपायाः मूले अधोभूमौ तत् आत्मगुण–रूपगुण–महदनुग्रहभाजनत्वादिभिः प्रसिद्धम् । 'उक्तं हि मारीचेनापि, "अप्रमेयं हि तत् तेजो यस्य सा जनकात्मजा" इति । दिव्यरत्नं 'जनकस्य कुले जाता देवमायेव निर्मिता' इत्युक्तरूपम् , ते तावद्दूरं गतस्य तव दृश्यम्—दृष्टिविषयो भवति, यदवश्यं चक्षुष्मता दृश्यम् । तच्चरितं रत्नसाम्यघटनेनाह किमपि । कौ मातरपितरौ, कथमा-

विर्भावः, कथञ्च पेटिकादिसंवरणं विना केवले भूम्यन्तःप्रदेशे सप्राणेन्द्रियं सौन्दर्यादिभरितमेव स्थितम्, कियता कालेन स्थितमित्यादि यस्य दुर्निरूपम्; **सवनक्षेत्रसंस्कारजातम्**। **सवनं** यागः यागभूमेः कर्षणाख्ये संस्कारे क्रियमाणे सीताशब्दमुख्यार्थे लाङ्गलपद्धतौ प्रथमतो दृष्टं तत एव **जातमि**त्युच्यमानम्। परमपावनस्य राजर्षेः कर्मनिष्ठतया प्रसिद्धस्य परिशुद्धक्षेत्रे यागार्थसंस्करणकाले शुभमाविर्भूतम्। **यत्र क्वापि** रावणालयादिदुष्टस्थाने **स्थितमपि** आपतितवासमपि **महिम्ना** "न त्वा कुर्मि दशग्रीव! भस्म भस्मार्ह! तेजसा" इत्युक्तेन स्वतेजसैव। महिमवत्त्वादित्यर्थः। **त्रासहीनम्** अवद्यं भविष्यतीति भयरहितम्। रत्नपक्षे **यत्र क्वापि स्थितमपि** महाराजगृहे महत्यवकरे वा स्थितमपि **त्रासहीनम्** त्रासाख्यमणिदोषरहितं **महिम्ना**—सहजमाहात्म्यविशिष्टञ्च। उपलक्षणे तृतीया। पूर्वमप्युपलक्षणतृतीयेष्यते चेत्, न वार्यते। तेन, "न स्थानतोऽपि परस्योभयलिंगं सर्वत्र हि" इति ब्रह्मसूत्रोक्तं लक्ष्मीनारायणयोः अविशिष्टमखिलहेयप्रत्यनीकत्वं कल्याणगुणैकतानत्वञ्चातिहेयवस्तुसंबन्धेऽपि न हीयत इति तत्त्वं **यत्र क्वापी**त्यादिना सीतादेव्यां दर्शितं भवति। तेन, 'इच्छामात्राज्जगदपरथा संविधातुं क्षमाणाम्' इति स्वस्मिन्निव स्वदेव्यामपि श्रियोऽवतारभूतायां वैभवं व्यञ्जितं भवति। कुत्रापि तन्महिमलोपो न भवतीति। तथा अरण्ये महाभङ्करस्थानेऽपि **महिम्ना** तन्महिमभूतेन मया हेतुना त्रासहीनम्। "गजं वा वीक्ष्य सिंहं वा व्याघ्रं वापि वरानना। नाहारयति संत्रासं बाहू रामस्य संश्रिता" इति ह्युक्तम्। **तस्मिन् काले** वीर्येण विश्वामित्रयज्ञं संरक्ष्य मिथिलां प्रति विवाहनाशयेनैव गूढेन, तेन महर्षिणा यदा नीतोऽभवम्, तदा। **कथमपि**। अपेक्षकबाहुल्येऽपि। अस्याः सौन्दर्यलावण्यादिश्रवणेन जन्मप्रभृति महावीर्यैः राजभिर्महत्तरं निर्बध्यमान एव जनक आसीत्। तथापि तैर्न लब्धा, किंतु मयैवेति नूनं भाग्यवशादेव। जनकेन न दीयते कथमिति क्रुद्धाः सर्वे युद्धाय संनद्धा महावीर्या युगपदेव मिथिलां ह्याक्रामन्। तदा जनकस्तान् विजिग्ये। तन्नूनं मे भाग्येन। किञ्च यथा तान्, तथा मामपि विसृज्य मदपेक्षयाऽप्यधिकसौन्दर्यादिशालिनमात्मदुहित्रानुरूप्याय शीलयितुं जनकोऽन्वेषयेच्चेत्, मम दुर्लभैव स्यात्। "तच्चेयमसितेक्षणा" इति तस्याः गुणातिशयः किल सर्वज्ञेन हनुमता शीलितः। एवमन्यैरप्राप्तत्वं मया प्राप्तत्वञ्च दैवायत्तात् **वीर्यशुल्कात्**। 'आयागभूतं महदिदं महेश्वरधनुरारोपयेत् यः, तस्मा एव दुहिता दास्यते' इति तस्य प्रतिज्ञाऽऽसीत्। धनुरारोपयितुमागताश्च राजानो दर्शनमात्रेण भीताः प्रणम्य प्रतिजग्मुः। धनुरारोपणेन वीर्यं यो दर्शयति तस्मै कन्येयं दीयते इति प्रतिज्ञैव सीतां मां प्रापयत्। [शुल्कं विवाहार्थं वरपक्षात् वधूपित्रादिस्वीकार्यं किमपि।] **मया** सर्वातिशायिबलेन **लब्धम्**—जनकेन प्रीत्या दानात् प्राप्तम्। एवम्भूतमपि ग्रहीतुं न स्वेच्छया मया संरब्धम्, किंतु पितुराज्ञां प्रतीक्ष्यैव। दर्शनमात्रेण, 'अस्मत्कुलद्योतकत्वं न दिनकरस्य कूटस्थस्य, किं त्वस्या एव' इति निश्चिकाय मे तातपादः। तदनुमतिमासाद्य मया प्रतिगृहीतम्। **लब्धम्**। शिवधनुर्भञ्जनप्रदर्शितेन वीर्येणैव शुल्कभूतेन आर्जितत्वात् जनकादीनामसंमतिसंभावनायामपि अदानेऽपि तत् लब्धमेव भवेत्। न तथाऽऽसीत्।

किंतु तैस्त्वरया दातुमुत्सहमानैरभ्यर्थनेऽपि प्रतीक्ष्य तस्मिन् काले असत्पितृसंमतिग्रहणकाले प्रतिगृहीतम् । **दिव्यम्** अप्राकृतस्वरूपम् रत्नम् । दिव्येषु रत्नं श्रेष्ठञ्च ॥ ९ ॥ (६९)

(70) **सा मे दृष्टिः(दिष्टं(दिष्टिः)शफरनयना संनतभ्रूः सुकेशी**
**तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा ।**
**बाला युष्मत्प्रतिमगमना वेदिमध्या वराङ्गी(ङ्गा)**
**शृङ्गाराख्यं निधिमधिगता श्रेयसी देवतेव ॥ १० ॥**

रत्नत्वेन रूपिता सीता यथावदङ्गप्रत्यङ्गसौष्ठवप्रतिबोधनेन प्रशस्यते सेति । सा पूर्वोक्तप्रकारेण मया लब्धा **मे दृष्टिः** मम नेत्रभूता । अङ्गेषूत्तमांगमिवेन्द्रियाणां प्रधानभूतं नेत्रम् । सर्वेषां स्वनेत्ररक्षणे महती श्रद्धा भवति । तथाऽहं तद्रक्षणे प्रवृत्तः । हन्त! तथापि त्यक्तवान् । नेत्रमेव समविषमस्थल-प्रदर्शनेन यथावत् गतिमापादयति ; तथा मे तदातदा हिताहितबोधनेन सत्पथसञ्चारं कारितवती । सा सर्वदा मे दर्शनसमानाकारभावनामयत्वाच्च **दृष्टिः** । दिष्टिमिति दिष्टमिति वा पाठे भाग्यमित्यर्थः । सर्वथा मत्कलत्रमिति विवक्षितम् । मन्नेत्रभूताऽपि स्वयमद्भुतनेत्रवती **शफरनयना** । मत्स्याकारे नेत्रे । स्वनेत्रेण सा मन्नेत्री बभूव । स्वप्रेमपात्रप्राणिपोषकदर्शनकरत्वं शफरजातेः । अस्या नयनं मद्विषये एवम् । अत्र "अपांगा भूयांसः" इति श्रीविषयः श्लोकोऽनुसंधेयः । तस्यां स्वदृष्टित्वप्रस्तावे तद्दृष्टावुपस्थितायां तत्समीप स्थितांगस्मरणात् आह **संनतभ्रूरिति** । संनमितं मदीयं धनुरिव, स्वयमेव संनतं तदीयं भ्रूरूपं धनुः । तद्धनुर्निष्क्रान्तशराकाराः तदपांगा मां तद्वशे चक्रुः । भ्रुवोरुपरि स्थितान् केशान् आह **सुकेशीति** । सीतैव स्वलक्षणं कार्तान्तिकोक्तं स्वयमाह स्म (यु. 48), "केशाः सूक्ष्माः समाः नीला भ्रुवौ चासंगते मम" इत्येवम् । **तन्वी** स्वभावतः कृशाङ्गी । 'सा प्रकृत्यैव तन्वंगी' इति च वर्ण्यते । **तुङ्गयोः** उन्नतयोः स्तनयोर्भरेण ईषन्नता । **तप्तजाम्बूनदाभा** संतप्तनिर्मलसुवर्णच्छाया । **बाला** यौवनारम्भ-दशापन्नेव स्थिता । **युष्मत्प्रतिमगमना।** यूयं(हंसाः) प्रतिमा यस्य तत् युष्मत्प्रतिमम् तादृक् **गमनं** संचारः यस्यास्सा ॥ **प्रतिमाशब्दः** सादृश्यनिरूपकार्थकः । सीतागमननिष्ठं हंसगमनसादृश्यमेवेति तद्गमनस्यैव सादृश्यनिरूपकत्वेऽपि हंसीयत्वविशिष्टगमनस्यैव प्रतिमात्वात् विशेषणविधया हंसस्यापि सादृश्यनिरूपकत्व-मस्त्येव ; निरूपकान्तर्भावात् । साक्षान्निरूपकत्वस्यैव **प्रतिमाशब्दविवक्षितत्वे** युष्मत्पदं तद्गमनलाक्ष-णिकम् । न च लक्षणायां मानाभावः । अन्वयानुपपत्तेरेव मानत्वात् । प्रयोगबलाच्च निरूढेः । अयोग्यार्थस्थले योग्यार्थलक्षणा अनुशासनमूलमेव वक्तव्येति निर्बन्धाभावात् । गुणगुण्यभेदारोपः कार्य इत्यत्र किमनुशा-सनम् ? न ह्यालंकारिकोक्तिरनुशासनम् । लक्षणास्थले सर्वत्रारोपवादिनस्तथा वदन्तु नाम । एतदाशयेन **तन्मञ्जीरप्रतिमनिनद** इत्यत्राक्लेशाय लक्षणैवाधस्तात् दर्शिता । अत्र निरूपकत्वशोधनेन यदुक्तम्, इदं वा काममस्तु । **वेदिमध्या ।** यज्ञवेदिर्मध्ये कृशा भवति । अतो वेदेरिव मध्यं यस्याः सेति विग्रहः । **वराङ्गी ।** वराणि अङ्गानि यस्याः सा । वरत्वं श्रेष्ठत्वम् । "अङ्गगात्रकण्ठेभ्यः" इति वार्तिकं कविशतप्रयुक्त-

शब्दासाधुत्वस्थापनव्यग्राः वैयाकरणा नेच्छन्ति। अविद्यमानेऽपि वार्तिके प्रयोगे समर्थनीये भाष्यानुक्तिमात्रेण वार्तिकव्युदासो न रोचते। 'तनुगात्रि मदनः' इति **कालिदासः। कम्बुकण्ठीति** चान्यत्र। **श्रृङ्गाराख्यमिति**। रसेषु श्रृंगारस्य प्राधान्यात् स्त्रीषु तत्रापि श्रृंगारस्यैव रसस्यौचित्यात्। प्रवासिनो विरहमसहमानस्य संदेशकारिणः श्रृङ्गारपरत्वाच्च। शान्तिरसादेरिह ग्रहणे औचित्याभावात् श्रृंगारदेवतेत्याह। तत्र रतिमन्मथादीनामेतदपेक्षया निकृष्टदेवतात्वं निरीक्ष्य **श्रेयसीत्युक्तम्**। तथा वस्तुगत्या लक्ष्मीत्वात् इयं **श्रेयसी देवता**। "समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम्। श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम्" इत्युक्तेः। श्रेयसीत्वञ्च भगवदपेक्षया अज्ञातनिग्रहत्वेन पुरुषकारत्वातिशयेन चोत्कर्षात्। सा श्रेयसी देवता साम्प्रतं श्रृङ्गाराख्यं **निधिमधिगता** दृष्टिचित्तापहारिणा वपुषा प्रसिद्धस्य मे प्रीणनार्थम्। हा हन्त! दूरे सेयमिति दूयते। एवंरूपतया भवताऽपि तद्दर्शनकाले सा भाव्येत। यथा हनुमता तां वर्णयता सुनिश्चितमुक्तम्, "दुष्करं कुरुते रामो हीनो यदनया प्रभुः। धारयत्यात्मनो देहम्" इति। सर्वनिधिदेवतेयं संप्रति श्रृंगाररूपापूर्वनिधिदेवतेति मत्वैव **हनुमता** तथोक्तम्। अत्र **सा मे दृष्टिरिति** दृष्टिप्रस्तावात् प्रथमपादे दृष्टिघटितोपरितनाङ्गवर्णनम्, द्वितीयपादेन मध्यकायस्य, तृतीयेनावशिष्टस्य, पूर्णावयविग्रहणमन्तर्वर्त्यात्मग्रहणञ्च चतुर्थपादे इति यथार्हं भाव्यम्। 'तन्वी श्यामा शिखरिदशना' इति मेघसंदेशश्लोकगतिरिह सहानुसन्धाय विमृश्या ॥ १० ॥ (७०)

(71) **सा ते यावन्नयनपदवीं याति मोहालसा वा**
**सन्देशं वा मदुपगतये श्रावयन्ती शकुन्तान्।**
**अत्रासन्नप्रियवचनतां सूचयद्भिर्निमित्तैः**
**एतामश्रुस्खलितनयनं वीक्षमाणा दिशं वा ॥ ११ ॥**

सीताया अङ्गप्रत्यङ्गवर्णनेन 'इयं सीता' इति निश्चयमार्ग उपक्षिप्तः। अथ प्रोषितभर्तृकाणां स्थितिरस्यां पुष्कलेति तत्समयोचिताः काश्चिदवस्थाः श्लोकद्वयेन प्रदर्श्य ततोऽपि सीतेयमिति निश्चाययति सा ते इत्यादिना। **यावत् याति**–यास्यति। "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थद्योतकं **याव**दिति। सा ते नेत्रगोचरीभविष्यति। कीदृग्भूता? तत्र बहून् कल्पान् उल्लिखति। **मोहालसा वा** प्रियवियोगासहनेन तत्परिहारमार्गादर्शनेन च हनुमद्गमनकाले यो मोह आसीत्, तादृशेन किंकर्तव्यतामोहेन गात्राणां शैथिल्यात् **अलसा** किमपि कर्तुमपारयन्ती स्यात्। अथ हनुमता परस्परं स्थितिस्थलस्योभाभ्यां स्पष्टं ज्ञापितत्वात् तदनुसारेणान्यथोल्लिखति **संदेशमिति। शकुन्तान्**। यथा मम त्वम्, तथा तत्समीपे सन्तः पक्षिणः स्युः। अवश्यञ्चाहमिव संदेशप्रेषणप्रवृत्ता स्यादिति आत्मौपम्येन विभाव्येदमुक्तम्। **मदुपगतये** शकुन्तकर्तृकमत्सविधप्राप्त्यर्थम्, मत्कर्तृकस्वसमीपागमनार्थं वा **संदेशं** प्रियवृत्तं **श्रावयन्ती** दिशन्ती वा नयनपदवीं यास्यति। यद्वा त्वद्गमनावसरत्वात् अवश्यमेव तस्या हनुमद्गमनकाल इव शुभानि निमित्तानि भवेयुः। तथा हि वर्णितम्, वामनेत्रोरुबाहुस्फुरणं यथावदासीदिति, वृक्षे शाखायाञ्च

पक्षिरुतं प्रियमासीदिति च । "शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्टमिवोपजीविनः" इति च निगमितम् । अतः स्वात्मनः **अत्यासन्नप्रियवचनतां** सूचयद्भिः । **प्रियम्**—इष्टवचनं प्रियेण प्रेष्यमाणम् । तत् **अत्यासन्नं** अतिशीघ्रभावि यस्य तादृशत्वम् । हे सीते ! तव प्रियवचनमतिशीघ्रं कर्णे पतिष्यतीत्येतमर्थम् । योऽयं संदेशो मया त्वन्मुखेन प्रेष्यमाणः, इमं शीघ्रभाविनं सूचयद्भिः **निमित्तैः** पूर्वोक्तैर्वामाक्षिस्पन्दनादिभिः। अस्य **वीक्षमाणे**त्यत्रान्वयः। निमित्तैः सूचितत्वादिति यावत् । **अश्रुस्थगित नयनं** संदेशहारिव्यक्तचदर्शनव्यसनकारितेन अश्रुणा वाष्पेण स्थगिते आच्छादिते नयने यस्मिन् कर्मणि तथा । अहो यः कश्चिदागच्छति वा न वा, अहो अश्रु तस्य दर्शनं प्रतिबध्नातीति विषीदन्ती एतां मद्वासभूतामुत्तरां दिशं वीक्षमाणा वा ते नयनपदवीं यास्यति ॥ ११ ॥ (७१)

(72) **आकल्पान् वा सविधनिहितान् आलपन्ती विमोहात्**
**अङ्गस्पर्शो रघुकुलपतेः स्मर्यते वा न वेति ।**
**ध्यायन्ती वा चिरविरहितान् एकशय्याविहारान्**
**तस्या नूनं नियतिजनिता तादृशी कालयात्रा ॥ १२ ॥**

अज्ञानदशा, दशान्तरेषु संदेशकरणदशा संदेशश्रवणोत्सुकताप्रयुक्तचक्षुर्व्यापारदशा च भाविता । अथ असंदेशरूपवाचिकव्यवहारदशोच्यते **आकल्पा**निति। **सविधनिहितान्** समीपे निक्षिप्तान्–स्वसल्लापोपयोगितयेति शेषः । **आकल्पान्** रामाङ्गुलीयकमपि वा, स्वभूषणमात्रं वा **विमोहात्** इमे अचेतनाः न किञ्चिज्जानीयुरिति विवेकविरोधिमोहवत्त्वात् **आलपन्ती** वा सुदीर्घं भाषमाणा वा । तद्रूपगुणवर्णनपूर्वकं पृच्छन्ती वेति यावत् । पूर्वश्लोकेऽन्वयः । किमित्यत्राह **अङ्गे**ति । रघूणां रघुवंशजानां रघोर्वा **कुलस्य** वंशस्य **पत्युः** नायकस्य श्रीरामस्य **अङ्गस्पर्शः** पूर्वं युष्माभिरनुभूतः **स्मर्यते** वा स्मृतिपथमायाति वेति । अथ अहमेव यथावन्न स्मरामि, कथं यूयमिति मत्वा **न वे**त्याह । अथ स्मरणस्योक्तत्वात् स्वयमादरेणानुस्यूतं स्मरेदिति मन्वान आह **ध्यायन्ती** वेति । अस्यापि पूर्वश्लोकेऽन्वयः । **चिरविरहितान्** चिरादविद्यमानान् । ननु 'रूपरहितो वायुः' इत्येवं रहितपदम् अभावानुयोगिनि अभावाश्रये प्रयुज्यते । न तु अभावप्रतियोगिनि । विहाराभावश्चिरादित्यस्यैव विवक्षितत्वात् कथमेवमिति चेत्–व्यावृत्तशब्दवत् उभयथाऽपि प्रयोगः । संबन्धाभावो विरहः । चिरेण स्वसंबन्धाभाववतः **एकशय्याविहारान्** प्रियेण सहैकस्यां शय्यायां कृतान् संभोगशृंगारादिरूपान् विच्छेदखेदेन निरन्तरं चिन्तयन्ती वेति । ननु सवनक्षेत्रसंस्कारजातायाः त्रासप्रसक्तिविदूरमहामहिमसंपन्नायाः दिनकरकुलद्योतिकायाः आधिराज्यानुभावार्हसर्वसामुद्रिकलक्षणसंपन्नायाः सीतादेव्याः कथमियं दशेति शंकां परिहरति **तस्या** इति । प्रागेवोक्तं हि, 'इक्ष्वाकूणां प्रकृतिमहतामीदृशीं प्रेक्ष्य वेलाम्' इति । पुरुषकारेण दैवमतिवर्तितुं न कश्चित् प्रभवति । अतः **तादृशी** हनुमता प्राक् वर्णितप्रकारा प्राचीनैः द्रौपदीदमयन्त्यादिभिरनुभूतसदृशी च **कालयात्रा**–राजभोगं पतिसंश्लेषञ्च विहाय स्थितायाः व्यसनभारेण कालस्य यापनरीतिः **नियतिजनिता** दैवकारिता ।

साऽपि स्वात्मनोऽरण्यवासादिकं प्रागेव ज्ञातवती । परंतु दुरवस्थामिमां भविष्यन्तीं कार्तान्तिकाः ज्ञानिनः कुशला अपि न ज्ञापयामासुः, सर्वथा कुशल एव पर्यवसानं संभाव्येति मन्ये । अतस्त्वमस्याः समाश्वासपरो भवेति । तस्या इत्यादिकं श्लोकद्वयार्थशेषभूतं पृथग्वाक्यम् ॥ १२ ॥ (७२)

(73) शुद्धामिन्दोः श्वपचभवने कौमुदीं विस्फुरन्तीम्
आनीतां वा विषतरुवने पारिजातस्य शाखाम् ।
सूक्तिं रम्यां खलपरिसरे सत्कवेः कीर्त्यमानां
मन्ये दीनां निशिचरगृहे मैथिलस्यात्मजाताम् ॥ १३ ॥

'यत्र क्वापि स्थितमपि सखे त्रासहीनम्' इति स्वोक्तानुरूपम् अहो अस्थाने स्थिता सीतेति विभाव्य अनेकैरुदाहरणैः तदनौचित्यं विशदयति शुद्धामिति । निशिचरगृहे दुरात्मनो राक्षसस्य गृहे दीनां दैन्यदशापन्नाम् । उपमानवाक्यगतानां विस्फुरन्तीम् आनीताम् कीर्त्यमानामिति त्रयाणां पदानामत्राप्यन्वय इष्यते चेत्; अस्तु । मैथिलस्य मिथिलाधिपतेर्जनकस्य महात्मनो देवप्रकृतेः आत्मजातां सुताम् साक्षाद्देहादुत्पन्नदुहितृवत् सर्वतदीयसद्गुणसंपन्नामिमां सीताम् अस्थानस्थिततया स्वसद्भावनिबन्धनफलहान्या चैवमेवं मन्ये । कथंकथम् । तदाह इन्दोः चन्द्रस्य शुद्धां धवलां दोषानास्पदं विस्फुरन्तीं (विशेषेण) सकललोकसमाह्लादिकां राजसौधादिषु लब्धातिशयां फलहेतुं श्वपचभवने शुनः पक्त्वा भुक्त्वा कालं यापयतः अतिनीचजातिवृत्तेरत्यन्तमलिनस्य भवने निरन्तरस्थितिदेशे तेन हर्म्यवन्मन्यमाने सद्भिर्दूरपरिहृते जीर्णभित्तिपटलावृतेऽत्यन्तसंकुचितेऽन्धकारपरीते सर्वमलास्पदे पटलरन्ध्रद्वारा विस्फुरन्तीं विकृतमीषत्प्रभामुखेन स्फुरन्तीं कौमुदीं वा सर्वभूमिमोदविधानसमर्थां ज्योत्स्नामिव मन्ये । वाशब्दो द्वितीयपादस्थः द्वितीयान्तेषु त्रिष्वप्यन्वेति इवार्थकः । उत्तरश्लोके इवशब्दप्रयोगादत्रापि तदैकरूप्यात् । अन्यथा तु अत्र रूपणम्; तत्र परमुपमानमिति वक्तव्यम् । तथा विषतरुवने विषवृक्षा यत्र जाताः वृद्धाश्च, तत्रारण्ये आनीताम् आहृत्य स्थापिताम् पारिजातस्य पयःपयोधेर्मथनेन महताप्रयासेनामृतेन सह संपादितस्य कल्पवृक्षविशेषस्य नन्दननन्दनस्य शाखां विटपमिव, तथा खलानां दुर्जनानां परिसरे समीपे कीर्त्यमानां केनापि पठ्यमानां रम्यां सहृदयहृदयाह्लादिकां सत्कवेः व्यासवाल्मीकितुल्यस्य सूक्तिम् सर्वगुणसंपन्नां वाचमिव मन्ये इत्यत्रान्वयः ॥ १३ ॥ (७३)

(74) वर्षाकीर्णामिव कमलिनीं व्याहतार्थामिवोक्तिं
पङ्काश्लिष्टामिव बिसलतां पत्यपेतामिवेभीम् ।
मेघच्छन्नामिव शशिकलां विघ्नरुद्धामिवाशां
व्याघ्रत्रस्तामिव मृगवधूं भूतले ज्यामिवास्ताम् ॥ १४ ॥

एवमस्थानस्थितानि बहूनि उपमानत्वेन स्वयं प्रदर्श्य अथ श्रीमद्रामायणोक्तेषु उपमानेषु कानिचित् उपलक्षणत्वबुद्ध्या दर्शयति वर्षेति । 'मन्ये सीताम्' इति पूर्वेण सर्वद्वितीयान्तविशेष्यपदान्वयः ।

एवमेव द्वाविंशश्लोकपर्यन्तस्थितानां द्वितीयान्तानां साकांक्षाणाम् । कमलिनीं पद्मिनीं लतां सरसीं वा । बिसलता वक्ष्यते । कीदृशीम्? वर्षेण मेघकृततोयवर्षेण, हिमवर्षेण वा आकीर्णां शिथिलिताकाराम् । यथोक्तम्, 'हिमहतनलिनीव नष्टशोभा', 'पद्मिनीमिव विध्वस्ताम्' इति । व्यादृत्तार्थां पूर्वापरार्थविरुद्धार्थाम् उक्तिं वाचमिव । तदुक्तम्, 'संस्कारेण यथा हीनां वाचमर्थान्तरं गताम्' इति । अस्य 'इन्द्रशत्रुः' इत्यादाविव अपेक्षितस्वरहान्या विवक्षितार्थविरुद्धार्थपरां वाचमिवेत्यर्थः। यद्वा पूर्वं किमुक्तमित्यविमृश्य तत्संस्काराभावात् पूर्वविरुद्धं किञ्चिदुच्यते चेत्, सा वाक् अर्थान्तरं विरुद्धमर्थं वक्तीति तत्सादृश्यविवक्षा । अथवा वास्तवार्थं परित्यज्य कल्पितविपरीतार्थां वाचमिवेति । तथैव प्रकृतसूक्तेरप्यर्थः । पंकेन कर्दमेन आश्लिष्टां संबद्धां लिप्तां बिसलताम् मृणालनालरूपाम् । तदुक्तम्, 'मृणाली पंकदिग्धेव विभाति न विभाति च' इति । पत्यपेताम् स्वभर्तृसकाशात् वियुज्य अन्यत्र निरुद्धाम् इभीं करिणीमिव । यदुच्यते, 'गृहीतामालनस्तम्भे यूथपेन विनाकृताम् । निश्वसन्तीं सुदुःखार्तां गजराजवधूमिव ॥' इति । मेघेन छन्नाम् आच्छादितां शशिकलां चन्द्रकलामिव । कलाग्रहणं स्त्रीलिङ्गोपमावाचकपदप्रयोगाय । यद्वा शरीरकार्श्यात् कलामात्रमिव लक्ष्येति सूच्यते । पूर्वं कौमुदी दृष्टान्तिता, इदानीं कलेति द्वयोर्भेद एव । विघ्नेन प्रतिबन्धकेन रुद्धां प्रतिहतां आशामिव मनोरथमिव ; अप्राप्तफलां तृष्णामिव । उक्तञ्च, 'आशां प्रतिहतामिव' इति । व्याघ्रत्रस्ताम् शार्दूलात् भीतां मृगवधूं मृगीमिव, 'राक्षसीवशमापन्ना व्याघ्राणां हरिणी यथा' इति । भूतले अस्तां चापात् विच्छिद्य क्षिप्तां ज्यामिव मौर्वीमिव च । अयं दृष्टान्तः रामवियुक्तायोध्यानगरीदुस्स्थितिवर्णनावसरे वाल्मीकिदर्शितः, "भूमौ बाणैर्विनिष्कृत्तां पतितां ज्यामिवायुधात्" इति । तस्यैवात्र विनिष्कृत्तामित्यनुक्त्वा घटनम् । इदञ्च यथासंभवं स्थलान्तरकथिता अप्यंशाः दृष्टान्तीभवेयुरिति ज्ञापनाय ॥ १४ ॥ (७४)

(75) स्मृत्वा पूर्वं स्मरशरभये मत्परिष्वङ्गरक्षाम्
आश्लिष्यन्तीमलसव(ल)लितैरङ्गकैर्मातरं स्वाम् ।
आकल्पेऽपि श्रमसधिगतैरङ्गरागेऽपि खिन्नैः
अक्षाम्यद्भिः स्मृतिमपि मुहुस्सौकुमार्यातिरेकात् ॥ १५ ॥

'भूतले ज्यामिवास्ताम्' इत्युक्तमन्ते । तेन, 'भूमिशय्या विवर्णाङ्गी' इति वचनं स्मृतम् । तत्र भूमौ शयनमास्तरणादिरहितायां विवक्षितम् । तदपि शयनं न सौख्यापादकम्, अपितु अस्वस्थताप्रयुक्तलुठनचलनादिवत् ईषद् भूमेराश्लेषरूपमिति विमृश्य स्वाश्लेष-भूम्याश्लेषयोर्भेदमपि चिन्तयन् दर्शयति स्मृत्वेति । पूर्वं मया सह स्थितिकाले स्मरशरभये मन्मथबाणाद् भये सति; कामेन विरहासहिष्णुतायां सत्यामिति यावत् । मत्परिष्वङ्गरक्षां मामालिङ्ग्य ततो लब्धां रक्षां स्मृत्वा संप्रति विरहातुरतया तदलाभात् स्वखेदं स्वमातरि ज्ञापयन्तीमिव तां भूमिम् अङ्गकैः अतिकृशैरङ्गैः आश्लिष्यन्तीम् । तस्याः कामभयं दृष्ट्वा मया सा तद्भयपरिहरणाय परिष्वक्ता । अद्य तु स्वयमेव स्वमातरमाश्लिष्यतीत्यर्थस्वीकारे

मत्परिष्वंगेत्यत्र मत्कृतालिंगनेत्यर्थः । अङ्गकैः कीदृशैः । तदाह **अलसवलितैः** मन्दचलनैः शक्त्य-भावात् अतिमन्दं चलनमिति भावः । अलसानि वलितानि चलनानि येषां तैः । मदालिंगनकाले उत्साहातिशयात् आलिंगनस्य गाढता । इह तु वैपरीत्यम् । वलनाश्लेषादिकमेव कथं भवतीत्या लोच्यते सौकुमार्यातिशयचिन्तने ; तथापि नूनं स्मरशरभयात् तद्भवतीवेति मन्वान आह **आकल्पेऽ-पीति** । **आकल्पे** आभरणानां विटपालङ्कृतया निवेशेऽपि अवर्जनीयं यत् अलंकरणम् , तत्करणेऽपि श्रान्तिं प्राप्तैः । आकल्पस्य भारूपत्वात् श्रमः स्यादाम । **अङ्गरागे** अङ्गानां विधिप्राप्ते सान्ध्या-नुष्ठानशेषभूतस्नानाद्यंगरजनीचूर्णादिलेपनेऽपि खेदं प्राप्तैः ; अथवा अलंकरणलेपनादिकार्ये इति किम् तत् कर्तव्यमस्तीति स्मरणेऽपि खेदात् तद्विषयस्मरणमपि **अश्नुवद्भिः** असहमानैः 'एकस्थहृदया नूनं राममेवानुपश्यति' इति मामेव स्मरन्त्याः अन्यतत्तत्स्मरणमसह्यं भवति । **मुहुरित्यनेन** कर्तव्यस्य करणे निष्पन्ने तत्स्मरणं न भवेत् । अक्षमतया तदकरणात् पुनःपुनः स्मरणं जायते । तच्च न सह्यत इति ज्ञाप्यते । **सौकुमार्यातिरेकात्** । स्वभावत एव सुकुमारं शिरीषपुष्पहासादपि कोमलम् संप्रति बलहान्या अतिशयेन सुकुमारमिति भावः । तस्मादसहमानैरङ्गैरप्याश्लिष्यति मातरं भुवम् अनन्यशरणत्वात् , रावणादिभयाच्च । मत्परिष्वङ्गावसरे उपर्युपरि भूषणधारणाङ्गरागलेपनदिव्यशय्यासोत्साहशयनादिप्रवृत्तानामङ्गानां साम्प्रतिकी स्थितिरियमहो इति खिद्यते । एवं भूमौ शयाना कथं निद्रां लप्स्यते। "भूमिशय्या विवर्णाङ्गी" इत्यत्र विवर्णाङ्गीति पदविवरणं सविशेषणाङ्गकपदेन । शेषेण भूमिशय्यापदव्याख्यानमिति ध्येयम् ॥ १५ ॥

(76) भूयोभूयः करसरसिजे न्यस्य रोमाञ्चिताङ्गीं(ङ्गां)
मौलौ चूडामणिविरहिते निर्विशन्तीं निधाय ।
अन्तस्तापादधिगतरुजोरादरादर्पयन्तीं
पर्यायेण स्तनकलशयोरङ्गुलीयं मदीयम् ॥ १६ ॥

एवं सर्वाकल्पपरित्यागेऽपि सादरं मया प्रेषितं मदङ्गुलीयकं स्वयमन्यत्रानिक्षिपन्ती यथायथमुप-योजयन्ती विरहवेदनां न्यूनयतीत्याह **भूयोभूय** इति । अङ्गुलीयकं कथमुपयोजयतीत्यत्र त्रेधा तदाह । मदीयं मत्स्वामिकं मन्नामांकितं मया प्रेषितम् **अङ्गुलीयं** करभूषणम् , येन करेण गृहीत्वा प्रेक्षमाणा सा भर्तुर्मे करविभूषणं मां संप्राप्तेव मुदिताऽभवत् , तस्मिन् करसरोजे तथैव निक्षिप्य पश्यन्ती मत्संश्लेषादिव **रोमाञ्चितांगी** भवति । सञ्जातरोमाञ्चानि **अङ्गानि**— रोम्णां लोम्नाम् अञ्चनम् उद्गमनं पुलकोद्गमः सर्वेष्वङ्गेषु तद्युक्ता तादृशीम् । अथ तदङ्गुलीयकप्रतिनिधितया स्वचूडामणिं मह्यं हनुमद्द्वारा प्रेषितवती तच्चूडामणिस्थाने मौलौ इदं निधाय **निर्विशन्तीं** सुखमनुभवन्तीम् । अथ मुख्यं विरहतापपरिहारप्रकार-माह **अन्तः** मनसि हृदये च **तापात्**–विरहाग्निसंतापात् **अधिगतरुजोः** प्राप्तरोगयोः **स्तनकलशयोः** **कलशौ** घटाविव स्तनौ तयोः **पर्यायेण** क्रमेण भूयोभूयः **अर्पयन्तीं** निक्षिप्य कञ्चित् कालं यापयन्तीम् । त्वद्गमनकाले ईदृशीमवस्थामापन्नां तां मन्ये । तेनापीयं सीतेति तत्स्वरूपं तद्गुणाश्च गृह्येरन् ॥ १६ ॥

(77) अम्बातुल्या सुचरितफलं दिव्यमालेपनं प्राक्
अङ्गेष्वस्याः स्थिरमनुगुणं यद्वितेनेऽनसूया ।
धाराकारैः स्तनकलशयोरापतद्भिः समन्तात्
सन्तापोष्णैस्तदपि बहुलैरश्रुभिः क्षालयन्तीम् ॥ १७ ॥

**अङ्गरागेऽपि खिन्नैरिति** नूतनाङ्गरागलेपनासहत्वमुक्तम् । किमनेनाङ्गरागेण ; तया नित्यासंक्लिष्टदिव्याङ्गरागधारणादिति स्वयमेव विभाव्य, तमङ्गरागं प्रस्तुत्य तस्यापि संक्लेशं संभावयन् आह **अम्बेति** । **अनसूया** अत्रिमहर्षेः पत्नी पातिव्रत्ये तपसि च प्रसिद्धा पत्याऽपि श्लाघिता **अम्बातुल्या** ममाम्बया सीताम्बाया च सदृशी । यथा ममाम्बा सीतां प्रति वनवासार्थप्रस्थानकाले हितमुपदिदेश, यथा च तन्माता विवाहानन्तरमयोध्यां प्रति सीताप्रस्थानावसरे, तथा सीतां प्रति उपदेशकरणात् गुणपौष्कल्याच्च तत्तुल्यत्वम् । कौसल्यासाम्यमनसूयाया अत्रिरेवाह तया करिष्यमाणं बहुमानविशेषं मनसिकृत्य, "देवकार्यनिमित्तञ्च यथा संत्वरमाणया । दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ" इति । उभाभ्यामुपदेशः कृत इति सीतया न्यवेदि महर्षिपत्न्यै, "आगच्छन्त्याश्च विजनं वनमेवं भयावहम् । समाहितं मे श्वश्र्वा च हृदये तत् धृतं मया । पाणिप्रदानकाले च यत् पुरा त्वग्निसंनिधौ । अनुशिष्टा जनन्याऽस्मि वाक्यं तदपि मे धृतम् । नवीकृतं तु तत् सर्वं वाक्यैस्ते धर्मचारिणि" इति । उपदेशोत्कृष्टवस्तुदानयोः सर्वकृतत्वेऽपि अनसूयादत्तानां दिव्यत्वादिवैभवात् इयमम्बा तावत् अतुल्या । अतः अम्बयोस्तुल्येतिवत् अम्बेति अतुल्येति पदद्वयमपि । सा यत् **आलेपनम्** अनुलेपनं **वितेने**—चक्रे । अदादिति यावत् । तद्दत्तमनुलेपनं तदैव सा दधारेति कृत्वा तयैवानुलेपनस्य कृतत्वमुच्यते । दिव्यत्वस्थिरत्वानुगुणत्वानि तद्विशेषणानि । उक्तं हि तयैव, "इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च । अङ्गरागश्च वैदेहि ! महार्हश्चानुलेपनम् । मया दत्तमिदं सीते ! तव गात्राणि शोभयेत् । अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति" इति । **अङ्गरागः** चन्दनादि । **अनुलेपनं** गन्धद्रव्यरजनीचूर्णादि । श्लोके **अनुगुणमिति** पदं **अनुरूपमिति** पदस्थाने । **स्थिरमिति** **नित्यमसंक्लिष्टमित्येतत्स्थाने** । तत् अनुलेपनं स्थिरमसंक्लिष्टमपि **स्तनकलशयोः स्तनौ** कुचौ **कलशौ** कुम्भाविव तयोः **आपतद्भिः समन्तात्** वेगेन पतद्भिः **संतापेन** विरहाग्नितापेन उष्णैः **बहुलैः** अमितैः **धारा-आकारैः** पर्वतझरीसमानस्थौल्यदैर्घ्यैः **अश्रुभिः** बाष्पैः **क्षालयन्तीम्** स्वयं लोपनीयत्वबुद्ध्यभावेऽपि अर्थात् तल्लोपहेतुभूतां मन्ये । **पर्यायेण स्तनकलशयोरङ्गुलीयं** मदीयमर्पयन्तीमित्युक्तम् । चिरमेवमर्पणेऽपि अन्तस्तापशान्तिर्न जातेति निभाल्य, अहो तापः ; किं कुर्यामिति रोदितुं प्रवर्तेत । तदा तयोरेव स्तनकलशयोरश्रुधारा पतेत् । तापस्य तोयधारया शान्तिर्भवेदिति लोको मन्येत । अत्युष्णधारेयं ततोऽप्यसह्या भवेत् । स संतापः अनसूयादत्तं विलेपनं न लोपयेत् । इयं तु तदपि कुर्यात् । तापश्चायं ज्वरः । नूनमनसूयानुग्रहसाफल्यं भवतैव तत्र गतेन समाश्वासविधायिना बाष्पनिरोधिना कार्यम् ॥ १७ ॥ (७७)

(78) अग्राह्यत्वात् विषमयमितं केशहस्तं मया प्राक्
आबिभ्राणां तनुपरिमलश्रद्धयेवावकीर्णम् ।
अर्चाहेतोर्भुवि रतिपतेरप्सरोभिर्विमुक्ताम्
अन्वग्याताामिव सुरतरोर्मञ्जरीं चञ्चरीकैः ॥ १८ ॥

केशपाशं वर्णयन् कल्पवृक्षमञ्जरीत्वेन सीतां कलयति **अग्राह्यत्वादिति**। **केशहस्तं** केशकलापम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे' इति कोशात् । केशकलापो बहुलं हस्तेन नियम्य पाशेन बद्ध्वा पक्षे=एकस्मिन् पार्श्वे स्थाप्यत इति पक्षहस्तपाशानां केशसंबन्धादिव तथा प्रयोगप्रवाहः । कीदृशम् ? **मया प्राक्** विहारकाले विस्रंसनदशायाम् **अग्राह्यत्वात्** केशपरिमाणाधिक्यात् हस्तद्वयेऽन्तर्भावयितुमशक्यतया **विषमयमितं** शिथिलीभावार्हं यथा तथा बद्धम्, संप्रति, 'एकवेणीधरां दीनाम्' इत्युक्तरीत्या विभागपूर्वं ग्रथनाभावात् उपरि बन्धनविरहाच्च लम्बमानम्, अत एव **तनुपरिमलश्रद्धया इव**, स्वयं पुष्पधारणादिमूलपरिमलालाभात् तत्र वैरस्याच्च स्वसहजसर्वगन्धसीतागात्रपरिमले आस्थया किं विकीर्णतया गात्रं व्याप्नोतीत्युल्लेखार्हतया **अवकीर्णं** विशीर्य व्याप्तं तम् **आबिभ्राणाम्** धारयन्तीम् । एवं केशव्याप्तगात्रतया चञ्चरीकव्याप्तमञ्जरीमिव स्थिताम् । तद् विशदयति **अर्चेति** । **अप्सरोभिः** देववेश्याभिः **रतिपतेः** कामस्य । अप्सरसां भोगपरत्वात् सर्वदा तदर्चने प्रवृत्तिः । **अर्चाहेतोः** पूजनार्थं **भुवि** भूम्यां **विमुक्तां** विसृष्टां **चञ्चरीकैः** मधुपरिमललोभात् मधुपैः अविसृज्य **अन्वक् यातां** अनुगामि यथा तथा पुष्पपतनातिरिक्तस्वगमनार्थपृथग्यत्नं विना पुष्पगमनान्तर्गतत्वं यथा भवेत् तथा गाढसंश्लिष्टं यथा तथा **यातां** गतां प्राप्तां **सुरतरोः** कल्पवृक्षस्य **मञ्जरीं** पुष्पगुच्छमिव स्थितां मन्ये । विकीर्णकेशपाशतया मधुपसंपृक्तमञ्जरीसादृश्यं तस्या इत्युक्तं भवति ॥ १८ ॥ (७८)

(79) आनीतं यत् त्वरितमचलादुत्तरीयं प्लवंगैः
अस्माकारैस्तदृशमभितस्त्वत्प्रियारूपचिह्नम् ।
बालादित्यद्युतिसहचरं चारु वासो वसानां
सन्ध्यारागव्यतिकरवतीं चन्द्रलेखामिवान्याम् ॥ १९ ॥

तदीयवस्त्रवर्णनमुखेन तां वर्णयति **आनीतमिति** । रावणेन ह्रियमाणा सीता स्वकीयोत्तरीयभागे कानिचिदाभरणानि निक्षिप्य मार्गे अधश्चिक्षेप, दैवात् यदि रामो वनं सर्वमटन् तत्राप्यागच्छेत्, मम गमनदिशं जानीयात् । तदुचितचिन्तया यतेतेति। यथोच्यते, "ह्रियमाणा तु वैदेही कञ्चिन्नाथमपश्यती। ददर्श गिरिशृङ्गस्थान् पञ्च वानरपुंगवान् । तेषां मध्ये विशालाक्षी कौशेयं कनकप्रभम् । उत्तरीयं वरारोहा शुभान्याभरणानि च । मुमोच यदि रामाय शंसेयुरिति मैथिली । वस्त्रमुत्सृज्य तन्मध्ये निक्षिप्तं (प्तैः?) सह भूषणम् (णैः?) । संभ्रमात्तु दशग्रीवः तत्कर्म न स बुद्धवान्" इति । तानि सवस्त्राणि ऋश्यमूकशिखरे निपेतुः। महार्घत्वात् वस्तूनाम्, पश्चात् प्रत्यभिज्ञापकानि भवेयुरिति बुद्ध्या, आपन्नजनरक्षणस्वाभाव्येन च

सुग्रीवेण स्वगुहायां तानि सुरक्षितान्यासन् । भाग्यवशात् रामे सुग्रीवसख्यं प्राप्य सीतापहारवृत्तान्तं गदितवति अनेकवानरानीतानि गुहायां रक्षितानि तानि स्वसचिवैः सह रामायाऽऽनीय प्रदर्शयामास । तदन्तर्गतं स्वसमीपस्थं तद् वस्त्रं प्रस्तुवन् तत्सदृशं वस्त्रं तया संप्रति अशोकवने ध्रियमाणमित्याह । यत् सीताया उत्तरीयं उपरितनदेहभागे स्थितं वासः तया साभरणमधःक्षिप्तं तत आनीय अचलगुहायां रक्षितं मह्यं त्वरितं शीघ्रं तस्मात् अचलस्थानात् सुग्रीवैः प्लवङ्गैः प्रदर्शनायाऽऽनीतं साभरणम्, अस्य मन्निकटे स्थितस्य सदृशम् । अचलादानीतमित्यनेन दण्डकारण्यपतितहारनूपुरादिव्यवच्छेदः । सादृश्यप्रयोजकानि दर्शयति आकारैरिति । जातिवर्णदशाबिन्दुवल्लीपक्षिरूपादयः आकाराः । एतावद्विशिष्टं तद् वासो हंसाय प्रदर्शयन् आह स अस्येति । सीतया रामाङ्गुलीयकमिव रामेण तद्वासः सर्वदा सह रक्ष्यमाणमासीत् । एतत्सदृशम् । तत्र हंसस्याभिमानविशेषात्पद्यमंशं विशिष्याऽऽह अभित इति । सर्वेषु प्रान्तेषु त्वत्प्रियारूपचिह्नम् । उक्तं हि प्रागपि तद्दुकूलाङ्कमूर्तौ इति । तव प्रियायाः हंस्याः रूपं चिह्नं यस्य तत् । सुवर्णरेखासंपादितानेकतत्समानाकारसंपन्नम् बालादित्यद्युतिसहचरम् उदयकालिकेषदरुणतरणिकिरणतुल्यप्रकाशयुक्तम् । "कौशेयं कनकप्रभम्" इति ह्युक्तमस्ति । चारु रमणीयं वासः वस्त्रं वसानां धारयन्तीम् । अत एव संध्यारागव्यतिकरवतीम् संध्यायाः यो रागः रक्तिमा, तस्य व्यतिकरः संपर्कः तद्वतीम् अन्यां प्रसिद्धचन्द्रलेखाविलक्षणाम् । भूमौ स्थितत्वात्, तदपेक्षया पानत्वाह्लादकत्वाद्यतिशयाच्चैवम् । चन्द्रलेखाम् चन्द्रकलामिव मन्ये ॥ १९ ॥ (७९)

(80) वक्तुं मार्गं किल वसुमतीं जग्मुषस्तत्पदाब्जात्
मञ्जीरस्य त्वदुपमरुतेर्दक्षिणस्यास्य तुल्यम् ।
अङ्कारूढे चरणकमले मत्करेणोपधेयं
वामं शाखाशिखरनिहितं वीक्ष्य गाढं विषण्णाम् ॥ २० ॥

राजहंसीमूर्तिपरिकर्मितवासोग्रहणेन तद्वर्णनं कृतम् । अथ राजहंसध्वनितुल्यं ध्वनतो मञ्जीरस्योपस्थित्या तन्मुखेन तद्वर्णनमैच्छत् कविः । तत्र नूपुरपातप्रसङ्गोऽन्य इति कविरालोच्य तदविरोधेनाह । सीतया बुद्धिपूर्वमधःक्षिप्तानि सवस्त्राणि आभरणानि वानरान् उद्दिश्य । तत्र वस्त्रं पुरस्कृत्य वक्तव्यमुक्तमासीत् । तथा बुद्धिपूर्वकमक्षेपणेऽपि जटायुवधानन्तरं यदा तीव्रवेगेन रावणः सीतामादाय खमुत्पपात, तदा नूपुरादीनि आभरणानि स्वयं पेतुरिति चोक्तं श्रीमति रामायणे, (आ. ५२) "चरणान्नूपुरं भ्रष्टं वैदेह्या रत्नभूषितम् । विद्युन्मण्डलसंकाशं पपात मधुरस्वनम् ॥ ....तस्यास्तान्यग्निवर्णानि भूषणानि महीतले । सघोषाण्यवकीर्यन्त क्षीणास्तारा इवाम्बरे ॥ तस्याः स्तनान्तरात् भ्रष्टो हारस्ताराधिपद्युतिः । वैदेह्या निपतन् भाति गङ्गेव गगनाच्च्युता ॥" इति । अनन्तरसर्गे, 'खमुत्पतन्तम्' इत्यादिदर्शने ततः पूर्वभागदर्शने च आकाशोत्पतनसमन्तरमेव नूपुरादिनिपतनमिति ज्ञायते । तत्र रामायणे साक्षादनुक्तावपि नूपुरादिकं सर्वत्र वने सीतामन्वेषितवता

लब्धमेव स्यादिति विमृश्य वानरदत्तवस्तुविषय इव तद्दत्तं प्रकारान्तरलब्धमधिकृत्यापि किञ्चित् वक्तव्यं हंसस्य परोचकमिति विभाव्य, अत्र नूपुरं प्राप्तवान् यथा ब्रूयात्, तथेह कल्पनामये काव्ये घटयति। तत्र श्लोके, 'भूषणानि महीतले' इति महीतलपदं स्थितमनुरुध्य वसुमतीमिति प्रयुक्तम्। अशोकवने हनुमता शिंशुपाशाखायां कानिचिदाभरणानि लक्षितानि। तत्र कानिचित्, 'सुकृतौ कर्णवेष्टौ च' इत्यादिना विशिष्योक्तानि। अन्यानि, 'यान्यस्या नावहीनानि तानीमानि न संशयः' इति सामान्येन क्रोडीकृतानि। दण्डकारण्ये एकनूपुरनिपतनस्यैवोक्ततया अन्यत् नूपुरं तत्र शाखायां भवितुमर्हतीति विभाव्य हंसमञ्जीरसाम्यात् मञ्जीरविषये एवं कल्पनं कविराद्रियत। तदेवं रामोक्तिः वक्तुमित्यादिः रावणेन दक्षिणां दिशं नीता सीतेति मह्यं मार्गं वक्तुमेव मञ्जीरः तत्पदपंकजं विहाय वसुमतीमागतः किमित्युल्लिख्यते। मार्गं दक्षिणदिग्गमनमार्गोऽयमस्या इति वक्तुं किल मह्यं सूचयितुमिव तस्याः सीतायाः पदाब्जात् अरविन्दसदृशात् पादात्। वसुमतीं जग्मुषः भूमिं प्राप्तस्य। अरविन्दे हंसस्य भवतो वासवत् मञ्जीरस्य तत्पदे वासः। तेन मञ्जीरेण स्वसुखस्थितिं विहाय भूमिं प्रति आगतम्, यथा भवता पद्मं विहाय मदर्थमिदानीं प्रस्थीयते इति विवक्षति। अत्र त्वयाऽपि दृश्यमानस्य त्वदुपमरुतेः त्वदुपमा सादृश्यनिरूपकः यस्याः रुतेः ध्वनेः सा त्वदुपमा; तथाविधा रुतिर्यस्य। युष्मत्प्रतिगमनेत्यत्र प्राक् यदुक्तम्, तदत्रापि स्मर्तव्यम्। दक्षिणस्य दक्षिणपदभूषणभूतस्य मञ्जीरस्य नूपुरस्य तुल्यं समानम्। अङ्कारूढे मदीये अङ्के मयाऽऽरोपणात् मदङ्कमारूढे सीतायाः चरणकमले सव्ये मया प्रियेण स्वकरेण उपधेयं भूषणतया निक्षेप्यं वामं मञ्जीरं शाखायाः शिखरे अग्रे निहितं वीक्ष्य, यं भर्ता मत्पादे स्वयमङ्कमारोप्य उपदध्यात्, स इदानीमहो शाखायामस्तीति गाढं विषण्णां विषादभूयिष्ठां मन्ये ॥ २० ॥ (८०)

(81) अङ्गैर्म्लायत्किसलयसमैरुज्झिताकल्पपुष्पैः
गाढाश्लिष्टां वपुषि विमले बिम्बिताभिर्लताभिः।
सन्तापोष्णश्वसनपरुषच्छायया किञ्च दी(दू)नां (क्षिदूनां)
बन्दीभूतां निशिचरगृहे नन्दनस्येव लक्ष्मीम् ॥ २१ ॥

अशोकवनमध्ये स्थितामेनां बन्दीकृतनन्दनवनलक्ष्मीत्वेन वर्णयति। बन्दीकृतत्वेनोल्लेखः किसलयानां म्लानत्वात् यथावत् पुष्पाणामभावाच्च। सीतया आकल्पाः न धृता इति पुष्पहीनवनलक्ष्मीतौल्यम्। अङ्गानां म्लानतया म्लानकिसलयवैशिष्ट्यम्। वनलक्ष्म्याः लतामयत्वं भवेत्; अस्यां तत् कथमिति चेत्—अस्याः मणिमये स्वच्छे मंगलविग्रहे तद्वनलतानां प्रतिबिम्बितत्वात्। तथा वनस्यापेक्षिता छायाऽपि न यथावत्; किन्तु परुषा। वनच्छाया, सूर्यातपोष्णीकृतवायुविचाल्यमानशाखादिकतया परुषा स्यात्; व्यवस्थिताऽपि। तथा सीतायाः प्रियविरहजनितसंतापोष्णनिश्श्वासोपहततया लावण्यच्छाया रूक्षतां प्राप्ता। अतो बन्दीकृतलक्ष्मीसाम्यं भावयति अङ्गैरिति। विमले निर्मले स्वच्छे वपुषि सीताशरीरे

**बिम्बिताभिः** सञ्जातप्रतिबिम्बाभिः **लताभिः** सविधस्थिताभिर्वल्लीभिः सहिततया **गाढाश्लिष्टाम्** बाढं लताभिः सखीतुल्याभिराश्लिष्यमाणामिव स्थिताम् **उज्झितानि** त्यक्तानि **आकल्पपुष्पाणि** । पुष्पाणीव **आकल्पाः** भूषणानि, यैस्तैः । सीताधार्यमाणामाकल्पानां न शोभावत्त्वमात्रेण पुष्पसाम्यम् ; किं तु अप्राकृतत्वात् भगवद्भूषणानामिव निरतिशयसुगन्धनिरतिशयसुखस्पर्शत्वादपि । विरहतप्ततया **ग्लायद्भिः** ग्लानिं प्राप्नुवद्भिः **किसलयैः** पल्लवैः **समैः** सदृशैः **अङ्गैः** पाणिपादादिभिः, किञ्च **संतापेन** विरहतापेन सूर्यातपसदृशेन **उष्णेन** ऊष्मलेन **श्वसनेन** निश्वासवायुना वात्यावनवायुतुल्येन **परुषया** रूक्षतां प्राप्तया **छायया** कान्त्या वृक्षच्छायासदृश्या-दुरवस्थाङ्ग-तच्छायोभयवशात् **दीनां** शोचनीयदशां प्राप्ताम्। अत्र सर्वत्र हेतुः निशिचरगृहे बन्दीभूतत्वम् । **बन्दी** कारादिवासकल्पनया प्रतिबद्धसञ्चारो जनः । अबन्दी सा संप्रति बन्दीबभूव । तस्मादेवं दुरवस्थापन्नां तत्रैव बन्दीभूतां नन्दनस्य देवोद्यानस्य लक्ष्मीमिव मन्ये॥

अत्र 'किञ्चिदूनाम्' 'किञ्च दूनाम्' 'किञ्च दीनाम्', इति पाठत्रयं लक्ष्यते । सर्वस्य रसास्वादिन्यां व्याख्यानमस्ति । परंतु **किञ्चिदूना**मिति किञ्चित्पदं निष्प्रयोजनम् ; बाधकञ्च । ऊनामित्यत्र अङ्गैः छाययेत्युभयोरन्वये तत्तद्राहित्यरूपार्थापातादनन्वयः । तत्रोपलक्षणतृतीयामंगीकृत्य अंगकाद्युपलक्षिताम् ऊनाश्चेत्यर्थवर्णने क्लेशः । ऊनत्वप्रकारानवगमश्च । **किञ्च दूना**मिति पाठे 'दूङ् परितापे' इति धातुः स्वीकृतः । तदाऽपि संतापोष्णेत्यनेनैव संतप्तत्वलाभात् तदाम्रेडनमयुक्तम् ; उपलक्षणतृतीयास्वीकार-गौरवञ्च । 'दु गतौ' इति धातौ निष्ठायां 'दुग्वोर्दीर्घश्च' इति वचनात् दूनेति शब्दनिष्पत्तावपि अर्थानन्वय इत्युक्तम् । वस्तुतः **दूनाम्**— गताम्, अङ्गैश्छायया च प्राप्तामित्यर्थवर्णनं घटते । किञ्चशब्दोऽपि तदुभयसमुच्चयार्थ एव स्यात् । पूर्वश्लोकार्थेन एतच्छ्लोकार्थसमुच्चयापेक्षया एवमुक्तेः स्वरसत्वात् । एवं **दीना**मिति पाठेऽपि अङ्गैश्छायया च दैन्यं प्राप्तामित्यर्थवर्णनसंभवात् उपलक्षणतृतीयास्वीकरण-मनपेक्षितम् । प्रारम्भे त्रयोदशश्लोक एव **दीना**मिति विशेषणस्योक्तत्वात् पौनरुक्त्यमिति चेत् — तत्रा-स्थानस्थितिरूपदैन्यमुक्तम् । तत् सुखसंतोषपूर्वकवासेऽपि, रामेण सहात्र वासेऽपि संभाव्यम् । अत्र तु विरहप्रयुक्तनानाविधशारीरवैधर्म्यप्रयुक्तं दैन्यमुच्यते । तृतीयान्तयोरत्रान्वयात् तत्प्रयुक्तं दैन्यमित्यस्य स्पष्टत्वात् । **रसास्वादिन्यामपि दीना**मिति पाठे पौनरुक्त्याभावः अनुद्धतत्वक्षीणत्वरूपार्थभेदादुक्तः । अतो **दीना**मिति निर्विवादम् । **दूना**मित्यपि युक्तम् ॥ अत्र सर्वत्र, 'परिम्लानां तपस्विनीम्', 'गात्रैः शोकाभिकर्शितैः', 'भूषणैरुत्तमैर्हीनाम्', 'छायावैगुण्यमात्रं तु शंके दुःखमुपस्थितम्', 'शोकसंतापदीना-ङ्गीम्' इत्यादीनि वचनान्यनुसंधेयानि ॥ २१ ॥ (८१)

(82) **चेतोवृत्तिं शमयति बहिस्सार्वभौमे निरोधे**
**मय्येकस्मिन् प्रणिहितधियं मान्मथेनाऽऽगमेन ।**
**अभ्यस्यन्तीमनितरजुषो भावनायाः प्रकर्षात्**
**स्वान्तेनान्तर्विलयमृदुना निर्विकल्पं समाधिम् ॥ २२ ॥**

एवं विरहविह्वलाया विविधा अवस्था उपवर्ण्य परमोत्कृष्टां परदुर्लभामवस्थां दर्शयति, या श्रीमति रामायणे सत्यैकवादिना समदर्शि, "नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान्। एकस्थहृदया नूनं राममेवानुपश्यति" इति। अत्र पूर्वार्धविवक्षितं प्रथमपादेन विवृत्य शेषं शेषेणाऽऽह कविः श्रीराममुखेन। **प्रणिहितधियम् अभ्यस्यन्तीम्** इति विशेषणद्वयं पूर्ववत् **मन्ये** इत्यत्रान्वेति।

अथ एतच्छ्लोकस्थानां पदानां यथावदर्थप्रतिपत्तये योगशास्त्रप्रमेयस्य प्रकृतोपयुक्तस्य निष्कर्षः क्रियते-यमनियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधिरूपेषु अष्टसु योगाङ्गेषु अन्तिमत्रयमन्तरङ्गं पूर्वेभ्यः। योगस्तावत् चित्तवृत्तिनिरोधः। प्रमाभ्रमादयः पञ्च वृत्तयो योगशास्त्रे शब्दान्तरेणोक्ताः। रागद्वेषादिमनोवृत्तयोऽपि ग्राह्याः। तत्र क्लिष्टाक्लिष्टरूपेण विभागोऽपि कृतोऽस्ति। संसारक्लेशहेतवः क्लिष्टाः। मुक्तिफलाः सत्कर्मानुकूलाः अक्लिष्टाः। योगप्रारम्भे सर्ववृत्तिनिरोधोऽपेक्षितः। एवं वृत्तिमतः चित्तस्य पञ्च भूमयः=स्थितिविशेषाः सन्ति, क्षिप्तं मूढं विक्षिप्तम् एकाग्रं निरुद्धञ्चेति। स्वध्येयेतरविषये रजोबलात् प्रवृत्तं चित्तं क्षिप्तम्। तमोबलात् सर्वतो निवृत्तं मूढम्। विक्षिप्तमव्यवस्थितं प्रवृत्ताप्रवृत्तोभयात्मकम्। एतद्भूमित्रयानुबन्धिचेतोवृत्तयो निरोद्धव्याः। एकाग्रता निरुद्धता च ग्राह्या।

अत्र एकाग्रता द्वितीयपादोक्ता। उत्तरार्धेन निरुद्धता। तत्रापि यत् तेन तेन ध्येयतया गृहीतं जीवात्मस्वरूपं वा परमात्मस्वरूपं वा तद्विग्रहो वा विषयान्तरं वा प्रकृतसीतासमाद्रियमाणतुल्यमन्यद्वा, तदेकव्यतिरिक्तसर्वविषये यत्र क्वापि चित्तमेकाग्रं निरुद्धं वा भवेचेत्— तद्वृत्तिविशेषा अपि त्याज्या एव। तदाह प्रथमपादेन। **सार्वभौमे** चित्तीयसर्वभूमिसंबन्धिनि **निरोधे**—प्रकृतक्षिप्तमूढविक्षिप्तत्रय-प्रकृतातिरिक्तसंबन्ध्येकाग्रनिरुद्धोभयात्मकभूमिपञ्चकसंबन्धितया विदिते निरोधे इत्यर्थः। एवमर्थवर्णनसंभवे सार्वभौमपदस्य कतिपयभूमिपरत्वेन संकोचविचारविस्तरो न कर्तव्य इति ध्येयम्। तत्फलमाह **बहिः चेतोवृत्तिं शमयतीति**। बहिःपदं न भौतिकादिबाह्यमात्रपरम्। किंतु स्वाभिमतध्येयातिरिक्तसर्वपरम्। प्रकृते श्रीरामदिव्यमंगलविग्रहस्यैव ध्येयत्वात् तदन्यत् योगशास्त्राद्दतमात्मस्वरूपादिकमपि बहिर्वस्त्वेव। एवंभूते निरोधे वृत्तिं शमयति सति। **मयि एकस्मिन्**। एकाग्रतारूपस्थितिज्ञापनार्थम् **एकस्मिन्**-त्युक्तम्। **प्रणिहिता** प्रकर्षेण निक्षिप्ता धीः यया सा ताम्। प्रणिधानं धारणाध्यानोभयरूपम्। एतद्ध्यान फलं किमित्यत्राह **मान्मथेनाऽऽगमेनेति**। औपनिषदध्यानविशेषाः मोक्षादिहेतवः। तद्विषयश्च परमात्मेति प्रसिद्धम्। अन्यदपि किञ्चित् कामं भवतु। न स योगोऽत्र विवक्षितः। किं तु कामार्थः। तत्र प्रमाणं **कामशास्त्रम्**। तत्राहमर्हामि विषयीभवितुमिति आत्मानं मानुषं मन्यमानस्येह विवक्षा। **योगशास्त्रोक्तो** योगः आत्मपरमात्मविषय एव भवतीति न नियमः। मोक्षप्राधान्यात् तदंशाधिकादरणेऽपि निरोधस्य दृष्टविधयैवोपयोगात् तत्तदभिमतसर्वविषयेऽपि तत्संभव एव तच्छास्त्रसंमतः। विभूतिपादे च तत् सर्वं विशदम्। तत्रोक्तानां सिद्धिविशेषाणां योगमहिमाधीनानाम् आत्मादिविलक्षणव्यक्तिविषय ध्यानाधीनत्वेऽपि प्रकृतसमाधिपर्यन्तोत्पत्तौ न किञ्चित् बाधकम्। एवं भवत्तुल्यरूपा भवत्पत्नी किमिति

भवद्विषये योगमौपनिषदं करिष्यतीत्यत्राप्युत्तरम् मान्मथेनागमेनेति। 'तद्रूपप्रत्यये चैका संततिश्चा... निस्स्पृहा, तद्ध्यानम्'। तदन्याविषयकाविच्छिन्नस्मृतिसंततिरिहोक्ता भवति। ध्यानानन्तरभावी अष्टमाङ्गभूतः साक्षात्कारतुल्यः समाधिरुपयुच्यते अभ्यस्यन्तीमिति। पूर्वोक्तध्यानरूपायाः भावनायाः अनितरजुषः इतराविषयिण्याः। एकस्मिन्नित्यनेनैव इतराविषयकत्वमुक्तम्; अत्र तु ध्यानवैलक्षण्यं समाधौ स्थितं दर्शयितुमिदं विशेषणम्। एवञ्च पञ्चम्यन्तं सत् प्रकर्षादित्यस्य विशेषणमपि भवेत्। इतरत् जुषति प्राप्नोतीति इतरजुट्; तद्भिन्नात् ध्येयाकारातिरिक्तभानरहितात्। ध्येयभानवत् 'अहमिदं ध्यायामि' इति अहमर्थ-ध्यानवृत्त्युभयभानमप्यस्ति ध्याने; तदत्र समाधौ नास्तीति। एवञ्चायं समाधिरसंप्रज्ञातो भवति।

तथा हि समाधिर्द्विविधः संप्रज्ञातः असंप्रज्ञातश्च। तत्र संप्रज्ञातो लक्षितः, "वितर्कविचाराऽऽनन्दास्मितानुगमात् संप्रज्ञातः" (1·17) इति। यत्र ध्येयस्वरूपं स्थूलं विषयीभवति, स सवितर्कः, यत्र सूक्ष्मं तत्कारणरूपम्, स सविचारः। उक्तमिदं ग्रहणं यत्रानुकूलतयाऽनुभूयते, स सानन्दः। आत्मविषयकः संप्रज्ञातः सास्मितः। तत्र सवितर्के विचारानन्दास्मिता अपि विषयीभवेयुः। पूर्वपूर्वस्मिन् उत्तरोत्तरसंमेलनं स्यात्। उत्तरोत्तरस्तु पूर्वपूर्वविकल इति चोक्तम्। प्रकर्षादिति शब्दः साक्षात्कार-विशेषपरः। तद्विशिष्टो निरोधः संप्रज्ञातसमाधिः। तत्र स्थूलविषयके संप्रज्ञाते सवितर्कत्वनिर्वितर्कत्व-रूपद्वैविध्यमप्युक्तम्; स्थूलगतसर्वांशविषयकत्वमाद्ये। सामान्यतोऽवयविमात्रविषयकत्वं द्वितीये। एवं सूक्ष्मविषयकसंप्रज्ञातेऽपि सविचारत्वनिर्विचारत्वरूपौ भेदौ ग्राह्यौ; तत्रापि सर्वविषयकत्वावयविमात्र-विषयकत्वरूपवैलक्षण्यसंभवात्। अयमेव चतुर्विधः संप्रज्ञातः, "ता एव सबीजः समाधिः" (46) इति सबीजसमाधित्वेनोक्तः। "तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः" इति असंप्रज्ञातसमाधिः निर्बीजत्वेनोक्तः। एतत् समन्तरमेव व्यक्तीभविष्यति।

सामान्यतः समाधिलक्षणञ्च, "तत्र प्रत्ययैकतानता ध्यानम्" इति एकाग्रतारूपध्याननिरूप-णानन्तरं दर्शितम्, "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति। तदर्थस्तु—तत्—ध्यानमेव अर्थमात्रनिर्भासं ध्येयवस्तुमात्रप्रकाशकं ज्ञानज्ञातृरूपांशद्वयानवभासकम् अत एव ज्ञानसत्त्वेऽपि तदभानात् ज्ञानस्वरूपशून्यमिव स्थितं समाधिशब्दवाच्यमिति। ध्येयं वस्तु चात्मा वा परमात्मा वा अन्यद्वेति न तत्र एकत्र नैर्भर्यम्। एतस्मिन् समाधिसामान्ये संप्रज्ञातस्वरूपकथनानन्तरम् असंप्रज्ञात एवं लक्षितः, "विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" (18) इति। अस्यायमर्थः – ध्येयातिरिक्तस्य वित्त्यादेरपि ग्रहणं मा भूदिति योऽध्यवसायः, स तद्विरामविषयकत्वात् विरामप्रत्ययः। तदभ्यास-रूपोपायनिष्पाद्यः संस्कारशेषः तत्प्रत्ययाभ्यासानुवृत्तिरहितः तत्संस्कारमात्रानुवृत्तिमान् यः, सः अन्यः= संप्रज्ञातादन्यः इति। तथाच एकाग्रतारूपध्यानं ध्येयध्यानध्यातृत्रितयावभासकम्। तत्र ध्येयाति-रिक्तभानं मा भूदित्यध्यवसायारम्भप्रभृति तदेव संप्रज्ञातरूपम्। पूर्वोक्ताभ्यासाधीनसंस्कारवत्त्वेऽपि ध्येयातिरिक्ताभानविशिष्टं असंप्रज्ञाताख्यम्। अत एव ज्ञानज्ञेयग्रहणात्मकत्वात अन्यविषयकोद्बोधार्हं

संस्कारविशिष्टत्वात् सबीजत्वं संप्रज्ञातस्य । तादृशसंस्काराभावात् निर्बीजत्वमसंप्रज्ञातस्य । योगसूत्रव्याख्याने निरूपणवैविध्येऽपि तैरात्मविषयकतया सर्वसमन्वयेऽपि अस्माभिरत्र सर्वसाधारण्याय युक्तायुक्तविवेकेनैवं सूत्राणामाशयो ग्राह्यः ।

अत्रेदं विचार्यम्—ज्ञानस्यानुव्यवसायेन ग्राह्यत्वमाहुस्तार्किकादयः ; स्वयंप्रकाशत्वं **वेदान्तिनः** । ज्ञानवत् आत्माऽपि स्वयम्प्रकाश एव **वेदान्तिमते** । तत्र ध्यानकाले तस्यानुव्यवसायवेद्यत्वे, मध्ये मध्येऽनुव्यवसायरूपप्रत्यक्षज्ञानप्रवेशात् अविच्छिन्नस्मृतिसंततिरूपध्यानं न सिध्येत्। स्वयम्प्रकाशत्वपक्षे तु न सा क्षतिः । परंतु स्वयम्प्रकाशत्वे स्थिते कथं तथाभूतज्ञातृज्ञानाग्रहणेन ध्येयमात्रभानमसंप्रज्ञाते । न च तद्भानेऽपि तेषां मिथो भेदो न प्रकाशत इति वाच्यम्—भेदस्य तत्तदसाधारणस्वरूपातिरिक्तत्वाभावेन तद्भाने भेदाभानस्यापि दुर्वचत्वात् । एवञ्च, "अधराहितचारुवंशनालाः" इत्यादिः ज्ञानज्ञेयभेदाग्रहमूलकव्यवहारः समाध्यभिप्रायः कथमिति ॥ उच्यते । धर्मभूतज्ञानस्य सर्वदा स्वयंप्रकाशत्वं नास्सदिग्धम् ; किं तु विषयप्रकाशनवेलायामेव । यथा ज्ञानं जायमानं स्वविषये सर्वत्र संस्कारं न जनयति, किं तु क्वचिदेवेत्यनुभवसिद्धम् । तथा क्वचिदवधानन्यूनतया, भातमपि (ज्ञानमपि) यथावत् स्वासाधारणधर्मविशिष्टतया कदाचिन्न स्फुरतीति, विरामप्रत्ययाभ्यासस्य प्रागुक्तत्वात् तद्बलेन, ज्ञानस्य यथावत् प्रकाशमानता विषयग्रहणवेलायामपि जातु विघट्यत इति योगशास्त्रप्रामाण्यादभ्युपेत्यम् । वृत्त्यनवभासस्यैव तत्र व्याख्यातृभिरप्युक्तत्वात् । अतः सूत्रे स्वरूपशून्यमिवेत्युक्तिरपि । अप्रकाशमानतया विद्यमानमप्यविद्यमानमिव भवतीति । अत एव, 'तस्यापि निरोधे सर्वनिरोधात् निर्बीजः समाधिः' इति सर्वनिरोध उक्तः । संप्रज्ञातासंप्रज्ञातशब्दार्थोऽप्ययमेव । यः समाधिः स्वयं प्रकाशते स ज्ञातः ; विषयेण सह प्रकाशनात् प्रज्ञातः ; अहमर्थेन सह प्रकाशात् संप्रज्ञातः । असंप्रज्ञातस्तु विषयप्रकाशेऽपि स्वयमप्रकाशात् अप्रज्ञातः ; ज्ञानाप्रकाशे, स्थितोऽप्यहमर्थप्रकाशः अहमिदं जानामीति विशिष्टप्रकाशाय न प्रभवतीति असंप्रज्ञातः समाधिरिति ॥ नन्वसंप्रज्ञातसमाधिनिष्ठः व्युत्थानात् पश्चात् अहमेवमन्वभूवमित्यनुसंधत्त इत्येव वक्तव्यम् । पूर्वमनुभवस्याज्ञातत्वे अप्रकाशितत्वे कथमिदमिति चेत् —अनुभवस्याज्ञातत्वेऽपि अनुभवविषयस्य भगवदादिरूपस्य संस्कारवशात् स्मरणे, स्मरणस्यानुभवाधीनत्वादनुभवानुमानमेवास्तु ; किं तदंशेऽपि स्मरणनिर्बन्धेनेति भाव्यम् । वस्तुतः असम्प्रज्ञातसमाधौ ज्ञानज्ञेययोरभेदभानं न भेदग्रहविरोधि । यथा काव्येषु मुखादेश्चन्द्रादितया रूपणस्थले भेदज्ञानसत्त्वेऽपि भ्रमाहार्यज्ञानविलक्षणं किमपि ज्ञानम्, यथा च गोप्यादीनां स्वपतित्वेन कृष्णग्रहणे सत्येव तन्मयतया तदभेदभावना पूतनाशकटादिवधादितल्लीलाभिनयपर्यन्ता, यथा च नलादेर्दमयन्त्यादेर्भेदे गृहीते सत्येव तन्मयीभावोऽपि काव्योक्तः—तथा देवध्यातुर्देवमयत्वमपि घटते । लोकेऽप्यत्यन्ताभिमानवशात् मित्रकलत्रादावभेदावहः प्रीतिप्रकर्षः । ध्यातुर्ध्यानस्य च ध्येयाभेदवाचोयुक्तिश्च तत्रतत्र सर्वात्मना तदितरासंबन्धव्यञ्जनार्था । तथाचातिशयितप्रीतिबलात् ध्यातुः ध्येये वस्तुतो भिन्न एवाभेदाभिमानातिशयात्, स्वात्मनः स्वयम्प्रकाशमानतया

स्वाभिन्नतयाऽध्यवसितस्य ध्येयस्यापि स्वयम्प्रकाशत्वबुद्धौ, ध्यानरूपज्ञानपरिणामोऽप्यस्तीति धीरेव नोदेतीति वृत्तिज्ञानाग्रहणवाद इत्यलं प्रसक्तानुप्रसक्त्या ।

अथोत्तरार्धव्याख्या—एवम्भूतभावनाप्रकर्षात् **निर्विकल्पम्** ज्ञातृज्ञेयज्ञानानां भेदाग्राहिणम् असंप्रज्ञातं **समाधिम्** दर्शनसमानाकारज्ञानम् **अन्तर्विलयमृदुना** सर्वसंस्कारविलयात् औद्धत्यरहितेन निश्चलेन समाधेः प्रशान्तवाहितार्हेण, यद्वा **अन्तर्विलये**ति मनसोऽन्तर्व्रीभावविवक्षा । तेनात्यन्तप्रीतिरूपापन्नत्वस्य ज्ञापनम् । **स्वान्तेन** मनसा **अभ्यस्यन्तीम्** आवर्तयन्तीं मन्ये इत्यन्वयः ॥ २२ ॥

**शून्या दृष्टिः श्वसितमधिकं मीलितं वक्त्रपद्मं**
**धाराकारं नयनसलिलं सानुबन्धो विलापः ।**
**इत्थं दैन्यं किमपि विधिना दुर्निवारेण नीता**
**सा मे सीता तनुतरतनुस्तप्यते नूनमन्तः ॥ २३ ॥**

अभ्यस्यमानसमाधिविच्छेदसमनन्तरभाविनीं दुर्दशां पूर्वार्धेन वदन्, 'मूले तस्याः' इत्यारब्धां तत्स्थितिं निगमयति **शून्ये**ति । अनुस्यूतप्रवाहसमाधिविच्छेदे पक्षिभूषणादिबाह्यवस्तुदर्शनस्यापि वैरस्यवशादभावात् **दृष्टिः** चक्षुः **शून्या** प्रसृताऽपि किञ्चिदालोचनाक्षमा ; बाष्पपूर्णत्वाच्च । **श्वसितं** पतिगात्रसंश्लेषाभावजनितः श्वासः **अधिकम्** आन्तरस्यापि विच्छेदात् अभिवर्धमानम् । **वक्त्रपद्मम्** सरोजसदृशं मुखं समाधिसामयिकहर्षवशात् प्रफुल्लमिव स्थितमधुना **मीलितं** लब्धसंकोचम् । तथा **नयनसलिलं** नेत्रे सर्वदैवोत्पन्नप्रायं **सलिलम्** अश्रु **धाराकारम्** वर्षधारायाः गिरिझरीधाराया वा आकार इव आकारो यस्य तथा । **विलापः** परिदेवनं हा रामेति क्रियमाणं **सानुबन्धम्**, "हा राम हा लक्ष्मण हा सुमित्रे हा राममातः सह मे जनन्या" इत्यनुबन्धिपर्यन्तसंबोधनादिनाऽनुवृत्तम् । अनेनार्धेन, "बाष्पाम्बुपरिपूर्णेन कृष्णवर्णाक्षिपक्ष्मणा । वदनेनाप्रसन्नेन निश्श्वसन्तीं पुनः पुनः" इति वचनमनुसंहितम् । तत्र पक्ष्मणः कृष्णवर्णत्वं स्वाभाविकमनूदितम्, न तु तापकृतमिति तदत्र त्यक्तम् । तत्र तदुक्तिश्च पक्ष्मातिरिक्तभागे वैवर्ण्यातिशयात् एतत्कृष्णवर्णस्फोट्यमिति ज्ञापनाय । वदनाप्रसन्नताकथनेनैव वैवर्ण्यं कथितप्रायमिति अत्राभिप्रेतम् । इत्थं दुर्दशां **सा मे दृष्टि**रित्यादिना वर्णितां निगमयति **इत्थ**मिति । **इत्थं** मया संगृह्य वर्णितप्रकारं **किमपि** अतिविस्तरेऽपि अपूर्णकथनार्हं **दैन्यं** शोचनीयावस्थां **दुर्निवारेण** दुःखेन निवारयितुं शक्येन, त्वया समाश्वासने कृते जीविष्यतीति सपदि सर्वबलसमृद्धतद्राक्षससूदनपर्यन्तमनुवर्तनार्हेण **विधिना** दुष्कर्मणा, "ममैव दुष्कृतं किञ्चिन्महदस्ति न संशयः" इति तयेव मयाप्यनुसंधेयेन **नीता** प्रापिता, **सा**='कथमपि मया वीर्यशुल्केन लब्धम्' इति श्लोकाद्युक्तविभवा मद्दृष्टिभूता **सीता**, **तनुतरा** अतिशयेन कृशा **तनुः** शरीरं यस्याः सा सती, **अन्तः** मनसि, अथवा पूर्वोक्ताशोकवनिकान्तः **तप्यते** अग्निसूर्यादिप्रवेशरहितस्थलेऽपि आन्तरचिन्ताप्रवर्तितेन तापेनाऽऽक्रान्ताऽस्ति । **नूनम्**—पतिव्रतारत्नस्य तस्य नान्यादृशी स्थितिरिति निश्चयः ॥

अथास्य त्रयोविंशतिश्लोकात्मकस्य द्वितीयाश्वासप्रथमभागस्य आध्यात्मिकार्थविषये दिक् प्रदर्श्यते। "दशेन्द्रियाननं घोरं यो मनोरजनीचरम्। विवेकशरजालेन शमं नयति योगिनाम्" इति श्लोकः आध्यात्मिकसंप्रदायविदां प्रसिद्ध एव। एतद्विवरणरूपश्च **संकल्पसूर्योदये श्रीमदाचार्याणां** श्लोकः—

"दर्पोदग्रदशेन्द्रियाननमनोनक्तञ्चराधिष्ठिते
देहेऽस्मिन् भवसिन्धुना परिगते दीनां दशामास्थितः।
अद्यत्वे हनुमत्समेन गुरुणा प्रख्यापितार्थः पुमान्
लंकारुद्धविदेहराजतनयान्यायेन लालप्यते॥" इति।

संसारः सागरः। तत्र लंका दैवासुरविविधविचित्रजनसंकुलं गृहम्। तत्र रावणस्य सद्म कारागृहात्मकं शरीरम्। तत्रत्यो रावणो मनः। तदीयानि शिरांसि दश दशेन्द्रियाणि। तत्र बन्दीभूतो जीवः सीता। तथा सुरस्त्रियोऽपि पतिव्रताः संग्राह्याः। आसुरराक्षसबन्धुवर्गसहवासत्याजनेन सत्पदप्राप्तिकाम-दैवसंपज्जनसंरक्षणाय "साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्। मग्नान् उद्धरते लोकान् कारुण्यात् शास्त्रपाणिना" इति भगवान् स्वस्वरूपेणावतीर्योपदेशापेक्षया सदाचार्यरूपेणावतीर्योपदेश एव फलेग्रहिरिति बहून् आचार्यान् यथाकालं प्रेरयति। तत्र "बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्", "नानृग्वेदविनीतस्य नायजुर्वेदधारिणः। नासामवेदविदुषः शक्यमेवं प्रभाषितुम्" इत्येवं सर्वगुणसंपन्नो जगत्प्राणजन्मा सदाचार्यो भगवता श्रीरामेण प्रेषितः शिष्यशिक्षणं कर्तव्यं विधाय प्रतिनिवर्तते। अथाऽऽचार्यमूलपरिज्ञातार्थप्रतिष्ठापनाय, "बहुभ्यः श्रोतव्यम्', 'बहुधा श्रोतव्यम्" इति क्रममनुसृत्य तदा तदा नानाविधसज्जनसंघटनमपि सर्वेश्वरकार्यमस्ति। **संकल्पसूर्योदये** नवमे अङ्के नारदो विवेकेन व्यज्ञापि, "भगवता निःसमाभ्यधिकनिवृत्तिधर्मात्मना निपुणमस्मन्मनीषिते साहायकमाचरणीयम्। निजदुरितनिदाघनिष्टसजन्तुसञ्जीवनी खलु भव्यवृत्तीनां भवादृशां वागमृतवृष्टिः" इति। तेन समाधिसंपत्त्यव्यवहितप्राग्दशायामपि सत्संगस्यावश्यकत्वे सिद्धे किंपुनः पुरस्तात्। ततः पुनरप्यन्यस्य हंसस्य प्रेषणेन सीतादिजीवसमाश्वासनं कार्यमिति स्वजनरक्षणदीक्षितेन भगवता रामेण निश्चित्य प्रेषयिष्यमाणमाचार्यं हंसं प्रति संसारे स्वजनपरिस्थितिर्वर्ण्यतेऽनेन भावेन—

तत्र सीतावत् अन्येऽपि सात्त्विकजनास्तत्रत्याः सदाचार्यभूतहंसानुग्राह्या भवन्तीति प्रथमं वेद्यते। (1) अनेकैराकारैस्त्वत्साम्यं प्राप्तुमर्हास्तत्र सन्ति। यतः ताः प्रजाः **ललितगमनाः** शास्त्रसंमतरमणीयवृत्तयः, **स्वरशरदृशः** मन्मथं प्रति बाणप्रेषणे तद्विजये दत्तदृष्टयः, **आपाण्डुराङ्ग्यः** सत्त्वगुणसंपन्नाः **मधुरवचसः** सूनृतवाचः मधुरकविदर्शितसदाचार्यनिष्ठारूपसन्मार्गनिष्ठाश्च **मनोज्ञाः** सदाचार्यसाम्यसंपदं वहन्ति। (2) इतोपि श्लाघ्याश्च तत्रा सन्ति लोकपालावरोधाः। 'एष सर्वेश्वरः एष लोकपालः' इति श्रुतिप्रसिद्धस्य भगवतोऽन्तरङ्गान्तःपुरस्त्रिय इव पारमैकान्त्यसंपदमतिशयितां प्राप्ताः। पूर्वमैकान्त्यभाज उक्ताः; इमाः पारमैकान्त्यभाजः। द्रोहिणोऽप्यासुरराक्षसाः इमाः प्रजा दृष्ट्वा, स्वनाशभिया, "द्रवन्ति दैत्याः

प्रणमन्ति देवताः'' इत्युक्तरीत्या दूरमपयन्ति। 'शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः।' अस्पृश्यस्पर्शेऽप्यात्मवर्णशुद्धिरासां नापैति। इमाः वर्णशुद्धाः स्वतिप्रयाः=तवेष्टा भवितुमर्हन्ति। **जनकस्य** सर्वलोकतातस्य भगवतः **तनया** अन्तरङ्गदुहितृस्थानीया या प्रजा तत्संबन्धेन, श्रीभाष्यकार-समाश्रयणेन श्रीदाशरथिप्रभृतिशिष्या इव, आचार्यनिष्ठया स्वरक्षां प्रतीक्षमाणाः तदनुगुणसदर्थोपदेशि-सज्जनसमागमलालसाः सन्ति। (3) एवं सज्जनभूयिष्ठमपि गृहं नानाविधचित्ताकर्षकवस्तुपूर्णं **त्रिकूटं** सत्त्वरजस्तमोमयं रागद्वेषमोहरूपदोषत्रयग्रस्तं च **रक्षसः** मनसः वशंवदमिष्टञ्च स्वयं संपूर्णपरिष्कारमिव, **अमरनगरीं** नित्यसूरिनगरभूतं श्रीवैकुण्ठमपि तिरस्कुर्वदिव दृश्यते। (4) तत्रापि बह्व्यः प्रजाः **स्वर्गस्त्रियः,** ''यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत् सुखं स्वःपदास्पदम्'' इत्युक्तस्वर्गलक्षणसंपूर्णे 'स्वर्गलोका अमृतत्वं भजन्ते', 'स्वर्गे लोके ज्येये प्रतितिष्ठति' 'नाकं महिमानः सचन्ते, इत्युपनिषदादिसिद्धे श्रीवैकुण्ठे भगवत्परिचर्यया वर्तितुमर्हाः तदलाभात् बाष्पं मुञ्चन्त्यः, **चन्द्रालोकैः,** 'सोमो राजा भवति' इत्युक्तरीत्या आपातरमणीयप्राकृतशरीरैरापादिताः **सलिलकणिकाः** दुःखभूयिष्ठाः यत्र **निष्यन्दन्ते** प्रवहन्ति, तत्र कथञ्चित् वर्तते॥ (एवं सुरस्त्रीपदेन सीतातुल्यानेकजीवग्रहणेनाऽऽ-ध्यात्मिकार्थ उक्तः। सीतारूपजीवसंबन्धिदैवसंपदन्तर्गतसात्त्विकानेकगुणविशेषपरतयाऽपि वर्णनं सुकरम्।)

(5) प्रेषितपूर्वेण सदाचार्येण हनुमता सत्संदेशं कृतवता दैवांशविरोध्यासुरराक्षसांशापसरणप्रवृत्तेन (रावणरूप)स्वविरोधिमनःकल्पिमेव व्यापारमद्भुतं स्वलांगूलेऽग्निनिक्षेपरूपमवेक्ष्य लब्धावसरेण पूर्वोक्त-सुरस्त्रीमुखसज्जीवक्षेमोपायविरोधिषु परं भस्मीकृतेष्वपि पुनर्बाधकाभिवृद्धिरासीत्, या क्रमेण समूल-मुन्मूलयितव्येत्युच्यते पञ्चमेन श्लोकेन। **विश्वकर्मादय** इति पदं तत्तत्कालकृतनानाविधबन्धककर्म-तदधीनवासनारुच्यविद्यादिपरम्। **भासे**त्यादिना प्रथमपादेन हनुमद्रूपाचार्यः स्वोपदेशजनितेन नैसर्गिक-सीताख्यजीवगतगुणव्यापारविशेषेण तज्जीवक्षेमविरोधिनिरसनं यथार्हं कृतवानित्युच्यते। (6) तत्र नानाजनसमृद्धे गृहे मुख्यजीवायतनं देहमाह **मध्ये** इति। **निशिचरपतिः** दुष्टं मनः। **रुद्धान्तरिक्षम्** भगवदावासहृदयव्योमरोधकम्। तत्रत्यभगवद्रूपध्यानवारकांशसमृद्धमिति यावत्। **युग्मं नेयैः** सुखदुःख-रागद्वेषादिरूपद्वन्द्वप्रापकैः **सुमनसां** भगवद्भक्तिप्रतिबन्धकत्वेन प्रसिद्धानां देवानां **विमानैः** विशिष्टाहंकारमूलकैर्दुरुपायैः सेवितम्। **कारागारं विबुधसुदृशाम्** ये बुधाः मोक्षप्राप्तिदृष्टयश्च। तेषां दृष्ट्या काराकल्पं वपुः वीक्षमाणः **शोकप्रीतिव्यतिकरवतीं चित्तवृत्तिम्** बाधकभूयिष्ठेतच्छरीरनिविष्टो जीवः कथं बन्धान्मोक्ष्यत इति शोकः। 'शरीरमाद्यं खलु धर्मसाधनम्', 'महता पुण्यपण्येन क्रीतेयं कायनौः' इति उपदेशार्हदेहलाभात् प्रीतिः।

(7) रक्षस्सद्मरूपे शरीरे निष्कुटभूतमशोकवनं हृदयम्। तस्य 'तत्रापि दहं गगनं विशोकः' इति अशोकपरमात्मस्थानत्वात् अशोकवनत्वम्। जीवस्यापि औपाधिकशोकत्वेऽपि स्वरूपेणाशोकत्वाच्च। **वृक्षवाटी** च नाड्यः, ''हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते। ताभिः प्रत्य-

वस्तृप्य पुरीतति शेते" (4) इति, 'ता वा अस्यैता हिता नाम नाड्यः यथा केशः सहस्रधा भिन्नः तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णाः' (6) इति च **बृहदारण्यके** स्वप्नस्थानभूतानेकनाडीश्रवणात्। हृदयस्य नाडीवेष्टितत्वञ्च, 'संततं सिराभिः' इति **तैत्तिरीयके**ऽप्युक्तम्। तासां नानावर्णरक्तरसपूर्णता तत्रोक्ता। अशोकवने चानेकजातीयवृक्षसद्भावात् नानावर्णता निर्विवादा। आसां स्वप्नस्थानत्वात् यदा वातपित्तश्लेष्मणां मध्ये कस्यचित् **धातोरीषत् कोपः** अन्यथाभावः स्वप्नभञ्जको भवति, तदा जीवस्तत्र स्थितं जाग्रद्देशं सुषुप्तिदेशं वा प्रापयितुं जीवस्य सहायभूतः **पवनः** प्राणवायुस्तदनुगुणं चलतीति ज्ञाप्यते, **ईषत्कोपाचकितपवनामि**त्यनेन। तत्र जीवात्मनः स्वप्नानुभवव्यापृततयाऽधिकं प्रकाशमानत्वेऽपि बहुजीवानुभाव्यबहुकालस्थायिबाह्यपदार्थानुभवविरहात्, "तदभावो नाडीषु तच्छ्रुतेरात्मनि च" इति सुषुप्तिस्थानतया अपि नाडीषु कथनात्, आत्मनः ईदृशोऽहमिति सर्वाकारवत्तया प्रकाशाभावाच **इन्दुसंदिग्धसूर्यं** **तत्र** **वृक्षवाट्याः**। जीवात्मा स्वरूपमात्रेण धर्मभूतज्ञानं विना स्वल्पमेव प्रकाशते इति सूर्यस्य तस्येन्दुत्वम्। स्वप्ने च, 'संध्यं स्वप्नस्थानम्। तत्रोभौ संचरति इमञ्च लोकममुञ्च। दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्च' इति सर्वफलानुभवात् नाडीनामुदारता **नित्योदारामृतुभिरखिलैरि**त्युच्यते। तत्र जीवसंबन्धिहर्षशोकहेतुपुण्यापुण्यफलसमृद्धतया, '**सीताशोकज्वलनसहजैस्तत्र दीप्तामशोकैः**' इत्युक्तिः। **आञ्जनेयप्रचारैः प्रथमलुलित**त्वञ्च आचार्यकृतदेहात्मपरमात्मविवेचनोपयुक्तवावप्रचारैरधिकजागरव्यापारतया स्वप्नव्यापारन्यूनतयेति रीत्या भाव्यम्।

(8) उक्तनाडीसंततहृदयमध्यस्था शिंशपा वर्ण्यते। शिंशपा चेयं हृदयव्योम वा तद्गतान्तर्यामिरूपं वा। 'प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः', "हृदि ह्ययमात्मा, तस्यैकशतं नाडीनाम्" इति तत्रैव जीवात्मनोऽपि स्थितिः। **वियति विहगाः**। "तस्यान्ते सुषिरं सूक्ष्मम्" इति प्रसिद्धहृदयसुषिररूपवियद्गतं, "दहरोऽस्मिन् अन्तर आकाशः", "तत्रापि दहं गगनं विशोकः" इति प्रथितपरात्मविषयकानुभवानन्दभरिता महान्त एवाऽऽनन्दनिघ्ना विहगाः। तैः सह हंसस्यानुभवकर्तृत्वम्, "मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्। कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च" इति रीत्या। **शिंशपां** परमात्मरूपं प्रकृतजीवस्य तत्समीपे हृदयान्तर्वासात् अस्य **दुर्जातबन्धुं** व्यसनकाले रक्षकम्। बाह्यानुभवासामर्थ्ये आयस्ततादशायां निद्रया बाध्यमानस्य, "सता सोम्य तदा संपन्नो भवति", "प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति भगवत्संश्लेष एव ह्यायासपरिहारकः। सा **सान्द्रशाखा** सर्वफलप्रदकल्पकशाखायमानभुजचतुष्टयशालित्वात्। **न्यस्ताकल्पता** च तस्याः सर्वेन्द्रियैस्सह तत्राप्ययात् प्राणभूते तस्मिन्नेव स्वभूषणभूतानामिन्द्रियाणामर्पितत्वात्॥

(9) अथ तत्र य आत्माऽस्ति, तमेव त्वं शास्त्रमुखेन यथावत् दृष्ट्वा, अयमेवास्मदुपदेशग्राहीति च विभावयेति तमात्मानं दिव्यरत्नमुपदिशति। तदात्मस्वरूपं मे दिव्यरत्नम्। अप्राकृतकौस्तुभायमानम्। मदीयकौस्तुभाभिमानितम्। तस्याः शिंशपाया भगवतः मूले पदारविन्दे स्थितम्। **सवनक्षेत्रे** सर्वजीवो-

त्पत्तिभूमौ प्रकृत्यां **संस्कार**वशात् प्राचीनकर्मवशात् **जातं** लब्धप्राकृतशरीरम्। यद्वा क्षेत्रे शरीरे स्थितमेव पूर्वप्रेषितहनुमद्रूपाचार्यकृतात् विद्यार्थोपनयनसंस्कारात् **जातम्** लब्धाध्यात्मज्ञानम्। भयस्थानेष्वपि मदेकरक्ष्यत्वाध्यवसायात् निर्भयम्। महिमवत्त्वाच्च 'द्रवन्ति दैत्याः' इति परैर्भीत्या विवर्जितम्। "आत्मना विन्दते वीर्यम् विद्यया विन्दतेऽमृतम्' इति वीर्यबलात् देवतान्तरसंबन्धप्रसक्तिरहितया पारमैकान्त्यसंपदा मया समाहृतं **दिनकरकुलद्योतकं** सूर्यकोटिप्रकाशाधिकप्रकाशशालि, दिनकरायमाणशिष्यकुलप्रकाशप्रदानार्हमहिमशालि त्वया दृश्यम्। परस्सहस्रसुरयुवतिसंरक्षणव्यग्रा सीता बहुशिष्यहितोपदेशकाचार्यकार्हा भाव्यते। तत्रत्यासु सुरयुवतिषु हनुमद्गमनात् पश्चादागताः काश्चित् भवेयुः। ताः सर्वथा हनुमता न दृष्टा इति हंसरूपाचार्यदृष्टेरेव प्रथमं पात्रीभवन्ति। पूर्वमेव तत्र स्थिता अपि हनुमद्दृष्टेरगोचरा एवम्। हनुमत्संदृष्टसीतालम्भितसमाश्वासा अपि काश्चित् भवेयुः। तदेवं नानाविधसदुपदेशप्रतीक्षशिष्यजनहितकरणं पुनः प्रेष्यमाणाचार्याधीनमित्युक्तं भवति।

(10) 'ज्ञानी त्वात्मैव मे मतम्' इति रीत्या स्वाभिमतं तद्रत्नमाचार्यः प्रशंसति **सेति**। **तन्वी** देहधारणार्थमात्रग्रहणेन तपःकृशा, **बाला** 'पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इति रीत्या स्वमाहात्म्यानाविष्कारिणी। **युग्मस्तप्रतिमगमना** मन्दगतिः; 'दृष्टिपूतं पदं न्यसेत्' इति शास्त्रमनुसरन्ती कर्तव्येषु कर्मसु यथावत्परिशील्य सश्रद्धमत्वरितं यथावच्चिकीर्षया प्रवर्तमाना च। **शृङ्गाराख्यं निधिमधिगता** भगवद्भक्तिं शृङ्गाररूपेण गोपीगोदादिदिव्यसूरिनयेन प्राप्ता। अत एव **श्रेयसी देवता** श्रीदेवीव स्थिता। एवं **सा ते** इति (11) श्लोकस्याप्यर्थो भाव्यः। (12) **आकल्पान्** मद्भूषणानि किरीटादीनि शंखादीनि च प्रति **आलपन्ती**। यथा गोदादेव्या, "हे शंख! भगवतोऽधरबिम्बं किं कर्पूरगन्धि किं वा कमलगन्धि। रसश्च कीदृशः, ब्रूहि। कथं बहुदारसमास्वादनीयमेकाकी त्वमेवाऽऽस्वादयसीत्येवमादि आलपितम्, तथा कुर्वाणा, श्रीभूमिनीलादिदेवीनामनन्तभोगे शय्यायां नानाविधेष्ववतारेषु विहारान् प्राप्तान् कदाचित् लुप्तांश्च ध्यायन्ती, प्रकृतिमण्डलस्य भगवदनुभवविघ्नविधायित्वं चिन्तयन्ती स्यात्। (13-14) **शुद्धामित्यादि**श्लोकद्वयस्याप्यर्थो भाव्यः। (15) **स्मरशरभये**—पूर्वं कामवश्यतया किमप्यकृत्यं भवेदिति 'बहवो ये नानात्ययाः कामाः व्याधिभिः प्रतिपूर्णोऽस्मि' इत्युपकोसलवत् भीत्या 'वहति महिलाम्....मदनकदनैर्न क्लिश्यन्ते यतीश्वरसंश्रयाः' इति विभाव्य सत्सूक्तिसेवनदशायां सदाचार्यविहितां मन्मथमन्मथभूतमद्दिव्यमंगलविग्रहगुणाद्यनुभावनरूपां रक्षां स्मृत्वा **स्वां मातरमाश्लिष्यन्तीम्**। यदा मे मातापित्रोर्जन्म, न तदा जन्म; आचार्यसकाशात् यदा ज्ञानोदयः तदैव जन्मेति विभाव्य दिव्यसूक्तिसंहतिरूपां स्वकीयां मातरं सावधानप्रवर्तिताभिः चक्षुश्श्रोत्रमनोबुद्धिरूपैरंगैराश्लिष्य तदर्थानुभवपराम्। स्मरशरभयेनात्र प्रवृत्तत्वात् कामोद्रेकहेतूनां भूषणानां धारणे चन्दनलेपनपुष्पधारणादावपि लब्धखेदाम् मनसोऽतिसुकुमारत्वात् परस्पर्शमात्रेणापि म्लानिमाशंक्य स्त्रीतदनुबन्धिविषयकस्मरणमपि त्युक्तुं प्रवृत्ताम्। (16) भूयोभूयः भगवत्प्रसादभूतपवित्र-पद्मतुलसीमालिकादिस्पर्शनधारणतन्महिम-

तच्चिन्तनादिना निर्विशन्तीम् । (17) आचार्यप्रसादलब्ध-विलोपनानर्ह-तप्तशंखचक्रादिचिह्नानामपि लोपावहसंतापभूमप्रापितवैवर्ण्याम् । (18) शरीरकार्श्येऽपि शिखाहानिप्रसक्त्यभावात् सुरक्षितायाः शिखायाः संस्कारादिविरहाच्चेषद् विकृताम् । (19-20-21) मह्यं समर्पितैरेवावश्यधार्यैः वस्त्रभूषणादिभिरात्मानं कृतार्थयन्तीम् । (22) किं बहुना, आचार्यप्रसादेन प्राक्तनसुकृतवशेन चाष्टाङ्गयोगाधिकारं प्राप्य कर्मयोगज्ञानयोगयोर्मुखेन जीवात्मानमध्यक्ष्य यमनियमादिपुरस्कारेण संयमे प्रवृत्य धारणाम् अविच्छिन्नस्मृतिसंततिरूपं ध्यानम् , दर्शनसमानाकारं समाधिं संप्रज्ञातमसंप्रज्ञातञ्च प्राप्ताम् । (23) एवं सर्वसंपत्तावपि चिरविरहासहिष्णुतया यथावत्पूर्तये खिद्यमानां मन्ये । एतादृशाधिकारिविषयेऽपि महतामनुग्रहस्य आवश्यकता विवेकमहाराजेन पुरुषं मुमुक्षुं प्रति श्रीनारदप्रेषणात् ज्ञायते इति **संकल्पसूर्योदय**संदर्भप्रदर्शनेन ज्ञापितमनुसंधेयम् । **तदेवमाध्यात्मिकार्थसारसंग्रहः** ॥ (१-२३) ॥

(81) **दृष्ट्वा तस्यास्त्वमपि करुणां तादृशीं तामवस्थाम्**
**शक्ष्यस्यन्तः स्वयमुपनतं शोकवेगं न सोढुम् ।**
**क्रव्यादानां दशवदनवत् क्वापि जातास्वजाता**
**नालम्बन्ते कथमिव दयां निर्मलत्वोपपन्नाः ॥ २४ ॥**

सा मे सीतेति वदता रामेण दुर्निवारविधिप्रापितदैन्यत्वमुभयोः समानमिति दर्शितम् । 'शून्या दृष्टिः श्वसितमधिकं मीलितं वक्त्रपद्मम् । धाराकारं नयनसलिलं सानुबन्धो विलापः' इतीदं सर्वं मच्चिह्नं यत् त्वद्दृष्टम् , इत्थं दैन्यं तस्या अपीत्युक्तं भवति । एतद्दशानिरीक्षणेन हंसस्ताम्यतीति विचिन्त्य, सीतादशावर्णनकालिकमद्दुःखदर्शनजं दुःखमस्तु नाम । साक्षात् तां दृष्ट्वा सोढुमशक्यं शोकवेगं लप्स्यसे । एवमेव हि अत्यन्तप्रियमद्दुःखदर्शनमात्रेण दुःखी सीताकथन्ताचिन्तारहितो हनुमानपि तां दृष्ट्वा तदैवाऽऽह स्म, "इमामसितकेशान्तां शतपत्रनिभेक्षणाम् । सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः" इति । इति हंसगुणं श्लाघते **दृष्ट्वेति** । **त्वम् अपि**=हनुमानिव त्वमपि **तस्याः** सीतायाः **करुणां** शोकावहां **तादृशीं** मदुल्लिखिततुल्यानेकप्रकारां **तां** ममापरोक्षां त्वया द्रक्ष्यमाणाम् **अवस्थां** दुर्दशां **दृष्ट्वा अन्तः** त्वन्मनसि **स्वयम्** त्वदीयनिरोधप्रयत्नमप्यतिक्रम्य स्वयमेवोपनतं शोकवेगं **सोढुम्** अनभिवृद्धं कर्तुं न **शक्ष्यसि** न शक्तो भविष्यसि । 'कथं नु तत्रत्याः तामवस्थां दृष्ट्वाऽपि सहन्ते' इति चेत्, तत्राह **क्रव्यादानामिति** । **दशवदनवत्** । रावणो हि सीतां प्रत्यप्येवमाह, "ऊर्ध्वं द्वाभ्यां तु मासाभ्यां भर्तारं मामनिच्छतीम् । मम त्वां प्रातराशार्थमालभन्ते महानसे ॥" इति । एवमेतत्खादनमपि कामयतः क्रव्यादत्वं हि क्रूरतमम् । तद्वत् **क्रव्यादानां** मांसाशिनामसुरराक्षसानां क्वापि जातौ ये न जाताः, ते, तत्रापि **निर्मलत्वोपपन्नाः**, यथा त्वं सुरभिलमृणालाग्रमकरन्दादिरूपेण पावनेनाऽऽहारेण प्राप्तसत्त्वोद्रेकः, तथा निर्मलत्वेनोपपन्नाः=सहिताः कथमिव दयां नालम्बन्ते । तत्र जातौ जातास्तु निर्मला अपि जातामपि दयां **नालम्बन्ते**, न कार्यकारीं कुर्वन्ति, न विशेषतो भजन्ति । अन्ये तु

भजन्ति। अत एव रावणसविधेऽपि, सीता रावणादत्यन्तभीता मा भूदिति देवगन्धर्वकन्यादयः, "ओष्ठ-प्रकारैरपराः वक्त्रैर्नेत्रैस्तथा पराः। सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥" (सु. 23.) ॥ २४ ॥

(85) **नेदीयस्यामधिगतरसो दीर्घिकायां निकामं**
**संवेशेन श्रममपनयन् शर्वरीं यापयेथाः ।**
**इत्थं निद्रासमयमुचितं वीक्ष्य नक्तंचरीणां**
**प्रत्यूषे त्वं प्रणयमधुरां श्रावयिष्यन् मदुक्तिम् ॥ २५ ॥**

एवमसह्यशोकवेगेनापि त्वया तत्रावसरं प्रतीक्ष्यैव प्रिया समाश्वासनीयेति वदन् तावत्पर्यन्त-कालयापनक्रममाह **नेदीयस्यामिति**। अत्र पूर्वोत्तरार्धयोर्विपरिवर्तः संभाव्यते। त्वं **प्रत्यूषे** प्रभाते अहर्मुखे **नक्तश्चरीणां** राक्षसीनां रात्रौ संचरन्तीनां निद्रारहितानां **निद्रासमयं** यस्मिन् भागे ता निद्रान्ति, तं भागं **वीक्ष्य** विशेषेण दृष्ट्वा, **प्रणयमधुराम्**। **प्रणयः** प्रार्थना, प्रेम, विस्रम्भश्च। मम तव च तस्यां यत् प्रेम, तेन **मधुरां** भोग्याम्, किञ्चित्कालप्रतीक्षाप्रार्थनागर्भां तद्विस्रम्भावहां **मदुक्तिं** मया क्रियमाणं संदेशम् **इत्थं** वक्ष्यमाणप्रकाराम् यद्वा वक्ष्यमाणप्रकारेण मैथिलीं **श्रावयिष्यन्** यथा सा परं शृणुयात् तथा वक्ष्यन्; प्रत्यूष एव वचनसमय इति हनुमानिव निश्चिन्वन्निति यावत्। "कृत्रिमां दीर्घिकाश्चापि पूर्णां शीतेन वारिणा। मणिप्रवरसोपानां मुक्तासिकतशोभिताम्" इति कृत्रिमा वापी मौक्तिकसैकतमनोहरा वारिपूर्णा विराजत इति हनुमतोक्तत्वात् तस्याम्, **नेदीयस्याम्** अतिसमीपवर्तिन्यां **दीर्घिकायां** वाप्याम् **निकामं** यथेच्छम् **अधिगतरसः**। **रसो** जले पुष्पासवे च। **अधिगतः** प्राप्तः स्वाभीष्टरसो येन तादृशस्सन् दीर्घिकायामेव **संवेशेन** शयित्वा **श्रमम्** अध्वश्रान्तिं क्षुधञ्च **अपनयन्** अप कुर्वन् **शर्वरीं** उषःकालप्रागंशरूपां पूर्णां रात्रिं **यापयेथाः** अतिवाहय। ईषत् संवेशेनापनीतश्रमोऽपि प्रत्यूषकालप्रतीक्षः तत्रैव रात्रिं तां यापय। **श्रावयिष्यन्** इत्यनेन (न्यायभाष्योक्तरीत्या) उत्थानकाल विशेषं प्रणिधाय निद्राणानां तस्मिन् अवसरे प्रबोधः प्रायेण भवतीत्यपि ज्ञाप्यते। श्लोके **अधिगतरसः श्रममपनयन् इत्थं मदुक्तिं श्रावयिष्यन् संवेशेन शर्वरीं यापयेथा** इति वाऽन्वयः। एवञ्च **नेदीयस्या**मित्यादेः पूर्वपाठस्यौचित्यम् ॥ २५ ॥ (८५)

(86) **शीतैरध्वश्रमविनयनैः सेवितो गन्धवाहैः**
**सुप्तः स्वैरं पुलिनशयने स्वन्तरे चन्द्रपादैः ।**
**क्रीडागीतैः कमलमुकुले दीव्यतां(लीयतां) षट्पदानां**
**कार्याकाङ्क्षी कलयतु भवान् राजहंस! प्रबोधम् ॥ २६ ॥**

प्रणिधानवशात् स्वयमेव समये प्रबुद्धो भविष्यसीति सूचितम्। यदि संवेशस्थानसौकुमार्याति-शयात् स्वयं प्रबोद्धुं न पारयेः, तदाऽपि षट्पदकूजितानि प्रबोधयेयुरित्याह **शीतैरिति**। हे राजहंस! मदीयकार्याकांक्षी **भवान्** मुक्तासिकतशोभितामिति श्लाघितायां तस्यां दीर्घिकायां **चन्द्रपादैः** चन्द्र

किरणैः मनुष्यापेक्षितत्वतूलिकातिशयितैः **स्वन्तरे** शोभनमध्यप्रदेशे **पुलिनशयने** सैकतरूपशय्यायाम् । **शीतैः** दीर्घिकातरंगसंबन्धाल्लब्धशैत्यैः । **अध्वश्रमविनयनैः** अध्वनि जातस्य श्रमस्य परिहारकैः **गन्धवाहैः** कमलादिपरिमलप्रदैः मन्दमारुतैः **सेवितः** कृतोपचारः अत एव **सुप्तः** निद्रां प्राप्तः प्रत्यूषावसरे **कमलमुकुले** कमलजातीयेषु ईषद्विकसितेषु कुसुमेषु **दीव्यतां** निर्गमावकाशलाभात् विहरतां विलसतां वा **षट्पदानां** षडपि पदानि प्रसारयतां मधुपानां **क्रीडागीतैः** लीलारूपगानव्यापारैः प्रबोधम् उन्निद्रतां **कलयतु** लभताम् । प्रथमतः श्रमापनयनार्थं स्वीकृताः शैत्यसौरभ्यादिविशिष्टाः मन्दमारुताः श्रममपनीय निद्रामप्युत्पादयेयुः । तस्यां दीर्घिकायां मुक्तामयपुलिनसद्भावात् तत्र सुधामयचन्द्रकिरणप्रसराच्च गाढः स्वापोऽपि भवेत् । तावता त्वदाकांक्षितस्य मदीयकार्यनिर्वाहस्य न भंगो भविष्यति । किंतु त्वच्छरीरस्वास्थ्यादानुकूल्यमेव । तत्र कमलेषु एकैकस्मिन्नपि बहवो मधुपाः रात्रौ मधु पीत्वा तदवसरे तन्मीलनवशात् निर्गन्तुमप्रगल्भाः शयिताः प्रत्यूषे ईषद्दलनसमये एव समोदं प्रतिष्ठेरन् । प्रस्थानवशाच्च गीतं प्रादुर्भवेत् । ततस्ते सुलभः **प्रबोध** इति ।

अत्र **लीयतामि**ति पदमेव दृश्यत इति तस्य षट्पदविशेषणातायां साधुत्वसंपादनाय प्रयस्यन्ति; **लीनतां पीयता**मित्यादि पाठान्तरं च भावयन्ति । मैवम् **मुकुल**शब्देन ईषद्विकसितावस्थमेवोच्यते इति स्वीकृतत्वात् षट्पदानां सञ्चारकाल एव गीतिसंभवाच्च, लयस्य पूर्वकालिकत्वेऽपि तदातनत्वाभावेन **लीयता**मिति वर्तमाननिर्देशस्याप्यस्वरसत्वाच्च । अत एव **लीनतां** लीनवदाचरतामिति कैश्चित् व्याख्यातम् । तदर्थविवक्षायां **मीलता**मिति साधुशब्दप्रयोगस्यैव संभावितत्वाच्च। वस्तुतश्चलनार्थलाभाय **चेलतां खेलतां** श्लिष्यतामित्यादिसाधुशब्दप्रयोग **एवाचार्यैः** कृतः स्यात्। **दीव्यतामि**ति युक्ततरम्--**ईकारयकार**रक्षणात्; क्रीडाद्युतिस्तुतिमोदमदकान्तिगतिरूपापेक्षितानेकार्थलाभाच्च। तत् किमनेन लेखकप्रमादपतितशब्दरक्षणसंरम्भेण क्लिष्टकल्पनान्तरेण वा। **कमलमुकुल** इति । बहुत्वविवक्षायां सत्यामपि एकवचनप्रयोगः एकैकत्र षट्पदा बहवो लीना इति ज्ञापनार्थः। **ली** इति धातुमात्रस्य नामत्वकल्पनया **लीं** लयं **यतां** प्राप्नुवतामिति सुशब्दत्वसंपादनप्रयास आद्रियेत, यदि लयस्य वर्तमानता स्यात्। इत इहाऽऽचार्य एव प्रमाणम्।

अत्र **राजहंसे**ति संबोधनात् हंसस्यास्य राजत्वावगमनात् यथा राजा **चन्द्रपादैः** स्वर्णमयपादचतुष्टययुक्तायां खट्वायां शोभनान्तरे **शयने** सुप्तः शीतहृदय-गन्धाद्यानेतृपरिजनसेवितः **षट्पदानां** नानापद्यगद्यमूलस्तवनसमर्थानां वन्दिवैतालिकानां क्रीडागीतिश्रवणेन प्रबोधं प्राप्नोति, तथा त्वमिति कथनात् शत्रुस्थानेऽपि हंसस्य माननमेव । स्वर्णमुखर्यादिस्थानलम्भितात् आनन्दादप्याधिक्यमत्रेति हंसस्य प्रवृत्तिप्ररोचना च कृता भवति ॥ २६ ॥ (८६)

(87) **तामारूढश्चलकिसलयां शिंशुपां स्वैकलक्ष्यो**
**मन्दीकुर्वन् मनसिजधनुर्घोषतीव्रं निनादम् (प्रणादम्) ।**
**मोहादीषन्मुषितमनसं बोधय प्रेयसीं मे**
**रम्याभाषो रघुजनकयोर्वर्णयन् वंशकीर्तिम् ॥ २७ ॥**

अथ प्रबुद्धेन न झटिति सीतायाः पुरतो गत्वा स्थित्वा संभाषणारम्भः कार्यः ; किंतु हनुमतेव शिंशपायां लीनेन तदाहृतमार्गेणैव सीतायाः प्रत्ययोत्पादने प्रयतितव्यमित्याह तामिति । ताम् यस्या अधस्तात् प्रेयसी वसति, यामेव प्राक् हनुमानप्यारूढ आसीत्, ताम् । चलकिसलयाम् शिंशपादलानां चलत्वमन्यापेक्षयाऽधिकमिति चिन्त्यते । 'अयं वृक्षः शिंशपायाः' इति तादात्म्यानुमानादिविचारावसरे चलशिंशपेत्यादिव्यवहारो दृश्यते न्यायकुसुमाञ्जल्यादौ । सान्द्रकिसलयत्वात् निलीय स्थितिः सुकरा, चलत्वाच्च प्रवेशसौकर्यमिति एवं विशेषणम् । तथाविधां शिंशुपाम् । मध्यमः शकार उकारघटित एव श्रीमद्रामायणादावपि प्रयुज्यते । व्याकरणग्रन्थे तु शिंशपेति प्रयोगो लक्ष्यते । अन्यत्रापि प्राच्यग्रन्थे अकारान्तपाठोऽपि । अमरकोशादर्शे शिंशुपा, शिंशपेति उभयमपि स्वीकृतम् ; रोगं शिनोति निशातयतीति इति अर्थश्च दर्शितः । आरूढः । नात्र अधस्तनभागादुपर्यारोहणविवक्षा । किंतु गगनमार्गेण गतस्य तस्योपरितनशाखासंबन्धमात्रं विवक्षितम् । आरुह्य लीनो भवेत्याह स्वैरु लक्ष्यः इति । स्वेन त्वया एकेनैव स्वयं लक्ष्यो भवन्, अन्यादृश्यो भवन् । एवं निलीनत्वे कथं सीतया दृश्यत्वमित्यत्र प्रथमतस्त्वन्नादाश्रवणमेव कार्यमित्याह मन्दीत्यादिना । वंशकीर्तनावसरे ध्वनेस्तारत्वे कामवर्धकता स्यात् ; हंसरुतस्य तारत्वात् तथाविधत्वाच्च । तथा अन्येषामपि कर्णकुहरं प्रविशेत् । अतो मन्दीकरणप्रार्थना । मनसिजस्य मन्मथस्य धनुषः चापस्य यो घोषः ज्याघोषः तद्वत् तीव्रं तारम् । मधुकरराजेः मन्मथज्यात्वेनोत्प्रेक्षणं तत्र तत्र भवति । अस्तु वा हंसध्वनेस्तत्कार्यकरत्वात् हंसस्यैव ज्यास्थानीयत्वम् । ईदृशं स्वाभाविकं निनादं मन्दीकुर्वन् । अमन्दं मन्दं कुर्वन् । ननु नादस्यामन्दस्य जातत्वे कथं मन्दीकरणम् । मन्द्रस्वरस्यैवोत्पत्तौ च कथममन्दस्य मन्दीकरणम् । न च प्रणादानुकूलव्यापारस्य निसर्गादमन्दतयोत्पन्नस्य नादमन्दीकरणमिति वाच्यम् ; तदापि व्यापारे तीव्रे उत्पन्ने तीव्रनादोत्पत्तेरावश्यकत्वादिति चेत् — स्वाभाविकामन्दत्वज्ञापनायैवं प्रयोगः । अमन्दनादजातीयोत्पादकत्वं मन्दनादव्यक्तिमुत्पादयन् इत्येवार्थः । मन्दनादानुकूलप्रयत्नो भवन्नित्युक्तं भवति । आदौ उपक्रमे रघुजनकयोः मद्वंश्यप्रधानस्य तत्पितुश्च च यौ वंशौ तयोः कीर्तिं यशः रम्यां स्वभावत एव रमणीयां विशिष्य संप्रति सीतामनोरञ्जकतया वर्णयन् । हनुमानप्येवमेव प्रारेभे । परंतु 'राजा' दशरथो नाम' इति मद्वंश्यवर्णनमेवाकार्षीत् । जानकीमिति निर्देशमात्रम् ; न तु तद्वंशप्रभावो मात्रयाऽप्युक्तः । तथा मा भूत् । मया तु दिव्यरत्नतया तद्वर्णनावसरे वंशद्वयमहिमा सूचितः, वीर्यशुल्केन मयैषा प्राप्तेति । तथा चेत् त्वया प्रस्तूयेत, वंशद्वयवर्णनं कृतं भविष्यति । तदा हनुमत्तोऽपि त्वय्यधिको विस्रम्भोऽस्या भविष्यति । एवं कुर्वन् मे प्रेयसीं बोधय । न सा निद्रापरवश्यं कदापि भजेत । अथापि प्रबोधः कार्यः, मोहाक्रान्तत्वात् । मन्ये हनुमद्वचनात् प्राक् यावान् मोह आसीत्, न तावान् अद्य । एवमपीषत् अल्पं मुषितमेव तन्मन इति । ततो निवर्तनं त्वया कार्यम् । रक्ष एव कामरूपं किमपि ब्रूयादिति मोहोऽपि यथा न स्यात्, तथा प्रबोधनपरश्च भव ॥ २७ ॥ (८७)

(88) पत्युर्देवि प्रणयसचिवं विद्धि दीर्घायुषो मां
जीवातुं ते दधतमनघं तस्य सन्देशमन्तः ।
शूराणां यः शरदुपगमे वीरपत्नीवराणां
सम्मानार्हं समयमुचितं सूचयेत् कूजितैः स्वैः ॥ २८ ॥

वंशद्वयकीर्तनानन्तरकर्तव्यमाह पत्युरिति । हे देवि ! लक्ष्मणादिभिरिव मयाऽप्याराध्ये ! दीर्घायुषः दीर्घमायुर्यस्य तस्य । अनेन विशेषणेन मत्संदेशश्रवणेन जीवन्तीं त्वां प्राप्य स दीर्घं जीविष्यतीति सूच्यते । पत्युः त्वत्प्रियस्य, प्रणयसचिवम् प्रणयेन प्रार्थनया गुणदर्शनजन्यपारवश्यकृतप्रार्थनावशात्-अथवा स्नेहेन, सचिवं सहायभूतं मां विद्धि जानीहि । किं साहायकं त्वत्तः प्रतीक्षितमिति चेत् , श्रूयताम् । अनघम् अवद्यविरोधिमंगलकरं ते जीवातुं त्वत्प्राणपरिरक्षकं संदेशं उपदिष्टवृत्तान्तम् अन्तः मनसि । न तु लेखपेपणम् ; मम स्वत एव सर्वकथनसमर्थत्वात् । दधतम् धारयन्तम् तत्कथनेनैव सचिवीभविष्यन्तं विद्धि । स्वस्य हंसपक्षित्वं हंसानां सीतापेक्षितकार्येऽन्वयश्च ज्ञापयति शूराणामिति । यः अहं मज्जातीयश्च शरदुपगमे शरत्कालप्रत्यासत्त्यवसरे स्वैः कूजितैः स्वकीयैः मधुरनादैः वीरपत्नीवराणां वीराणां याः पत्न्यः तासु वराणां भवतीसदृशीनां संमानार्हं तत्क्रियमाणश्लाघायोग्यम् , अस्मद्भर्तॄणां विजयप्रदः काल आयातीति संमाननीयम् । वीरपत्नीवराणामित्यस्य शूरविशेषणत्वमपि । वीराश्च ताः पत्न्यश्च । ताभिर्वरणीयानामिति । तेन वेदवती वीरा भूत्वा रावणसंहाराय बद्धपरिकरा तदर्थमेव रामपत्नी भवितुं सीतारूपेणावतीर्णा रामं वव्र इति सूच्यते । त्वदपेक्षितपूर्तिसमयसूचनं मम कार्यमित्युक्तं भवति । तदा संमानार्हमित्यस्य सर्वसंमानास्पदमित्यर्थः। शूराणां सूचयेत् । यद्वा शूराणाम् उचितम् शौर्यशालिपुरुषचित्तानुरूपं तदभीष्टं समयं सूचयेत् । शूरेभ्यः शूरपत्नीभ्यश्च निवेदयेत् । हंसध्वनिश्रवणेन न केवलं शूराः, शूराणां युद्धकाल आगत इति सर्वलोकस्थाः सर्वे जानीयुः। अत शूराणां सूचयेदित्यन्वयापेक्षया उक्तान्वयक्रम उचितः। त्वद्भर्त्रे समयं सूचयित्वा तुभ्यमपि सूचयितुम् , अनेन मुखेन तवेप्सदनुकूलं कर्तुञ्च स्थितोऽस्मीति वदन् स्वस्य हंसत्वमाविष्करोति ॥ २८ ॥

(89) मत्प्रस्तावश्रवणमथ सा मैथिली भावयेत् त्वां
म्लानं शोकात् वदनकमलं किञ्चिदुन्नम्य भीरुः ।
अन्तस्तोषादमृतलहरीलब्धसब्रह्मचर्यैः
अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः ॥ २९ ॥

स्वप्रस्तावश्रवणसंप्रीतायाः सीतायाः संदेशश्रवणाभिमुख्यशेषभूतं समीक्षणमाह मदिति । पूर्वश्लोकस्य तत्पूर्वश्लोके बोधयेति पदोक्तबोधनाकारसमर्पकत्वात् एवं बोधयेरित्यर्थसमाप्त्या, अत्र अथेत्यस्य बोधनानन्तरमित्यर्थः । सा मोहादीन्मुषितमनाः भीरुः कामरूपराक्षसकृत्यज्ञानात् भीतैव स्थिता, सा भीरुः=हनुमद्दर्शने भीता च मैथिली शोकात् दुःखानुवृत्त्या म्लानं क्षीणशोभं वदनकमलम् अरविन्द-

सदृशं स्वमुखम् **अथ** त्वत्कृतबोधनानन्तरं **किञ्चित्** ईषत् **उन्नमय्य** ऊर्ध्वमुखं कृत्वा **मत्प्रस्तावप्रवणम्** मद्विषयकवृत्तान्तनिवेदने आसक्तं त्वाम्, **अन्तः तोषात्** मनसस्तुष्टत्वात् **अमृतलहरीलब्धसब्रह्मचर्यैः** ब्रह्म वेदादि। तद्विषयकं **चर्यं** चरणं **ब्रह्मचर्यम्**-अध्ययनमिति यावत्। समानं ब्रह्मचर्यं येषां ते **सब्रह्मचर्याः** सहाध्यायिनः। अत्र सधर्माण इत्येवार्थः। अमृतस्य **लहर्यो** वीचयः तत्सधर्माणः प्रीतिपूर्वकं सरसं प्रवृत्तत्वात् तद्वत् भोग्याः आरोग्योज्जीवनहेतवश्चेत्युक्तं भवति। तथाविधैः, **उषसि** प्रातः **मिषत्तां** विकसताम् **अम्भोजानां** कमलानाम् **अन्तरङ्गैः** मित्रभूतैः समानाकारैः ताम्रशुक्लायतैः **अपाङ्गैः** नेत्रांशैः **मानयेत्** सबहुमानं पश्येत्॥ मोहं प्राप्तायाः अपि प्रबोधस्त्वद्बोधनेनावश्यम्भावी। पूर्वं हनुमत्कृतप्रबोधनकाले सा तिर्यगूर्ध्वञ्च निरीक्षमाणा वानररूपदर्शनात् राक्षसमायापरिचयाच्च यद्यपि भीरुरासीत्, अथापि पूर्वं हनुमतो लब्धाश्वासतया अनुकूलदूतत्वसंभावनातिशयात् मुखमुन्नमय्य, कूजितज्ञापितसौम्यरूपत्वात् अन्तस्तृप्यन्ती मत्संदेशं वक्ष्यसीति लब्धाभिमुख्या त्वां सादरबहुमानं गम्भीराम्भस्संभूत-रविकरविकसितकमलदलसरूप-सुदीर्घापाङ्गवर्षेणाऽऽह्लादयेत्। "अपाङ्गा भूयांसो यदुपरि परं ब्रह्म तदभूत् अमी यत्र द्विजाः तदिह शतमखादिस्तदधरात्" इत्युच्यमानलक्ष्मीकटाक्षगोचरस्य ते तदैव सर्वसंपत्समृद्धिरिति। प्राय एतत्पद्योत्तरार्धं श्रीस्तुतावपि॥ २९॥ (८९)

(90) **पश्यन्ती सा रघुपतिवधूस्त्वामशेषावदातं**
**प्रत्याश्वासादधिगतरुचिः प्राक्तनीवेन्दुलेखा।**
**मत्संदेशे तदनु सुमुखी सावधाना भवित्री**
**किं न स्त्रीणां जनयति मुदं कान्तवार्तागमोऽपि॥ ३०॥**

सीतायाः निर्भीकतां संदेशश्रवणे सावधानताञ्च भविष्यन्तीमाह **पश्यन्तीति**। **सा** अमृतमयापाङ्गप्रेषिणी **रघुपतिवधूः** दशरथस्नुषा, 'पत्युश्छन्दात् व्यसनमपि हि श्लाघनीयं वधूनाम्' इति 46 श्लोके वधूशब्दस्य भार्येत्यर्थेऽपि प्रयोगात् रघुपतिवधूरित्यस्य रघुपतेः श्रीरामस्य वधूः पत्नीत्यर्थोऽपि **घटते**। मत्प्रस्तावकूजितश्रवणत एवानुकूलत्वेनावधृतं **त्वाम् अशेषावदातं** बहिरन्तश्च शुद्धम्। हंसत्वात् बहिर्धवलं रामप्रियत्वात् अन्तस्सत्त्वगुणसंपन्नञ्च त्वां तथैव **पश्यन्ती** अवधारयन्ती **प्रत्याश्वासात्** पूर्ववत् पुनराश्वासलाभात् **प्राक्तनी** शुक्लपक्षस्थिता **इन्दुलेखा** चन्द्रकलेव **अधिगतरुचिः**। चन्द्रपक्षे **रुचिः** कान्तिमात्रम्। सीतापक्षे कान्तिः प्रेम च। यथा चन्द्रकला पुनः किञ्चिदाप्यायिता कान्तिमधिकां लभेत, ततो लप्स्यमानाधिककान्तिश्च लक्ष्येत, तथाभूता। अपरपक्षचन्द्रलेखा क्षयं प्राप्स्यन्ती स्यात्, न तथेयमिति **प्राक्तनी**त्युक्तम्। अधिगतरुचित्वांशे उभयोः साम्यात् इन्दुलेखेवाधिगतरुचिरित्यन्वयः। **तदनु** पश्चात् **सुमुखी** उन्नमितं मुखं श्रवणानुकूलं रक्षन्ती **मत्संदेशे** त्वया वक्ष्यमाणे मदीये--मत्कृते मद्विषयके च **संदेशे**--वृत्तान्ते **सावधाना** श्रवणानुकूलाप्रमादतासहिता **भवित्री** भविष्यति। ननु यद्यपि सावधाना भवित्री, अथापि त्वत्संश्लेषसाकांक्षायास्तस्याः संदेशागम

ज्ञानमात्रेण सुमुखीत्वाधिगतरुचित्वादिकं कथम् । हनुमत्सविधादंगुलीयकमपि लब्धवत्याः एतत्संदेशमात्रेण कियत् स्यादित्यत्राह **किमिति** । **कान्तस्य** प्रियस्य प्रीतिमतश्च पत्युः संबन्धिनी तत्प्रेषिता या **वार्ता** वृत्तान्तः तस्या आगमोऽपि, तावन्मात्रागमनमपि । साक्षात् कान्तस्य, तत्प्रेष्यमाणस्य कस्यचित् द्रव्यस्य वा अलाभेऽपीति अपिशब्दद्योत्यम् । **स्त्रीणां** वियोगिनीनां स्त्रीलक्षणसंपन्नानां युवतीनां **मुदम्** आनन्दं किं न जनयति ? जनयत्येव । कान्तेन प्रेषिता वार्ता कान्तैव स्यात् । प्रियावासस्थलापरिज्ञानदशापेक्षया सम्प्रति त्वरातिशयः कान्तस्यास्तीति ज्ञाने, मोदो वर्धत एवेति भावः । **सुमुखीति** पदं--त्वदुक्तिश्रवणेऽपि त्वद्वीक्षणे कृतेऽपि सहस्थितराक्षसीप्रबोधलेशादिशंकया, 'नायमवसरः' इति मन्यमानाऽत्र सौमुख्यं यदि न वहेत्, तदा किञ्चित् प्रतीक्षितव्यमिति सूचयति ॥ ३० ॥ (९०)

(91) **पश्चादेवं कथय भवतीभागधेयेन जीवन्**
**कल्याणीं त्वां कुशलमनघः कोसलेन्द्रोऽनुयुङ्क्ते ।**
**येषु श्रेयो भवति नियतं तानि सर्वाणि सन्तः**
**लक्ष्म्या देव्यास्तव च भुवने लक्षणान्यामनन्ति ॥ ३१ ॥**

देव्याः सीताया अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैरादरेणाभिषिक्तस्य तस्यां लक्ष्म्यामिव बहुमतिर्भविष्यतीति गमयन् वक्तव्यमाह **पश्चादिति** । अस्य श्लोकस्य रामकर्तव्यसंदेशान्तर्भावाभावेऽपि, 'हंसस्य तस्यां भक्तिरभ्यधिका' इति तया ज्ञातव्यम् । तदा विस्रम्भातिशयात् रक्षस्त्वादिशंकातङ्कतुषोऽपि तस्या न स्यादिति इदमप्यादिश्यते । हे हंस ! **पश्चात्** तत्सावधानतासंपत्त्यनन्तरम् **एवं** वक्ष्यमाणप्रकारेण **कथय** । इदमपि पूर्वं वक्तव्यमिति भावः । **भवतीभागधेयेन भवत्याः** पूज्यायाः भाग्यवशादेव । उपरीव त्वच्छब्दाप्रयोगात् पूज्यार्थकत्वमेवाभिमतम् । **जीवन्** आयुष्मान् **अनघः** अखिलहेयप्रत्यनीकः आरोग्यप्रतिबन्धकपापादिरहितश्च **कोसलेन्द्रः कोसलानां** तदाख्यजनपदस्य इन्द्रः अतिशीघ्रभाव्याधिपत्यः । जीवत्त्वादिधर्मत्रयमपि एतद्भाग्यायत्तमिति भावः । 'दुष्करं कुरुते रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहम्' इति **हनुमता** सीतादर्शन एव चिन्तितम् । **रामेणाप्युक्तम्** । 'न जीवेयं क्षणमपि विना तामसितेक्षणाम्' इति । अतः कथं जीवतीति मयाऽपि चिन्तितम् । संप्रति सर्वसमृद्धाया भवत्या भागधेयेनैव जीवतीति सुनिश्चितमासीत् । आयुर्न्यूनत्वप्रसक्तावपि सौमंगल्यभाग्यं पत्युरायुःप्रदमाहुः । अस्य तु सर्वमिदं धर्मत्रयं त्वद्भाग्यायत्तमेव । एवम्भूतः **कल्याणीं** सर्वमङ्गलसंपन्नां त्वां **कुशलम् अनुयुंक्ते**—'अपि कुशलं सीते' इत्यादरातिशयात् पृच्छति । कथं कल्याणीत्वं तथाविधं त्वया निश्चितमिति यदि मां पृच्छसि, विज्ञापयामि । **भुवने** सर्वेषु लोकेषु जीवानां **येषु** लक्षणेषु सामुद्रिकादिशास्त्रोक्तेषु सत्सु **श्रेयः** शुभं तत्तत् अनुबन्धिपर्यन्तं **नियतम्** अवश्यमेव भवति, तानि लक्षणानि **सर्वाणि** **सन्तः** शास्त्रज्ञाः तत्त्वदर्शिनः **देव्याः लक्ष्म्याः तव चेति आमनन्ति,** लक्ष्मीदेवीगतत्वेन त्वद्गतत्वेन च अभ्यस्य वदन्ति । सतां मुखात् लक्ष्मीदेवीगतसर्वलक्षणसंपन्नतायास्त्वयि मया निर्धारितत्वात्

'श्रद्धया देवो देवत्वमश्नुते' इति विष्णोर्देवत्वस्य लक्ष्म्यधीनत्ववत् श्रीरामश्रेयसस्त्वदधीनत्वमिति निश्चितमित्यर्थः। ननु हंसेन सद्भ्च एवं पूर्वं न गृहीतम्, तत् कथं मिथ्योच्यत इति चेत्—तथाऽवगतिमान् हंस एव दूतत्वेन स्वीकृत इति किं न स्यात्। यद्वा रामेणैवमुत्तरार्धेन स्वयमुक्त्वा ईदृशीम् अत एव कल्याणीपदवाच्यां प्रति मया कुशलं प्रष्टमिति ब्रूहीत्युक्तम्। अतः सत्पुरुषोक्तत्वेन रामोक्तत्वात् सतामुक्तिरेवमिति हंस आह। रामोक्तमर्थं कल्याणीपदेन संगृह्य हंसेनोत्तरार्धेन तद्विवरणम्। अथवा देवहंसस्य स्वयमेव हनुमद्वत् लक्षणज्ञानसंपन्नत्वात् स सीतां दृष्ट्वा एवं वक्तुं शक्नुयादिति निश्चित्य रामस्येत्थं वचनम्। तद्यमस्त्यथार्थः—देव्या लक्ष्म्याः तव च लक्षणानि इमान्येव, सन्तः भुवने येषु श्रेयो भवति नियतं तादृशसर्वलक्षणत्वेन शास्त्रेणाऽऽमनन्तीति। सीतायाः स्वयं सर्वसंपन्नत्वं रामस्यैतदधीनसंपत्तिश्च श्रीमति रामायणे एवोच्यते, "अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा। न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते", "अप्रमेयं हि तत् तेजो यस्य सा जनकात्मजा" इति। स्वेन तेजसेति स्वपदं रामतेजोऽन्यावर्तनाय। 'न नशिष्यति कल्याणी' इत्येतत्स्मरणेन कल्याणीं त्वां कुशलमिति कविर्निबबन्ध। अत्र लक्ष्मीसीतैक्यं द्रढितम्॥ ३१॥ (९१)

(92) यस्मा यस्मिन् व्यवधिरभवत् भूषणालेपनादिः
 नीतामेनां नियतिविभवादन्तरीपं दवीयः।
प्रत्यासीदन्निव नयनयोर्वर्त्मनि स्थापयित्वा
 स त्वामेवं वदति कुशली देवि सख्या मुखेन॥ ३२॥

कुशलप्रश्नज्ञापनं कथितम्। अथ संदेशप्रकारः कथनीयः। स च विरहविह्वलस्य साक्षात् तत्संबोधनेनैव प्रवृत्त इति ज्ञापयितुं यस्मा इति श्लोकः। हंसस्य स्ववाक्यरूपमिदम्। हे देवि! यस्मास्ते यस्मिन् रामे भूषणालेपनादिः अंगेषु धृतं भूषणम्, आलेपनम् अङ्गरागः। वस्त्रस्य नियमेन धार्यत्वादनुक्तिः। अधिकस्य तु आदिपदेन ग्रहणम्। व्यवधिः अभवत्—मिथः साक्षात् गात्रसंस्पर्शस्यान्तराय आसीत्। सः रामः प्रियः, कुशली सन् एनामिति यच्छब्दप्रतिनिर्देशः। नियतिविभवात् दैवप्राबल्यात् रक्षसा दवीयः अतिदूरस्थितम् अन्तरीपं द्वीपं नीतां नीत्वाऽत्र निरुद्धां त्वाम्, साक्षात् संबोध्यकथनौचित्यं यथासति भवेत् तथा नयनयोर्वर्त्मनि नेत्रगोचरस्थाने भावनावशात् स्थापयित्वा स्थैर्येण साक्षात्क्रियमाणां कृत्वा प्रत्यासीदन् इव त्वत्समीपे वर्तमान इव सख्या सखिभूतेन मुखेन मद्रूपद्वारेण एवं वदति वक्ष्यमाणप्रकारेणाऽऽह। भूषणालेपनादौ सति तत्तदंगस्पर्शः साक्षान्न भवतीति निर्विद्य तत्तदुपेक्षयाऽपि त्वत्स्पर्शे अहमिव मत्स्पर्शे प्रवृत्ता त्वम्। अत एवाग्निहायायोध्यातोऽनुप्रस्थिता। तथाविधाया एवं सुदूरस्थितिरनायासानिवर्त्या समापेदे इति खिद्यते। अनवरतभावनया अक्ष्णोः पुरत एव पश्यति। संश्लेषदौर्लभ्याच्च दूयते। स साक्षादेव संभाषणाशया त्वामेव संबोध्यैवमाहेत्यर्थः॥ ३२॥ (९२)

(93) वेलातीतप्रणयविवशं भावमासेदुषोर्नौ
भोगारम्भे क्षणमिव गता पूर्वमालिङ्गनाद्यैः ।
संप्रत्येषा सुतनु ! शतशः कल्पनासङ्गमैस्ते
चिन्तादीर्घैः अपि शकलिता शर्वरी नापयाति ॥ ३३ ॥

सर्वदैव विरहस्यासह्यतायामपि अहोरात्रेषु विशिष्य भोगकालत्वात् तादृशरात्रीणामत्यन्तासह्यत्वमादायाह वेलेति । सुतनु पतिचित्ताकर्षकसर्वलक्षणसमृद्धांगसंपन्ने सीते । **पूर्वम्** आवयोः साहित्यकाले । गतेत्येतत् शर्वरीविशेषणम् । उत्तरार्धेनैकवाक्यता । गतायाः वर्तमानायाश्चाभेदविवक्षया प्रयोगः । गततुल्येत्यर्थे पर्यवसानम् । यद्वा शर्वरीत्यस्यापकर्षेण **गते**ति पदं क्रियापदस्थाने प्रयुक्तमिति पूर्वार्धं पृथग्वाक्यम् । उत्तरश्लोके संयोगवियोगकालिकवाक्यैक्यवत् एकजातीयत्वात् अत्र रात्र्यैक्यभावनेत्येकवाक्यतैव वा । **वेलातीतप्रणयविवशं वेलां** मर्यादामतीतः **प्रणयः** अनुरागः तेन **विवशं** निरोधाक्षममभिवृद्धं **भावं** भोगेच्छाम् **आसेदुषोः** प्राप्तवतोः **नौ** आवयोः **भोगारम्भे** संभोगोपक्रममात्र एव **आलिङ्गनाद्यैः** । आदिना सल्लापचुम्बनस्तवनादिग्रहणम् । **क्षणमिव** त्रियामाऽपि क्षणादपि न्यूनकालतयैव **गता** अतीताऽऽसीत् । **सम्प्रति** विरहदशायाम् **एषा** तावत्परिमाणाऽप्यनुभवेऽन्यथा वर्तमाना, **चिन्तादीर्घैः** अन्यचिन्ताविरहात् वियुक्तत्वद्विषयकचिन्तनानुवृत्त्या अधिककालव्याप्तैः ते मद्विषयसमाधिमभ्यस्यन्त्यास्तव **शतशः कल्पनासंगमैः** अवास्तवैः मनःकल्पितैः संगमैरनेकशतरूपैः। शतश इत्यस्य शकलितेत्यत्रान्वयो वा । **शकलिताऽपि** अत्यल्पानेकखण्डात्मैव कृताऽपि **नापयाति** । तच्छकलमात्रमपि **नापयाति** । प्रलयरात्रिरिव वर्धते । चिन्ताधिक्यात् त्वत्संगमो भावनामयो भवन्नपि बाह्यसंश्लेषाभावात् मिथ्येति प्रतीतः क्लेशमेवाभिवर्धयति । शर्वरीत्वादन्यचिन्ताप्रसक्त्यभावात् कल्पाकारा संतापायैव कल्पते एकैकाऽपि रात्रिरिति ॥ ३३ ॥ (९३)

(94) उद्दामैस्ते कुचकलशयोरूष्मभिर्निर्जितेन
च्छिद्रं लब्ध्वा विरहसमये तत्क्षणादुन्नतेन ।
कुन्दामोदैस्सुरभितदिशा गन्धवाहेन दैन्यं
सम्प्राप्तोऽहं सह सरसिजैस्त्वन्मुखाम्भोजमित्रैः ॥ ३४ ॥

एवं सामान्यतः सर्वा रात्रिरसह्याऽस्तीत्युक्त्वा, अथ विशिष्य सीतावियोगदशास्थितान् ऋतून् मुख्यान् एकैकं गृहीत्वा तेषां बाधकत्वं स्थितं पृथक्पृथक् दर्शयति । तत्र दश मासाः सीतावियोगकाल इति कृत्वा संप्रति शरदृतौ हंसप्रेषणात् शिशिरमारभ्य शरत्पर्यन्तानां दशमासत्वं भवेदिति विभाव्य शिशिरं प्रथममाह । न च श्रीमद्रामायणव्याख्याकारैर्वसन्त एव सीतापहारस्य निरूपितत्वात् कथं शिशिरमारभ्येह कथनमिति शंक्यम् ; हंसप्रेषण–युद्धकरणानुकूलतामालोच्य शरत्काले हंसप्रेरणां कल्पयता कविसार्वभौमेन कल्पनामये काव्ये शिशिरमारभ्य मासदशककल्पनेयम् । वस्तुपरिस्थितिर्या काचिद्भवतु । शिशिर एव विरहारम्भ इति

वस्तुस्थितिरिति सुवचत्वे तु सुतराम् । किष्किन्धाकाण्डारम्भे पम्पादर्शनावसरे विशेषतो वसन्तवर्णनात् दण्डकारण्ये सीतावियोगसमयः शिशिरर्तुकार्यानुवृत्तिकाल इत्युक्तौ नानौचित्यम् । पूर्वं संश्लेषकालेऽनुकूलभूताया रात्रेर्विश्लेषकाले विषमत्वमुक्तम् । अत्र वायोः कालभेदेन तथात्वमुच्यते । पूर्वं त्वया परिभूतो वायुस्त्वद्विरहदशायां त्वन्मित्राणां बाधको जात इत्याह उद्दामैरिति । हे सुतनु पूर्वम् उद्दामैः । दामशब्दो बन्धनपरः । उद्दामैः विशृंखलैः यद्वा दमो दान्तिः । दम एव दामः । दामादुद्गतैः निष्क्रान्तैः ; अधिकैरिति यावत् । ते कुचकलशयोः घटतुल्ययोः स्तनयोः ऊष्मभिः उष्णैः निर्जितेन । ऊष्मणामेव वा जयकर्तृत्वम् । ऊष्मसाहाय्येन मया जितेन वायुनेत्यर्थसंभवात् रामस्य वा तत् । संगमकाले शिशिरर्तवो बहवो नीताः ; तदा गन्धवाहस्त्वत्साहाय्यबलात् मया निर्जित इत्युक्तं भवति । कुचकलशोष्मकथनात् शीतकाल इति ज्ञाप्यते । तथाचाऽऽभाणकः—"कूपोदकं वटच्छाया नारीपीनपयोधरौ(ताम्बूलं तरुणीस्तनौ) । शीतकाले भवेदुष्णमुष्णकालेऽपि शीतलम्" इति । आचार्यैश्चान्यत्र न्यबन्धि, "उष्णे शीतलतामुपेत्य शिशिरे प्राप्ते भजन्त्युष्णतां कामान्तःपुरचेटिकाकुचतटीकाठिन्यवन्तः खलाः" इति । अत्र शिशिरपदप्रयोगः शिशरर्तौ ऊष्माधिक्यं सूचयति । विरहसमये त्वद्वियोगावसरे इदानीं छिद्रं हिंसनावकाशं लब्ध्वा प्राप्य तत्क्षणात् विरहारम्भसमय एवं । अनेन शिशिरे विरहारम्भ इति ज्ञाप्यते । उन्नतेन उच्छ्रायं प्राप्तेन । शिशिरर्तौ भवन्ति पुष्पाणि प्रदर्श्य तस्य परिकरसमृद्धिं दर्शयति कुन्देति । कुन्दस्य माध्यमिति नामान्तरं माघमासे कुन्दकुसुमाविर्भावं दर्शयति । कुन्दानां माध्यपुष्पाणाम् आमोदैः परिमलैः। आमोदः अतिनिर्हारी गन्धः । स्वप्रसारितैः सुरभितदिशा । सुरभयः गन्धवन्तः कृताः दिशः येन सः अत एव गन्धवाहनामधेयेन । गन्धः गर्वोऽपि । साहंकारेण वायुना हेतुना अहं दैन्यं दीनदशां संप्राप्तः । तत्र शिशिर एव दैन्यं सम्यक् प्राप्तोऽस्मि । न केवलं मम दैन्यम् ; स गन्धवः ह त्वत्कुचोष्ममूलकत्वात् पराजयस्य प्रागापन्नस्य, त्वयि विरोधात् त्वन्मुखाम्भोजमित्राणीति सरसिजान्यपि बाधत इति तेषां दैन्यम् । प्रसिद्धं हि, "हिमहतनलिनीव नष्टशोभा" इति हिमकाले कमलानां दैन्यम् । वैभवे पुष्ट्या त्वन्मुखाम्भोजमित्रभूतानि सरसिजानि संप्रति विरहावसरेऽपि मित्राणि ; यतस्ते मुखाम्भोजमपि विरहबलात् ईदृशेनैव गन्धवाहेन प्रापितदैन्यं स्यात् । अत्र साक्षादेषां सरसिजानामियं परिस्थितिर्दृश्यमाना तत्र त्वन्मुखदैन्यमपि मे सूचयति । अतः प्राप्तं दैन्यं मे संप्राप्तमासीत् । त्वया खलु प्राक् हनुमन्निकटे पृष्टम् , "कच्चिन्न तत् हेमसमानवर्णं तस्याऽऽननं पद्मसमानगन्धि। मया विना शुष्यति शोकदीनं जलक्षये पद्ममिवाऽऽतपेन" इति। तत्रेदमेवोत्तरम् , त्वन्मुखाम्भोजमपि मामिव शिशिरो बाधेतेत्यहं दूय इति॥

(95) माध्वीदिग्धैर्विरहिवनितास्वादलुब्धैरमोघैः
आवृण्वन्तं कुसुमधनुषश्चित्रपुङ्खैर्दिगन्तान् ।
सीतापार्श्वे न भवतु भवानित्यवोचत् वसन्तं
रामश्चासादनमितधनुर्मौलिना सन्नतेन ॥ ३५ ॥

अथानन्तरे वसन्तर्तौ विरहसहनं वृत्तमाह **माध्वीति**। वसन्ते पुष्पाणां बहुविधानां प्रादुर्भावात् सर्वेषामेव स्मरोद्दीपकत्वात् वसन्तपदप्रयोगादेव तेषां सुज्ञानत्वाच्च विशिष्य नाम्ना तेषामनिर्देशः। **माध्व्या** मकरन्देन **दिग्धैः** लिप्तैः। 'दिग्धं विषाक्तबाणे स्यात्' इति विषाक्तबाणवाचिदिग्धपदप्रयोगात् माध्व्याः विषवत् कार्यकरत्वं सूचितं भवति। बाणवाचकः शब्द उपरि प्रयुज्यते। माध्वीलिप्तत्वोक्त्यैव पुष्पाण्येव चित्रपुंखा इति सिद्धम्। एषां बाणानां लक्ष्यं कार्यञ्चाह **विरहीति**। **विरहिणीनां** पतिवियुक्तानां **वनितानां** स्त्रीणाम् **आस्वादे**। बाणेन क्रियमाणो लक्ष्यास्वादश्च तद्विसनमेव। तत्र **लुब्धैः** अभिलाषवद्भिः। **विरहिस्वादलुब्धैरिति** सामान्योक्तिं विहाय **वनिता**पदप्रयोगः उपरि सीतासविधे तत्स्थापननिषेधप्रार्थनायाः क्रियमाणतया तथा प्रार्थनं वनितास्वादभियेति ज्ञापनार्थः। यद्वा विरहिभिः क्रियमाणे वनितास्वादे तद्योगे लुब्धैः; वनितास्वादनाय विरहिणां प्रवृत्तिं जनयितुकामैरित्यर्थः। अनेन स्वदेशे बाणप्रसरणफलं दर्शितम्। **अमोघैः** अवन्ध्यैः कार्योपघायकैः **कुसुमधनुषः** मन्मथस्य। कुसुममेव धनुर्यस्य स **कुसुमधनुः**। ननु कुसुमधन्वन इति भाव्यम्; अनङो विधानात्। न। 'वा संज्ञायाम्' इति संज्ञायां विकल्पात्। तर्हि **अनमितधनुरिति** संज्ञात्वाभावेऽपि अनङ्निवृत्तिः कथमिति चेत्–तत्र न सकारान्तो **धनुश्शब्दः**। किंतु उकारान्तः। 'अवष्टब्धधनुं रामम्, 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति' इत्यादिप्रयोगात् उकारान्तो **धनुशब्दः**; पुल्लिंगश्च। तस्य, **चित्रपुंखैः**। विचित्रमूलप्रदेशाः बाणाः चित्रपुंखाः। **मन्मथबाणैरित्युक्त्या** पुष्पैरिति सुगमम्। **दिशामन्तान्** सीमप्रदेशान् **आवृण्वन्तम्** आच्छादयन्तम्। वसन्तो मन्मथस्योपयोगाय सर्वासु दिक्षु पुष्पाणि निर्माय स्थापयति। तादृशं वसन्तमृतुम्। **रामः**। अहमिति वक्तव्ये **राम** इत्युक्तिः सर्वान् स्वपदे नामयतो महावीरस्य 'अद्य रामस्य रामत्वम्' इति प्रसिद्धस्यापीयं दुर्गतिरिति विषादातिशयव्यञ्जनाय। **अनमितधनुः**। धनुषो नमने योद्धुं प्रवृत्तिरस्तीति प्रत्यर्थी मन्वानो विरुन्ध्यादिति ज्याविसर्जनेन धनुषः उन्नमनम्। धीरेण वीरेणोन्नमितशिरसा धनुर्नमने प्रकृतेन मया तद्विरोधेन दीनेन धनुरनमयता शिरोनमनमपि क्रियत इत्याह **मौलिना संनतेनेति**। साक्षाद्विरोधिनो मन्मथस्य सविधे नमनं विहाय तत्सेवकस्य शरकारिणस्तत्रतत्र शरस्थापकस्य कस्यचित् पदे पतनमित्यहो रामस्य दुर्गतिः, पत्न्यां परमं प्रेम चेति मित्रमुखेन रहस्यसंदेशः। मौलिसंनमनेन क्रियमाणमाह **सीतेत्यादिना**। हे महात्मन् वसन्त! । अत्र चित्रपुंखप्रसारणं कृतमासीत्। एतत्परिहरणप्रार्थनां पश्चात् करिष्ये। अबला एतद्बाणदर्शनमपि न सहेत। अतस्तत्र त्वया न गन्तव्यम्। तत्र त्वं मार्गणप्रसारणं मा कुरु' इति **अवोचत्** प्रार्थयत। वसन्तसमये मया स तथा प्रार्थित इत्यर्थः। सर्वथा तव खेदलेशोऽपि मा भूदिति प्रयत्नः क्रियमाणोऽस्तीति भावः॥ "वसन्तो यदि वर्तेत यत्र मे वसति प्रिया......नूनं वसन्तमासाद्य परित्यक्ष्यति जीवितम्" इति रामवैयाकुली हि रामायणे दर्शितैव॥३५॥

(96) **पार्श्वे लोलैः परभृतकुलैर्मुक्तकोलाहलानां**

**मल्लीरेणुस्थगितवपुषां मन्थ(न्द)रं निर्गतानाम्।**

भीतेनाहं भ्रमरपटलीशृङ्खलासंकुलानां
मार्गे तिष्ठन् मलयमरुतां वारितो लक्ष्मणेन ॥ ३६ ॥

वसन्तकालिकस्वकीयासह्यावस्थाविष्करणेन, स्वयं 'सीतापार्श्वे न भवतु भवान्' इति वसन्तं प्रणम्य कृतायाः प्रार्थनायाः कारणमपि सूचयति पार्श्वे इति । बहुभिर्व्यूढैः पीडितस्य मे पार्श्वे लक्ष्मणः स्थितः परिरक्षक आसीत् । तथारक्षकाभावात् वसन्ते सीता व्यथिता भवेदित्यालोच्य स तथा प्रार्थित इति भावः । मलयमरुतां स्वभावत एव बाधकानां वसन्तकृतं परिकरबन्धमप्याह क्रमेण । **पार्श्वे ।** सीतापार्श्वे मा भूरिति वदतो मम पार्श्वे वसन्तप्रेषितैः **लोलैः** एकत्रानवस्थाय इतस्ततो भ्रमद्भिः **परभृतानां** कोकिलानां चूतादिवृक्षव्यापिनां **कुलैः** वृन्दैः **मुक्तकोलाहलानां । वृन्दैरि**त्यस्य **मुक्ते**त्यत्रान्वयः । **मुक्ताः** विसृष्टाः **कोलाहलाः** मञ्जरीपुञ्जादिभक्षणभावितमदमूलाः मिथःश्लिष्टशब्दराशयः येषु तेषाम् । कोकिलध्वनिपुञ्जधारिणामिति यावत् । **मल्लीरेणुस्थगितवपुषाम्** मल्लीपुष्पाणां **रेणुभिः** रजोभिः **स्थगितं** आच्छादितं **वपुः** स्वरूपं कृत्स्नं येषाम्, **मन्थरं**(मन्दरं) मन्दं यथा तथा **निर्गतानां** परिसरवर्तिबहुविधपुष्पतटाकपर्वतकन्दरपादपषण्डतः प्रस्थितानाम् अत एव **भ्रमराणां** वायुसंपृक्तमधुगन्धग्रहणलोलुपानां लोलम्बानां **पटल्यः** राजयः शृंखला इव दीर्घीभूय स्थिताः ताभिः **संकुलानां** व्याप्तानां **मलयमरुतां** मलयपर्वतस्थितचन्दनपरिमलसाहित्येन समागतानां वातानां **मार्गे** तदागमनमार्गे **तिष्ठन्** कोकिलकूजितश्रवणेन मल्लीरेणुगन्धाघ्राणेन मन्मथमौर्वीभूतभ्रमरपटलीदर्शनेन मलयमरुत्स्पर्शनेन च परवशीकृततत्तदिन्द्रियः, "पद्मकेसरसंसृष्टो वृक्षान्तरविनिःसृतः । निःश्वास इव सीताया वाति वायुर्मनोहरः" इति प्रियाभूतत्वदेकस्मरणसंवर्धितखेदः मधुपशृंखलाबन्धात् निगलित इव भूत्वा किंकर्तव्यतामूढो विना चलनं स्थितोऽहं **लक्ष्मणेन** लक्ष्मीसंपन्नेन तत्तदवसरोचितकैंकर्यधुरन्धरेण **वारितः** "उत्साहमात्ममाश्रित्य सीतां प्रतिलभेमहि" इत्युक्त्वा, तत्स्थानादन्यत्र नीतोऽभवम् । ईदृशी दुर्दशा ते मा भूदिति वसन्तः प्रार्थितः । ऋतुमध्ये तस्यैवात्यन्तव्यथाकारित्वादिति ॥ अत्र **श्रीमद्रामायणवचनमु**दाहरन्ति, "विक्षिपन् विविधाः शाखाः नगानां कुसुमोत्कटाः । मारुतश्चलितस्थानैः षट्पदैरनुगीयते । मत्तकोकिलसंनादैर्नर्तयन्निव पादपान् । शैलकन्दरनिष्क्रान्तः प्रगीत इव चानिलः", "संतापयति सौमित्रे क्रूरश्चैलो वनानिलः", "संस्तम्भ राम भद्रं ते मा शुचः पुरुषोत्तम" इत्यादि ॥३६॥

(97) मन्दो वक्ष्ये किमिव जनकं किं नु योगीश्वरो माम्
इत्येवं मे सुतनु मनसो वर्तयन्ति स्म खेदम् ।
रक्ताशोके ज्वलति सविधे लाजवर्षाभिरामैः
पुष्पौघैस्त्वत्परिणयदशां व्यञ्जयन्तः करञ्जाः ॥ ३७ ॥

विरहदुःखादप्यधिकं दुःखं मुखान्तरेण तदा मे समापतितमसह्यतरमासीत्, यस्येदानीं कथञ्चिदनुवृत्तेरवसरो दृश्यत इति तदपि दर्शयति **मन्द** इति । हे सुतनु शुभङ्कररूपे ! **करञ्जाः** चिर-

बिल्ववृक्षाः सविधे स्वसमीपे ज्वलति अग्निवद्दीप्यमाने रक्ताशोके रक्तवर्णपुष्पप्रसूतौ अशोकवृक्षे। "नीलाशोकाश्च पुष्पिता" इति नीलाशोकोऽपि रामायणोक्तः। श्वेताशोको मल्लिनाथोक्तः। तथाऽन्योऽपि स्यात्। रक्तवर्णाशोकपुष्पे इत्येव यद्यप्यर्थो वर्णयितुं शक्यते; वृक्षवाचिनां पुष्पफलवाचित्वस्याप्यनुशासनसंमतत्वात्—अथापि तदा लाजवर्षाधारत्वार्हाग्निपरिमाणतुल्यपरिमाणलाभाय अशोकपुष्पसमुदाये इत्यर्थो विवक्षणीयः स्यात्। वृक्षपरत्वे तु रक्तपदज्वलतिपदबलात् कात्स्न्येंन पुष्पितत्वद्योतनादनायासेन परिमाणलाभः। एवञ्च करञ्जपदवत् अशोकपदमपि वृक्षार्थकमिति ऐकरूप्यम्। यदि तु लाजवर्षेति उपमानवाचकपदवत् ज्वलनेति अग्निरूपोपमानवाचकपदस्यापि स्थितिर्युक्तेति विचिन्त्य रक्ताशोकज्वलनसविधे इति पाठः स्थितः स्यादिति तर्क्यते, तदा काममशोकपदं पुष्पपरं स्यात्। लाजवर्षाभिरामैः लाजानां वर्षवत् रमणीयैः; पातोन्मुखलाजपुञ्जवद्दृष्टैरिति यावत्। पुष्पौघैः स्वकीयपुष्पराशिभिः। त्वत्परिणयदशाम् तव विवाहकालगतमग्नौ पतनोन्मुखलाजपुञ्जावसरं व्यञ्जयन्तः स्मारयन्तस्सन्तः मे मनसः खेदं वर्तयन्ति स्म। किमिति? तदाह मन्द इत्यादिना। 'हे राम! कुत्र मे सुता सीता; कुत्र तत्परिपालनव्यवस्थां विधाय पृथगागतोऽसि। अपि कुशलं तस्याः' इति यदि सीतायाः जनको नाम्ना च जनकः मयाऽपि जनकतुल्यतया भावितः पृच्छेत्, किमिवाहं मन्दो वक्ष्ये। मदीया मन्दता निर्भाग्यतैव हि सत्यवादिना मयाऽऽविष्करणीया भवेत्। इवशब्दोऽर्थानिर्धारणं गमयति। रक्षसाऽपहृताऽऽसीत्; अथ मया लब्धुं नाशक्यत, नापि कथमास्त इति ज्ञातुमिति वाऽन्यथा वेति न बुध्ये इति भावः। एवं किमपि मयोक्तं श्रुत्वा स योगीश्वरः किं नु मां वक्ष्यति। वक्ष्ये इत्यस्य विपरिणम्यानुषंगः कार्यः। योगे निष्णातत्वादुपेक्षेत वा; 'प्रागेव मह्यं कस्मान्न ज्ञापितवानसि। तदा हि योगबलेन परिस्थितिमवगम्य परिहारः प्रागेवोपदिष्टः स्यात्। अहो! वृथा कालातिपातः कृतः। अहो! पौरुषहानिरिव ते कर्तव्यविषयविवेकहानिरपि' इति यदि ब्रूयात्, किं कर्तव्यम्? संभावितस्य चाकीर्तिर्मरणादतिरिच्यते इत्येवं खेदम् उत्तरोत्तरोपर्युपरि चिन्तनात्मकं खेदं करञ्जा अवर्तयन्नित्यर्थः। वर्तयन्ति स्मेति स्मशब्दः, इदानीं स खेदो नास्ति, त्वत्स्थितेः सम्यक् ज्ञाततया रक्षस्संहारपूर्वकं त्वत्प्राप्तेः सुनिश्चितत्वादिति ज्ञापयति। अत्र मन्दशब्दो जनकशब्दादिश्च, "किं नु वक्ष्यामि राजानं धर्मज्ञं सत्यवादिनम्। सीताया जनकं पृष्टः कुशलं जनसंसदि॥ या मामनुगता मन्दं पित्रा प्रव्राजितं वनम्" इति वचनं स्मारयति। तथा, 'अशोकस्तबकाङ्गारः', 'कामिनामयमत्यन्तमशोकः शोकवर्धनः। स्तबकैः पवनोत्क्षिप्तैस्तर्जयन्निव मां स्थितः', 'चिरिबिल्वा मधूकाश्च सुपुष्पिताः' इत्यादि चानुसंधेयम्॥ ३७॥

(98) चेतो नैव त्यजति चपलाहेमकोणाभिघातात्
(?) धीरोदात्तस्तनितजलदात् (जननात् ?) ताण्डवारम्भमिच्छन्।
वातोन्मुक्तैः कुटजकुसुमैर्वासिते शैलशृङ्गे
रक्षःपीडारहितदयिताश्लेषधन्यो मयूरः॥ ३८॥

**वर्तयन्ति स्म खेदम्** इति भूतकालनिर्देशेन वसन्ततौ सुग्रीवसमागमात् प्राक् सीतादौर्लभ्यबुद्ध्या खेदातिशयः स्थित इति गमितम् । अथ सुग्रीवकृतया समाश्वासनप्रक्रियया तत्सौलभ्यमत्या मनागिव लब्धोत्साहस्य तद्वियोगदुःखानुवृत्तावपि तत्संधुक्षकसामग्रीसमापत्तिरपि प्राप्तिविषयप्रयत्नपोषिकैवास्तीति सूचनानुगुणं वर्षर्तुप्रभृतिसमयसमापतितं क्रमेणोदाहरति **चेत** इत्यादिना । मयूरश्चेतो नैव त्यजतीत्यन्वयः । मयूरस्य तत्कृतस्य स्वदयिताश्लेषस्य च निरन्तरस्मरणात्, 'समाप्यैवं विशालाक्षी जानकी जातसंभ्रमा । मदनेनाभिवर्तेत यदि नापहृता भवेत्' इति मत्या अपहृतप्रतिलम्भनप्रवृत्तोऽस्मीति भावः । मयूरस्य विशेषणद्वयम् । **वातोन्मुक्तैः** वायुनाऽपहृत्य सर्वतो विक्षिप्तैः **कुटजानां** गिरिमल्लिकानां **कुसुमैः** पुष्पैर्वर्षारम्भभवैः **वासिते** लम्भितपरिमले **शैलशृंगे** मद्वासभूतस्य माल्यवतः शिखरे **चपलाहेमकोणाभिघातात्**— हेम्नः कोणो **हेमकोणः** स्वर्णमयो वाद्यवादनदण्डः । **चपला** विद्युदेव हेमकोणः **तेनाभिघातात्** प्रहारात् । कोणशब्दप्रयोगात् जलदे वाद्यत्वाध्यवसायसिद्धिः । **ताण्डवा**पेक्षितं वाद्यवादनम् । उद्धतनृत्यरूपत्वात् ताण्डवस्य तदनुरूपं निर्घोषस्य वाद्यस्वनत्वकल्पनम् । वस्तुतो विद्युतो मेघे शब्दजनकत्वं नास्ति । मेघयोः संघर्षे घोषो विद्युच्च युगपद्भवतः । अथापि विद्युतस्तेजस्तया वेगातिशयात् पूर्वमस्मद्ग्राह्यता । शब्दस्य तु विलम्बेन । अतो ग्रहणपौर्वापर्यं वस्तुनोरारोप्य "तदुदितः स हि यो यदनन्तरः" इति विद्युदधीनत्वकल्पना कोणसाम्यदर्शनमूला । **धीरोदात्तस्तनितजननात्** **धीरस्य** घनस्य गम्भीरस्य, **उदात्तस्य** व्यापिनो महतः **स्तनितस्य** मेघनिर्घोषस्य **जननात्** उत्पत्त्या । जननादिति युक्तम् । जलदादिति पाठः क्लिष्टः । अभिघातादित्यस्य जलदविशेषणत्वे बहुव्रीहौ क्लेशः । **धीरोदात्तस्तनि**तेत्यस्य बहुव्रीहिसमासेनैव जलदविशेषणत्वात् तत्रैकदेशे स्तनितेऽभिघातान्वयोऽपि क्लिष्टः। जलदादित्यस्याभिघातं प्रति विशेषणत्वे धर्मिणो बहुव्रीहिबलेन धर्मविशेषणत्वं वक्तव्यमिति च क्लेशः । अभिघातस्य ताण्डवहेतुत्वमपि परम्परयोपपादनीयम् । जलदशब्दस्थितिनैर्भर्ये तु **धीरोदात्तात् जलदनिनदा**दिति वा **धीरोदात्तं स्तनति जलदे** इति वा पाठः स्थितः स्यात् । स्तनयतीतिवत् स्तनतीत्यपि साधुः । **ताण्डवस्य** उद्धतनृत्यस्य **आरम्भं** करणोपक्रमम् **इच्छन्**, ताण्डवार्थं कलापविस्तारं कुर्वन्निति यावत् । तदेव रक्षसः रावणेनान्येन वा या **पीडा** अपहारादिरूपा तद्रहितायाः **दयितायाः** स्वप्रियायाः मयूर्याः **आश्लेषः** दयिताकृतमालिङ्गनम्; तेन धन्यः । सीतेव सा मयूरी यदि रक्षसाऽपहृता स्यात्, तदा तत्कृतालिङ्गनप्रसक्त्यभावात् मयूरो राम इव निर्भाग्यः स्यात् । तथाऽनपहृतत्वात् धन्यता । उक्तञ्च वसन्तवर्णनावसरे, 'पश्य लक्ष्मण नृत्यन्तं मयूरमनुनृत्यति । शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु । वितत्य रुचिरौ पक्षौ रुतैरुपहसन्निव । मयूरस्य वने नूनं रक्षसा न हृता प्रिया ॥" इति । इदमेव स्मारयितुं **रक्षःपीडारहिते**ति विशेषणम् । "यदेषा शिखिनी कामात् भर्तारं रमतेऽन्तिके" इत्युक्तं मनसिकृत्य **दयिताश्लेषधन्य** इत्युक्तम् । **उपहसन्निवे**ति सीतायाः परिहासस्वभावत्वमनुसंधीयते । **श्रीमद्रामायणे** वसन्तकालवृत्तवर्णनात् मेघस्तनितप्रस्तावो नाऽऽसीत् । तदत्र

वर्षर्तुघटनया संपादितम् । नर्तनानुनर्तनयोस्तत्र कथनेऽपि अत्र दार्ष्टान्तिकोपयोगित्वं समीपरमणस्यै-वेत्याशयेन ताण्डवारम्भमिच्छन्नित्येतावदुक्त्वा ताण्डवप्रकाराश्रद्धा दर्शिता । तथा च तदनवरतं स्मरन् त्वद्रमणोद्योगे वर्ते इति ज्ञापितं भवति ॥ ३८ ॥

(99) **शैलव्यक्तप्रतिविलपितां सान्द्रतापानुविद्धां**
**तन्वानानां नयनसलिलैर्मातरं ते सबाष्पाम् ।**
**पश्यन्तीनां प्रबलमदनोन्मादपर्याकुलं मां प्रायो**
**जातं किमपि रुदितं व्योम्नि कादम्बिनीनाम् ॥ ३९ ॥**

विद्युतं स्तनितञ्चोक्तवान् प्रथमपतितं वर्षमारभ्याह **शैलेति** । "उपरि घनं घनपटलं दूरे दयिता किमेतदापतितम्" इति मेघमालादर्शनमात्रेण **प्रबलमदनोन्मादपर्याकुलं माम्** दुष्परिहरेण काम-कृतेन चित्तविभ्रमेण व्याकुलतया परितो भ्रमन्तं मां पश्यन्तीनां **कादम्बिनीनां** मेघमालानां **व्योम्नि**= गगने । वृष्टिर्जातेति न मे मतम्, किं तु मद्दर्शनात् एतद्दुःखासहनात् **किमपि** अनिर्वचनीयं **रुदितं** रोदनमेव जातं **प्रायः** मतम् । "कन्यादानां दशवदनवत् क्वापि जातावजाताः नालम्बन्ते कथमिव दयां निर्मलत्वोपपन्नाः" इति मदुक्तरीत्या तासां तावती करुणाऽऽसीत् । विशिष्य च ताः कादम्बिन्यो वर्ण-गुण सर्वजनरमणादिना मत्साम्यमापन्नाः मम सोदर्यः । इदञ्च रुदितं त्वन्मातृकरुणदशातोऽधिकम् तद्धेतुत्वादित्याह पूर्वार्धेन । सीताया माता मही स्वयं कठिनाऽपि अन्तस्तापे समधिके सत्यपि अना-विष्कृततापाऽपि कादम्बिनीरुदितसमापत्तिवशात् स्वखेदमाविश्चकार । कादम्बिनीस्तनितं शैले प्रतिफलितं मह्या शैलमूलं कृतः प्रतिविलाप इवासीत् । प्रतिध्वनिः सुताजामातृमिथोविरहासहनमूलः जामातृदैन्यासह-कादम्बिनीप्रविलापदर्शनोद्रिक्तः तन्मातृप्रतिविलापत्वेनाध्यवसितः । अथ निदाघकालिकसूर्यातपसं-तप्तमहीतापः सीतारामक्लेशमूलमहीतापत्वेनाध्यवसीयते **सान्द्रतापानुविद्धामिति** । निबिडेन तापेना-नुस्यूतं विद्धां प्रहृताम् । **सबाष्पाम्** । अभ्युष्णात् भूप्रदेशात् मेघतो वर्षबिन्दूनां प्रथमसंनिपाते ऊष्मा बहिरधिकमाविर्भवति । तस्य बाष्पस्य क्लेशमूलभूमिनेत्राश्रुत्वकल्पना । उभयस्यापि **बाष्पशब्दवाच्य-त्वात्** । तदुत्पादकमाह **नयनसलिलैरिति** । कादम्बिनीकर्तृकविलापेन प्रतिविलापोद्भववत् कादम्बिनी-वर्षजलपातेन भूमेर्बाष्पप्रादुर्भावः । कादम्बिनीनां नयनाभावात् नयनपदं कथमिति चेत्, 'निरीक्ष्य विद्युन्नयनैः पयोदः' इत्यन्यत्र प्रयोगात् विद्युत एव नेत्राणि । मेघस्यांशा एव वा । यद्वा नयनानि= स्वसंबद्धस्य स्वेन सह स्थलान्तरप्रापकाणि सलिलानि वर्षजलानि, नेत्रसंबन्ध्यश्रुत्वेन भाव्यन्ते । **ते मातरं** भूमिमेवमेवं तन्वानानां कादम्बिनीनामित्यन्वयः । मदीयदुर्दशाजनितकारुण्यबहुव्यक्तिदुरवस्थाकारितं त्वन्मातुरपि महत् कारुण्यमिति स्वक्लेशासह्यत्वमावेद्यते ।

एवमन्तरिक्षे भुवि च सर्वं मेऽनुकूलमिति सहायलाभात् तत्सहरोदनादिना किञ्चिच्छमित-संतापोऽहं तत्तत्क्लेशपरिहारायापि त्वत्प्राप्तौ त्वरमाणोऽस्मीत्युक्तं भवति ॥ ३९ ॥

(100) देहस्पर्शं मलयपवने दृष्टिसंभेदमिन्दौ
धामैकत्वं जगति भुवि चाभिन्नपर्यङ्कयोगम् ।
ताराचित्रे वियति वितते श्रीवितानस्य पश्यन्
दूरीभूतां सुतनु विधिना त्वामहं निर्विशामि ॥ ४० ॥

संश्लेषकालेऽनुकूलानां विश्लेषकाले प्रतिकूलत्वमिति सामान्यतः सत्त्वेऽपि किञ्चिद्विवेकेनानुकूलत्व-भावना शोकोद्रेकशमनी इति विभावयता कादम्बिन्यादावनुकूलत्वबुद्धिरुपपादिता । अथ मलयमारु-तादावपि तद्बुद्धिं वर्तयन्, ब्रह्माण्डान्तर्यत्र क्वापि स्थितावपि त्वं समानेतुं शक्येत्याश्वासोऽस्तीति व्यनक्ति देहेति । 'वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश । त्वयि मे गात्रसंस्पर्शः चन्द्रे दृष्टिसमागमः' इति श्लोकार्थं प्रथमपादेनानुसंधत्ते । हे सुतनु=पतिभोगप्रापकलक्षणपूर्णदेहे ! मलयपवने मलयद्वारा लंकात आगते वायौ देहस्पर्शं त्वद्गात्रसंगमम् । वातस्य गन्धाऽऽनायकत्वं प्रसिद्धम्, 'वायुर्गन्धा-निवाऽऽशयात्' इति । पुष्पादीनां गन्धश्च स्वाश्रयावयवसूक्ष्मकणसाहित्यैनैव आनेतुं शक्यते । एवञ्च सीतां स्पृष्ट्वा आगतो वातः तदीयविग्रहगतपद्मगन्धं वहन् नूनमतिसूक्ष्मविग्रहांशमपि वहतीति तदंशानां मद्गात्रस्य च संयोगात् देहस्पर्शसिद्धिरिति भावः । 'मार्गे तिष्ठन् मलयमरुतां वारितो लक्ष्मणेन' इति बाधकत्वेन गृहीत एवं चिन्तनयाऽनुकूलत्वेन भाव्यते । इन्दौ चन्द्रे दृष्ट्योरुभयोः संभेदं समागमम् । आवयोः पूर्णसंश्लेषाभावेऽपि विरहार्त्या चन्द्रे उभाभ्यां युगपत् दृश्यमाने मद्दृष्टेः त्वद्दृष्टेश्च तत्र परस्परसंगमो दुरपलपः । एवं चन्द्रो घटक इत्याश्वासः । जगति ब्रह्माण्डे उभयोर्वर्तमानत्वात् धाम्नः गृहस्य एकत्वम् । महति गृहे दम्पती पृथक् पृथक् यदि दूरे वसेताम्, तावता, 'अत्रैव गृहेऽस्ति, अतोऽ-नायासेन द्रष्टुं संगन्तुञ्च शक्यते' इति यथा मनस्समाधिर्भवति, तथा मे मनस्त्वयि बुद्धिं करोति । ब्रह्माण्डे यत्र क्वापि स्थितावपि सुलभैवेति मदीयशक्तिमनुरुध्याहं निश्चितवानस्मीति भावः । संप्रति लंकायां दृष्टा यदि तेन रक्षसा भयादन्यत्र कुत्रापि नीत्वा स्थाप्येः, तदाऽपि ग्रहीष्यामि । रक्षसि तस्मिन् मारिते वशंवदो विभीषणः स्वजनैः सह त्वां मह्यमानयेदेव हीति सूच्यते । अत्र जगच्छब्दो न भूलोकपरः; भुवीति वक्ष्यमाणत्वात् । लोकभेदेऽपि एकधामकत्वमत्र वक्तव्यम् । अतो ब्रह्माण्ड-इत्युक्तम् । एवं लोकान्तरस्थितावपि संश्लेषे चिन्त्यमाने भुवि ते वासः एकपर्यङ्के पृथक्स्थितिरिव सांनिध्यातिशयाय भवतीत्याह भुवीति । अभिन्नेति । पर्यङ्कभेदेऽपि संनिधानबुद्धिर्लोकेऽस्ति; किमुत पर्यङ्काभेदे इति भावः । भूमेः पर्यङ्कतां वितानविशेषमूलं निश्चाययति तारेति । ताराभिः नक्षत्रैः, तेषां विभिन्नवर्णाकारतया चित्रे नानावर्णे आश्चर्यभन्ते च वियति आकाशे श्रीवितानस्य श्रीसमेत-स्योल्लोचस्य नागपर्यङ्कस्योपरि सहस्रफणाविस्तारवत् पर्यङ्कोर्ध्व देशे दूरे विस्तारितः पटो वितानः । तस्य श्रीः ताराकल्पमुक्तारत्नादिभिर्मध्येमध्येऽलंकृतत्वम् । पञ्चानामपि द्वितीयान्तानां पश्यन्नित्यत्रान्वयः । विभावयन्नित्यर्थः । अहं विधिना दैवदुर्विपाकेन दूरीभूतां प्राक् अदूरामिदानीं दूरां त्वां इमान्

पद्मांशान् पश्यन् निर्विशामि कथञ्चिद् भुञ्जान एवास्मि । दूरीभूतायास्तव भोगस्याभावेऽपि केषुचित् प्रतिकूलेष्वपि भोगोपयोगिवस्तुत्वकल्पनया भोगवन्तमेवात्मानं भावयन् जीवामीत्यर्थः । यदि **विधिना** जीवामीत्यन्वयः, तदा **विधिना** भाग्यवशादित्यर्थः ॥ ४० ॥ (१००)

(101) **प्राप्तैः सख्यं तव नयनयोः पद्मकोशैः प्रबुद्धैः**
**सन्नाहं नस्समयनियतं साधु सन्धुक्षयन्ती ।**
**सेनायोग्यां सरणिमधुना दर्शयन्ती शुभाशा**
**सीते नूनं त्वरयति शरत् त्वत्समीपं निनीषुः ॥ ४१ ॥**

शिशिरादिवर्षान्तेषु ऋतुषु प्रतिकूलानुकूलभावनं प्रासमुक्तम् । पूर्वश्लोकः सर्वकालसाधारणः। अथ प्रकृते शरदृतौ प्रतिकूलानां पद्मानामनुकूलत्वमनुसंदधानः स्वस्य प्रवृत्त्यतिशयं स्थितं ज्ञापयति **प्राप्तैरिति**। हे सीते! अधुना इदानीं प्रवृत्ता **शरत्**। **तव नयनयोः सख्यं प्राप्तैः**। स्नेहातिशयात् त्वदीययोर्नेत्रयोरपि स्वात्मनामिव विकासप्रापणास्था पद्मानामिति भावः। **प्रबुद्धैः** यथावत् विकासं प्राप्तैः **पद्मकोशैः** पूर्वं मुकुलतया स्थितैः सरसिजैः । तन्मुखेनेति यावत् । तत्प्रबोधदर्शने हि शरत् समागतेति ज्ञायते । **नः** वीराणामस्माकं क्षत्रियादीनां **समयनियतं** शरत्काले नियमेन भवन्तं **संनाहं** युद्धोद्योगं **साधु** फलेग्रहितया **संधुक्षयन्ती** अभिवर्धयन्ती सती, **शुभाशा**। निर्मलसर्वदिक्का। **आशा** दिक् । मङ्गलवहमनोरथजनिका च ; **शुभा आशा** मनोरथः यतः सेति विग्रहात् । **सेनायोग्यां** कर्दमाभावात् सर्वत्र सलिलादिलाभाच्च सैन्यसंचारार्हां **सरणिं** प्रतिपक्षिस्थानगमनमार्गं **दर्शयन्ती** च सती **त्वत्समीपं** लंकास्थानं **निनीषुः** मां प्रापयितुमिच्छन्ती **त्वरयति** त्वरां नः उत्पादयति । **नः** इति पुनरनुषज्यमानं लक्ष्मणसुग्रीवहनुमदादिपरिवृतत्वं स्वस्यासाधारणं वीर्यञ्च दर्शयति । दिशां शुभत्वे **सरणेः** सुगमत्वे च निरीक्ष्यमाणे शरत् पद्मप्रबोधमपि ममानुकूलतयैव करोति, न बाधनार्थमिति **नूनम्** मम निश्चय इति भावः ॥ ४१ ॥ (१०१)

(102) **तातादेशात् सपदि भरते न्यस्तराज्याभिषेकं**
**या मामेका वनमनुगता राजधानीं विहाय ।**
**तामेव त्वामुचितशयनां बाहुमध्ये मदीये**
**दूरे कृत्वा (कर्तुः) गुणवति! मुहुर्दूयते जीवितं मे ॥ ४२ ॥**

एवं शरदि त्वरयन्त्यामपि प्रतिकूलान्यपि अनुकूलत्वेन भावयन्नहं कथञ्चिदाश्वस्तो विलम्बेयेति न मन्तव्यमिति जिज्ञापयिषुः स्वस्यासह्यं खेदमनुवर्तमानमावेदयति **तातेति** । हे **गुणवति!** "यद्यप्येष भवेत् भर्ता ममाऽऽर्ये वृत्तवर्जितः । अद्वैतमुपचर्तव्यस्तथाऽप्येष मया भवेत्" इति प्रकटितपातिव्रत्यभूषिते या त्वं **तातादेशात्** कैकेय्या ज्ञापितात् मत्पितुर्नियोगाद्धेतोः, उक्तं हि, "न खल्वहं न गच्छेयं वनं जनकनन्दिनि । वचनं तन्नयति मां पितुः सत्योपबृंहितम्" इति । **सपदि** तत्क्षणे एव। साक्षात्

पितुर्मुखात् वाक्यमायात्विति प्रतीक्षां विना भरते न्यस्तराज्याभिषेकम् राज्ये अभिषेको भरतस्यैव भवत्विति अनुमतवन्तम्। तथा, 'अद्य त्विदानीं रजनीं पुत्र मा गच्छ सर्वथा' इति पित्रा दिनमेकं तत्र स्थितिमिच्छता प्रतिरुद्धमपि, 'प्राप्स्यामि यान् अद्य गुणान् को मे श्वस्तान् प्रदास्यति' इति प्रत्युच्य, ['यावत् त्वं न वनं यातः पुरादस्मादभित्वरन्। पिता तावन्न ते राम स्नास्यते भोक्ष्यतेऽपि वा' इति त्वरयन्त्याः कैकेय्या मनोरथपूरणमेको गुणः। एकदिनस्थितौ पौराः सर्वे समेत्य कैकेयीं परिभर्त्स्य तन्मनोरथभंगं कुर्युः; तदप्रसंगसंपादनं द्वितीयो गुणः। यदि पिता दुःखमसोढ्वा म्रियेत, गमनं प्रतिरुद्धं स्यादिति तद्वारणं तृतीयो गुणः। संपत्करे पुष्यनक्षत्रे प्रस्थानं विहाय विपत्करे परदिने वनगमनेऽनिष्टं स्यादिति तत्परिहरणं चतुर्थो गुणः। एवमादयो गुणा इति।] सपद्येव राज्याभिषेकं भरते न्यस्तवन्तम्। यद्वा सपदीति वनमनुगतेत्यत्रान्वेति। माम् अनु=मया सह एका वसिष्ठमहर्षिणा अन्तःपुरस्त्रीभिः सर्वैश्च वार्यमाणाऽपि, त्वदनुकूलं भाषितुं तत्र कस्यचिदभावेऽपि, परिचरणार्थदास्यादिपरिकरमपि विहाय एकाकितया, राजधानीं अयोध्यां तवाभिषेकं वसिष्ठमहर्षौ वाञ्छत्यपि विहाय वनं गता। "सीता चान्वेति मां वनम्" इति वाक्यप्रत्यभिज्ञापकं मामेका वनमनुगता इति वाक्यम्। वनमित्यस्य वनं प्रतीत्यर्थस्वीकारे मामनुगतेति अनुशब्दपृथक्करणं विनाऽन्वयो भवितुमर्हति। पृथक्कारे वनं गतेत्यस्य वनं प्राप्तेत्यर्थः। तामेव त्रयोदशवत्सरात्मकदीर्घकालमहाघोरवनवासदुःखानुवृत्तावपि प्रस्थानकालिकीं पतिसाहचर्यस्यैव सुखत्वबुद्धिं दधानामेव स्थितां त्वाम्। मदीये बाहुमध्ये उचितशयनाम्। तदा हि, 'चुक्रोश पतिमायस्ता पतिमालिङ्ग्य सुस्वरम्' इति मद्बाहुमध्यमुपाश्रितैवासीः। अतो मयाऽपि, 'कान्तेयं वने कर्कशेषु प्रदेशेष्विव शाद्वलेऽपि न शेताम्; अत्रैव बाहुमध्ये शयाना निद्रातु। यथा विष्णोर्बाहुमध्य एव श्रीर्नित्यं शयनासनादिकमनुतिष्ठति, तथा भवतु' इति विसृष्टमासीदिति भावः। बाहुमध्यस्य मदीयत्वेन विशेषणात् मध्यपदं नान्तरालरूपाकाशपरम्। किं तु वक्षःपरम्। अथापि वक्षसी त्यप्रयुज्य बाहुमध्ये इति प्रयोगात् वक्षस्स्थलमुपाश्रिता बाहुभ्यामप्यालिंग्य भुजमध्यस्थाप्यराज्यवत् अविहाय रक्षितेति सूच्यते। शयितवतीमित्यप्रयुज्य उचितशयनामिति प्रयोगः सर्वदा वक्षसि शयनाभावेऽपि पार्श्व एव शयनेऽपि तथा रक्षणौचित्यमस्तीति प्रेमातिशयप्रदर्शनाय। ईदृशीं त्वां दूरे कृत्वा। अङ्गस्पर्शं विना सहावस्थानेऽप्यतृप्त्यैव मया हा तव दूरीकरणमिति विषादातिशयं दर्शयति। विसृज्यैनामाश्रमे मारीच मायामृगानुधावनमेतत्कृतं हि अस्याः दूरीकरणमेव। सौमित्रे! त्वमेव मृगमानय; मारीचश्चेन्, मारयेति आज्ञाप्य यद्यहमाश्रम एव स्थितः स्याम्, तदा रावणो नाऽऽयास्यति, आगतो वा खरस्थानं गमितः स्यात्। अतस्त्वत्प्रेरणे सत्यपि मत्कृतमेव दूरीकरणमिति भावः। दूरे कर्तुमिति पाठे तुमुन्नन्तत्वात् त्वामिति द्वितीयेति भाव्यम्। तृजन्तत्वे तवेति षष्ठ्यापत्तेः। न च क्त्वाप्रत्यये दूयत इत्यनेनान्वयो न घटते; क्त्वोऽस्य रामकर्तृकत्वात् दूनश्च जीवितकर्तृकत्वादिति वाच्यम्—जीवितमिति भावे क्तान्त घटकस्य धातोः रामकर्तृकजीवनवाचितया तत्र क्त्वाप्रत्ययान्वयेन समानकर्तृकत्वसंपत्तेः। कृत्वा

वर्तमानस्येति षष्ठ्यन्तपदाध्याहारमपीच्छन्ति । जीवितमित्यस्य प्राणविशिष्टात्मस्वरूपपरत्वे तु ममात्मा त्वां दूरे कृत्वा दूयते इति समानकर्तृकत्वं सूपपन्नमेव । जीवितं जीवनं प्राणः इत्युक्तौ, दूयत इत्युक्तस्य परितापस्य तत्कर्तृकत्वं न मुख्यं भवतीति आत्मगतः परितापस्तत्राऽऽरोपणीयः । एवं दूरीकरणमपि तत्कर्तृकत्वेनाऽऽरोप्यतामिति चेत्-अस्तु स पक्षः, यत्र लाघवं लक्ष्यते ॥ मुहुः शश्वत्-प्रतिपदम् ॥ एतावता युद्धोद्योगातिशयसंपत्त्यर्थ एव समाश्वासः कतिपयश्लोकैः प्रागुक्तः, न तु प्रवृत्तिमान्द्यहेतुरित्युक्तं भवति ॥

(103) सेतुं बद्ध्वा विपुलमचलैः सायकैर्वा पयोधौ
कृत्वा लङ्कां स्रजमिव करे खेलतां वानराणाम् ।
अल्पीयोभिः सुमुखि ! दिवसैर्योधयन् यातुधानान्
कर्णे शीधुं तव रचयिता लक्ष्मणश्चापघोषैः ॥ ४३ ॥

ननु सेनायोग्यसरणिलाभेऽपि ससैन्यस्य ते समुद्रतीरपर्यन्तमनायासेनाऽऽगमनेऽपि, शरैस्तु संकुलां कृत्वा लंकां परबलार्दनं कथं भविष्यति, तस्य दुस्तरत्वात् । यदिपरं हनुमन्तमारुह्य त्वयात्राऽऽगमनं क्रियेत, तथापि सैन्यमत्र न प्रविशेत् । यदि सागरप्रेषितो मैनाकः पोतवत् तीरमासाद्य युष्मान् आरोप्य सुवेलं प्रापयेत्, तदाऽपि सर्वसमागमो दुष्करः। ते सर्वेऽप्यायान्तु, मा वा । लक्ष्मणेन यदि साह्यं क्रियते, तदलम् ; "भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परंतपः । कस्य हेतोर्न मां वीरः परित्राति महाबलः ॥" । स महात्मा मया तदा परुषं भाषितः ; स किमिदानीं मन्यत इति न जाने इति सीताचिन्तेति कृत्वा समाधत्ते सेतुमिति। अचलैः पर्वतैः वानरोत्खातैः पयोधौ सायकैः बाणैरेव वा स्वयमेव पयोधौ तदुपरितने गगने विपुलं विशालं सेतुं लक्ष्मणो बध्वा, तन्मार्गेण प्राप्य खेलतां विहरतां वानराणां करे लंकां स्रजमिव कृत्वा । वानरहस्तप्राप्ता हि माला छिन्ना भिन्ना विशीर्णा भवेदिति प्रसिद्धम्, तथा कृत्वा, यातुधानान् राक्षसान् योधयन् युद्धे प्रवृत्तान् कुर्वन्, हे सुमुखि! त्वन्मुखम्लानिपरिहरणार्थमेव अल्पीयोभिः अत्यन्ताल्पैः मासादूर्ध्वं न जीविष्ये इति त्वच्चिन्तितदिनसंख्यातोऽप्यल्पैः सप्ताहन्यूनैरेव दिवसैः लक्ष्मणः चापघोषैः स्वधनुर्ज्याटंकारैः तव कर्णे शीधुं मधु, मध्वास्वादनभवानन्दतुल्यमानन्दं रचयिता-उत्पादयिष्यति । वानरेषु लंकां ध्वंसयत्सु लक्ष्मणे च चापघोषैर्यातुधानान् युद्धभूमिमानीतवति तत्र रावणपर्यन्तान् लक्ष्मणादिसहितो हनिष्यामीति भावः । सेतुबन्धप्रभृतेः सर्वस्यापि कार्यस्य लक्ष्मणकार्यत्वकथनं सर्वमिदमीषत्करमिति, 'मया परुषं भाषितेनापि आश्रम एव स्थातव्यम् । तदकरणादहमेवास्यानर्थस्य मूलम्' इति लक्ष्मणः पश्चात्तापेन तप्यमानः स्वयमेव सर्वं कर्तुमुद्युञ्जानोऽस्तीति च ज्ञापनार्थम् । मासाधिके काले गते भरतपरिपालनाय रामोऽयोध्यां गतो भवेत् ; ततो न मां स्मरिष्यतीति सीता शंकमाना मासादूर्ध्वं न जीवेयमित्युक्तवती ; ततस्त्वरितव्यमिति चाऽऽशयः ॥ ४३ ॥ (१०३)

(104) रक्षोमौलिस्तबकलवनात् वैरबन्धे विमुक्ते
गत्वा चोर्वीं (?) गगनपदवीसैरिणा पुष्पकेण ।

सिद्धारम्भौ सपदि (?) भवतामाधिराज्याभिषेकात्
सम्प्राप्स्यावश्चिरविरहतस्सञ्चितान् देवि! भोगान् ॥ ४४ ॥

न केवलमनिष्टनिवृत्तिः, प्रतीक्षितसर्वेष्टलाभोऽपीत्याह रक्ष इति । लंकाप्राप्तिः कथमित्येतदेव चिन्तनीयमासीत् । रावणादिवधस्तु लीलामात्रमिति दर्शयितुं दशवदनवदनदशकलवनं पुष्पगुच्छापचयत्वेन वर्णयति। रक्षसः रावणस्य मौलीनां शिरसामेव स्तबकस्य गुच्छस्य लवनात् अपचयात् । स्तबके बहूनि पुष्पाणि स्युः । तेषां प्रत्येकं लवनं न कार्यम् । सकृत् स्तबकलवने सर्वापचय एव । तद्वत् एकेनैव शरेण युगपदेव सर्वशिरःपातविधानादत्र न प्रत्येकलवनम्; किंतु स्तबकलवनम् । सप्तपालवृक्षच्छेदवत् । करिष्यति चान्ते हृदयभेदनेन सर्वशिरःपातम् । यद्वा रक्षसां रावणकुम्भकर्णेन्द्रजिदादीनां मौलय एव स्तबकाः ; तेषां लवनादिति । वैरबन्धे रावणेनास्मद्विषये कृते विरोधस्य दुर्मोचे बन्धे विमुक्ते । मरणान्तानि वैराणि । स चाऽऽमरणं वैरं न त्यजतीति भावः । अथेष्टप्राप्तेः पुष्टिं दर्शयति गत्वे-त्यादिना । पुनरीदृशस्य खेदस्यावसर एव न भविष्यति, यतो वनं विहाय स्वनगरे स्थास्यावः। परंतु बहुदूरे स्थितयोः कथं तत्र गमनं सुकरमिति न शंक्यम् ; कुबेरपुष्पकेणैव कार्यसिद्धेरिति भावः। गगनस्य पदवीं= आकाशसंबन्धी अयोध्याप्रापणानुगुणो मार्ग एव मार्गः। तत्र वैरिपुष्पकेण स्वैरिणा स्वैरवता स्वेच्छया स्वतो निराबाधमार्जवेनातिशीघ्रं चरता। भूमौ गमने हि महान् विलम्बः, वक्रमार्गोच्चनीचभागादिवर्जनप्रयासश्च स्यात् । तादृशेन पुष्पकेण उर्वीं गत्वा भूमिं प्राप्य। चकारो गगनसमुच्चये इति रसाल्हादिनी ; पुष्पकेण गमनात् भूम्यन्तरिक्षोभयगमनं भवतीति । गमनस्य लवनेन समुच्चय इत्यन्ये । वैरबन्धविनिर्मोकरूपानिष्टनिवृत्तेः भोगप्राप्तिरूपेष्टस्य च समुच्चये इत्यपि सुवचम् । इष्टप्राप्तिकथनोपक्रमपदे ह्यत्र चकारः । वस्तुतोऽद्यापि भूमावेव स्थितेः उर्वीं गत्वेति नातीव रुचिरम् । गत्वा स्वोर्वीमिति स्वस्थानमुच्येत । तत्रापि क्लेशः । गत्वाऽयोध्यामिति पाठो युक्तः । यद्वा पुष्पकेणायोध्यां गत्वा उर्वीश्वासत्परिपाल्यत्वेन भरतात् गत्वा लब्ध्वेत्यर्थः स्यात् । आवयोर्मिथःप्राप्तिवत् उभयोरुर्वीपालनाधिकारप्राप्तिरपीत्युक्तं भवति । सिद्धारम्भौ आरम्भस्य सिद्धिर्नाम फलसंपन्नता । सफलप्रथमप्रयत्नौ । तदा वेदवतीरूपेण स्थितपूर्वायास्ते य आरम्भो रावणवधार्थः, तत्पूर्तिरासीत् । ममापि पित्राज्ञापरिपालनाय चतुर्दशवत्सरवनवासारम्भः पूर्णः । "अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् । आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्" । प्रथमं यो राज्ये मदभिषेकाय तातस्याऽऽरम्भः, यश्च भरतस्य चित्रकूटे तदर्थमेवारम्भः, तयोरपि फलेग्रहित्वमिदानीम् । अथवा राज्याभिषेकात् सिद्धारम्भावित्यन्वयः। राज्येऽभिषेके निष्पन्ने सर्वकामसमृद्धतया आवयोर्भोगार्था आरम्भाः सर्वे सिद्धाः=सफला एव भवेयुरिति। सपदि—अयोध्याप्राप्तिक्षण एव । भवतामिति षष्ठ्यन्तं पठ्यते । विशेष्यानिर्देशात् भवतां पूज्यानामित्यर्थं वर्णयन्ति । अभिषेकान्वयि । वसिष्ठादिकृतादभिषेकादित्यर्थः । सपदि भवतां प्रकृत समये वर्तमानानां महर्षिजनबन्धुजनपौरजानपदजनानामित्यप्यर्थः स्यात् । सपदि भवन्तः जीवन्तः ।

जीवन्त एव द्रक्ष्यन्ति मदभिषेकमहोत्सवम्, न तु मे पिता दशरथ इति क्लेशं दर्शयितुमित्थं प्रयोगः। **भरतेनाऽऽधिराज्येऽभिषेकादित्यपि** पाठः स्यात्। सिद्धारम्भौ भवतामिति पृथग्वाक्यं वा। लोटि द्विवचनम्। सुग्रीवविभीषणौ सिद्धारम्भौ भवताम्। भरतलक्ष्मणौ दासौ सिद्धार्थौ भवताम्। दशरथभरतौ सिद्धार्थौ भवताम्। भरतशत्रुघ्नौ चास्मत्प्राप्त्येति। **चिरविरहतः** संवत्सरन्यूनकालविरहमपि चिरविरहं मन्यते, कल्पाकारतयैव कालस्य क्षपितत्वात्। यद्वा विशेषतो राजभोगानां वनेष्वलब्धतया चतुर्दशवर्षात्मकचिरकालायोध्याविरहत इत्यर्थः। **सञ्चितान्** मनसा प्रतिक्षणं भावितान् समुदितान्। मारीचमृगहरणकालेऽपि सीतया खल्वाशंसितं तच्चर्म राजभोगे उपयोक्तव्यमिति। विरहकाले गण्यमानाः भोगाः संगमकाले संस्मृत्यानुभूयेरन्निति **कालिदासो मेघे,** "पश्चादावां विरहगणितं तं तमात्माभिलाषं निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु" इति ॥ ४४ ॥ (१०४)

(105) **चित्ते कुर्यात् तदपि भवती यज्जनस्थानयुद्धात्**
**संप्राप्तं मां दशमुखसमान् पा(मा)रयित्वा खरादीन्।**
**शस्त्राघातं स्तनकलशयोरूष्मणा शोषयद्भिः**
**गाढाश्लेषैरपिहितवती गद्गदा हर्षबाष्पैः ॥ ४५ ॥**

'कर्णे शीर्षं तव रचयिता लक्ष्मणश्चापघोषैः' इति लक्ष्मणस्य योद्धृत्वमुक्तम्। **रक्षोमौलिस्तबकलवनादित्यत्रापि** न कर्ता निरदेशि। अतो रामः स्वयमयुध्यमान एव रावणवधं विधित्सतीति सीता मन्येत। अतश्च रावणवधपर्यन्तमृश्यमूक एव स्थास्यति किम्। 'शरैस्तु संकुलां कृत्वा लंकां परबलार्दनः। मां नयेत् यदि काकुत्स्थः तत् तस्य सदृशं भवेत्' इति मया चिन्तितम्। स तु, आश्रमे रावणागमनकाले यदि लक्ष्मणः स्थितोऽभविष्यत्, स एव रावणममारयिष्यत् इति लक्ष्मणप्रभावप्रख्यापनाय स एव प्रेषणीय इति मन्यत इव इति च विमृशेत् — इति मनसिकृत्य, त्वदाँकर्षणप्रवृत्तशूर्पणखादौष्ट्यमसहमानोऽहं खरादीन् साक्षादेव ह्यहनम्। त्वामाकृष्य नीतवन्तं रावणं सपुत्रामात्यबान्धवं हन्तुं कथं न साक्षादागच्छेयम्। यदि भीतो रावणः पुरान्तरेव स्यात्, तदा नगरप्रवेशं संप्रत्यनिच्छता मया लक्ष्मणमुखेनैव स वध्यः स्यादिति विभाव्य तस्य प्राधान्यमादृतम्। राज्याभिषेकानन्तरभाविभोगाद्यपेक्षया महत्तरतया मयाऽऽशंस्यमानो भोगः कश्चिदस्ति, "तं दृष्ट्वा शत्रुहन्तारं महर्षीणां सुखावहम्। बभूव हृष्टा वैदेही भर्तारं परिषस्वजे" इति परमास्तिकलोकपरमानन्दप्रदः आवयोर्भोगः। तं मे प्राप्तं कथमुपेक्षेय। अतोऽहमपि साक्षादागत्य युध्वा तदातनमदीयसर्वव्रणविरोपणमपि त्वत्परिष्वङ्गेण संपाद्य सपद्येव अभिषेकमनुभविष्यामीत्याशयेनाऽऽह **चित्ते** इति। **दशमुखसमान्** रावणेन तुल्यान् **खरादीन्** खरदूषणत्रिशिरसः तदनुबन्धीनि च चतुर्दश सहस्राणि रक्षसां भीमकर्मणां **पारयित्वा**। पार तीर समाप्तौ। समाप्य। **जनस्थानयुद्धात्** जनस्थाने एकाकिनैव कृतात् रणात् रणे निर्वृत्ते **संप्राप्तं** विजयश्रिया गगनचरादिकृतश्लाघाघोषेण च साधुपरित्राणदुष्कृद्विनाशरूपकार्यद्वयपूरणेन च समीपमागतं मां भवती हर्ष-

**बाष्पैः** आनन्दाश्रुभिः सहिता **गद्गदा** हर्षाधीनस्वरविकारास्पष्टाक्षरसंदर्भा सती, स्तनौ कलशाविव तयोः **ऊष्मणा** तापेन मम **शस्त्राघातं** खरादिबाणकृतं विकटवीरव्रणं **शोषयद्भिः** शोषयद्भिः **गाढैराश्लेषैः** दृढपरिष्वङ्गैः **अपिहितवती**—व्रणकिणस्याप्यभावः शरीरसौकुमार्यं च यथा स्यात् तथा तिरोहितवतीति यत्, तदपि तव चित्ते भवती कुर्यात्। भवत्या तत् स्मर्तव्यम्। ततोऽतिशयेन भवत्याः गाढः परिष्वङ्गो मया प्रतीक्ष्यमाणोऽस्ति। अस्य भाविनः परिष्वङ्गस्यावसरं हनुमान् कल्पयामासेत्येव मया, "एष सर्वस्वभूतो मे परिष्वङ्गो हनूमतः" इत्युक्त्वा परिष्वक्तः स इति ॥ ४५ ॥ (१०५)

(106) **शच्याः क्लेशं क्वचन समये तादृशं चिन्तयित्वा**
**स्मृत्वा देवीमचलतनयां विप्रयुक्तां शिवेन ।**
**रक्षाऽऽत्मानं कथमपि शुभे जीवितालम्बनं मे**
**पत्युश्छन्दात् व्यसनमपि हि श्लाघनीयं वधूनाम् ॥ ४६ ॥**

संदेशेन प्रणयमहता मैथिलीं जीवयिष्यन् यदारेभे, तदुपसंहरन् प्राचीनानेकपतिव्रतावत् पतिप्रीतये क्लेशं सोढ्वा जीवितं रक्षणीयमित्याह **शच्या** इति। त्रैलोक्याधिपतेर्महेन्द्रस्य महिषी, त्रिमूर्त्यन्तर्गतस्य पशुपतेः पत्नी चेति द्वे सर्वापेक्षयोत्कृष्टे इति तयोरत्र ग्रहणम्। स्वप्रियपतिसंश्लेषाभिलाषेण असह्यदुःखसहनमुभयोः। तत्राधिकं दुःखं दाक्षायण्या इति तत्कथनं पश्चात्। हे **शुभे** सकलमङ्गलास्पदमूर्ते! **क्वचन समये** कदाचित्। यदा वृत्रासुरवधजनितब्रह्महत्याभीत्या महेन्द्रे सर्वाविज्ञातं सरोजनालान्तस्तन्तौ निलीन आसीत्, नहुषश्चेन्द्रपदमास्थित, तदेत्यर्थः। **शच्याः** इन्द्राण्याः **तादृशं**—तदिव= अत्यन्तपरोक्षमतिदुर्वचमिव दृश्यत इति तादृशम्। भारतादौ विस्तरेण वर्णितत्वेऽपि अपरिच्छेद्यं **क्लेशं** दुःखं **चिन्तयित्वा** तारतम्यशीलनेन विचार्य। इन्द्रपदप्राप्त्या मदमेदुरेण नहुषेण त्रैलोक्यमिवेन्द्राणीमपि स्वायत्तीकर्तुं बलात्प्रवृत्तेनाऽऽपादितं दुःखम्। तदा हि तामपि प्रधर्षयितुं प्रवृत्ते नहुषे पतिव्रताशिखामणिः सा बृहस्पतिं शरणमुपगम्य कथमप्यात्मानं ररक्ष। भर्ता कुत्र गत इति न ज्ञातम्, स्वाराज्यं नहुषेणाऽऽक्रान्तम्। स्वस्थान एव स्थितया तया स्वजनेष्वप्यसहायेषु किंकर्तव्यताव्याकुलया स्वप्रियसंगमो भवेदिति विस्रम्भमात्रेण कस्मिन् क्षणे किमत्याहितं भवेदिति भीतभीतयैव सुमहान् कालोऽतिवाहितः। न हि नहुषो रावणवत् नानाविधशापनिवारितप्रवृत्तिः। त्वया पुनरनवद्यस्य प्रियस्य भर्तुरात्महितप्रवृत्तस्याल्पीयसैव कालेनाऽऽगमिष्यतो वृत्तं जानत्या परस्थले किञ्चिदानुकूल्यं प्राप्तमप्यनुकूलदैवकृतमित्याश्वासमवाप्याऽऽत्मा रक्ष्य इति भावः। ततोऽधिकं क्लेशमप्याह **स्मृत्वे**ति। **देवीं** जगत्संहाररूपदेवाधिकृतस्य रुद्रस्य पत्नीमपि **शिवेन विप्रयुक्तां** प्राप्तशुभपतिवियोगाम्। अत एव **अचलतनयां** हिमवद्दुहितृतया जनित्वा पतिप्राप्तये तपस्तप्तवतीं स्मृत्वा। शिवस्य पत्नी दाक्षायणी स्वपितुर्दक्षस्य यज्ञं प्रवृत्तं विज्ञाय अनाहूताऽप्यजिगमिषत्। तत् रुद्रो न युक्तममंस्त। अथापि सा कथञ्चित् पतिसंमतिं प्राप्य पितुर्गृहमगात्। पिता तु तां न प्रीत्या संभाषणेन मानयामास। ततः सा तेन परिभवेन सह

भर्तृमुखनिरीक्षणे विलक्षा, दक्षदुहितृत्वादेवेयं दुर्बुद्धिर्मे जातेति मन्वानेव, 'मन्नाम्नि मत्पितुर्नामापि निविष्टम्; अयञ्च पिता भर्तरि बद्धवैरः। अतो भर्ता मां दाक्षायणीति नाम्नाऽऽह्वयितुमपि संकुचति। अतः किमनेन दक्षजातेन गात्रेण' इति विभाव्य च तत्रैव तच्छरीरं विसृज्य शरीरान्तरेण पतिं प्राप्तुं पर्वतराजपुत्रीत्वेन जज्ञे। अद्भुता खल्वस्याः पत्यौ भक्तिः। यथा त्वं पूर्वं वेदवतीरूपेण स्थिता रावणेन केशपाशे स्पृष्टा तदङ्गं मा भूदिति, विष्णुप्रवणतया अन्येनावतारेण विष्णुपरिणयं कुर्यामिति संकल्प्यैव-मुत्पन्नाऽसि, तथा पार्वत्यपि। झटिति पुनर्जनित्वा कल्पकालजीवी पतिर्लब्धुं शक्य इति च, देवीत्वात् स्वशक्तिनिश्चयेन च सा तथा चकार। न मनुष्ययोनावेवं संकल्प्य मनोरथः पूरयितुं पार्यते। भवती च महात्मनो योगीश्वरस्य दुहिता स्वयमयोनिजा। तन्नामधेयघटितञ्च भवत्या नाम वैदेही, मैथिली, जानकीति मे अत्यन्तभोग्यम्। अतो जीवितमवश्यमेव रक्षेति। निदर्शनद्वयमेवं समन्वयनीयम्।

अत्र शच्या इव पार्वत्याः पतिवियोजनरूपक्लेशस्य परकृतत्वाभावात् क्लेशमित्यादेरनुवृत्तिर्द्वितीय-पादे नेष्टा; अथापि क्लेशः कश्चिदस्त्येवेति शचीगौरीक्लेशं विमृश्येति पूर्वं व्याख्याय यद्वेति भावान्तरमपि दर्शयन्ति, शचीक्लेशं चिन्तयित्वा तद्वत् आत्मधारणं कुरु। पार्वती हि भर्तुरननुमतेऽपि तं विसृज्य पितृयज्ञदिदृक्षया गत्वा तत्रावमता शरीरं जहौ। तत्फलं दीर्घकालं पतिवियोगः। तथा मा भूदिति॥

एवमुभयस्मरणेन त्वं **कथमपि** क्लेशेऽनुवृत्तेऽपि मे **जीवितस्य** प्राणनस्य आलम्बनभूत**मात्मानं** स्वदिव्यमंगलविग्रहं रक्ष। **हि** यस्मात् कारणात् **वधूनां** पतिव्रतानां कुलस्त्रीणां **व्यसनमपि** दैवादापतितं दुःखमपि, **पत्युः** भर्तुः **छन्दात्** मनोरथम् मदर्थे जीवतादियमिति रागमनुसृत्य यद्वा पतिजीवितभोग-प्रीणनविषयकस्वेच्छामनुसृत्य, **श्लाघनीयम्**— सर्वैरपि वधूपातिव्रत्यादिगुणश्लाघिभिरतीव प्रशंसनीयम्। चतुर्थपादोऽयं पूर्ववाक्यशेषभूतः। यस्मात् व्यसनमपि पतिकर्तृकानुरागपतिविषयकस्वानुरागोभय पूर्त्युदर्कम्, तस्मात् मे जीवितालम्बनमात्मानं रक्षेति रक्षाप्राधान्येन संदेशपूर्तिः॥ ४६॥ (१०६)

## (आध्यात्मिकार्थसंग्रहः)

द्वितीयाश्वासे त्रयोविंशतेः श्लोकानामाध्यात्मिको भावार्थः प्राक् समग्राहि। अथ शिष्टस्यार्थः संगृह्यते दिङ्मात्रेण, विस्तरं तु सुधियो यथायथं वर्तयिष्यन्तीति। (24) **दृष्ट्वा तस्या** इति श्लोके आचार्याणामनुकम्पानिधीनामनन्तदुःखाकुलजीवदर्शने स्वयमेव कारुण्यमाविर्भविष्यति। न केवल-माचार्याः--दशवदनवत् राक्षसकुले वा आसुरकुले वा क्वापि ये जाता भवन्ति **क्रव्यादाः** मांसाशिनः। देहात्मभ्रान्त्या देहभोगैकप्रवणाः इति यावत्। "असुराणां ह्येषोपनिषत्" इत्युपनिषन्निष्ठान् तान् विहाय आत्मनां निर्मलत्वं देहातिरेकञ्चोपपत्त्या गृहीतवन्तः चार्वाकविलक्षणाः सर्वेऽपि आत्मनो दुःखस्थितिवेदिनः करुणां प्रदर्शयेयुरेवेति। (25) **नेदीयस्यामिति**। जीवं प्रति सदुपदेशार्थं गतो भवान् शरीरेन्द्रियाणा-मायासदशायामध्यात्मविषयोपदेशो न श्लाघ्य इत्युदीक्ष्य, **नक्तञ्चरीणां** तमोवृत्तीनामुपरतिसमये पश्चिमे यामिनीयामे चेतना प्रसन्ना भवेदिति तदा कार्यं करिष्यन् विश्रान्तिं भजतु। (26) **शीतैरिति**। यथा

वृक्षस्य संपुष्पितस्य दूरात् गन्धो वाति, तथा ते पुण्यस्य कर्मणो दूरात् गन्धो वातीति त्वत्प्रभाव-प्रकाशकास्तत्तत्याः **गन्धवाह**शब्दवाच्याः तवाध्वश्रमं विनयेयुः । **षट्पदाः** पदषट्करूपद्वयमन्त्रार्थविदः अध्ययनाध्यापन-यजनयाजन-दानप्रतिग्रहरूपकर्मषट्कनिष्ठाः सदुपदेशार्हं त्वामुत्थापयेयुः। (27) **ताम्** इति। **तां** हनुमदादिपूर्वाचार्याध्यासितां शिंशुपाम् उच्चां बृसीमारुह्योपविष्टः मन्मथविकारादिहेतुशृंगारादिहेयरस-प्रधानवाक्प्रचारमभिभवन् उपदिष्टस्यार्थस्येषद्विस्मरणात् विशदज्ञानरहितं प्राज्ञं उज्जीवयिष्यन् प्रथमतः तंतं शिष्यं तदीययाजुषसामगादिस्वपूर्वपुरुषसमादृते सदाचारे स्थापयितुम्, सर्वसाधारणं मोक्षार्थं वेदान्तप्रमेयं विशदीकर्तुञ्च प्रवृत्तः **रघुजनकयोर्वंशकीर्तिं** गुरुवंशपितृवंशोभयप्रसिद्धिं प्रबोधय । आचार्यवंशो हि अध्या-पनावसरेऽवश्यमेवानुसंधेयो भवति। (28) **पत्युः** इति। जगतां पत्युः द्विपरार्धपर्यन्तायुःप्राप्तेष्वपि परिक्षीय-माणेषु **दीर्घायुषः** कालपरिच्छेदादिरहितस्य भगवतः प्रेमपात्रभूतोऽहं **जीवातुं**—तवोज्जीवनोपायभूतं गुरुपरिषदुपज्ञं मन्त्रादिकम्, 'गुरुं प्रकाशयेत् धीमान् मन्त्रं यत्नेन गोपयेत्' इति वचनमनुसृत्य अन्तरेव दधदस्मि । मादृशाः, 'अविवेकघनान्धदिङ्मुखे बहुधा संततदुःखवर्षिणि भवदुर्दिने उपरतिं निखिलपङ्कशोषणचणनिगमतनुभानुप्रकाशस्यावसरञ्चावेक्ष्य भगवदेकपातिव्रत्यनिष्ठान् प्रति सर्वसंमानार्हं पुरुषार्थोचितं **समयं**--श्रेष्ठं सिद्धान्तं **कूजितैः** वाल्मीकिकोकिलादिकूजितरूपेतिहासपुराणोपबृंहणरीतिमनु-रुध्य मुख्यांशसूचनेनोपदेष्टुमाविर्भवन्ति हि । (29) **यद्** इति। हे हंस! सदुपदेशार्थप्रवृत्त! एवं शिष्य-शिक्षणप्रवृत्तं त्वामासनाधिरूढं सर्वेश्वरस्य मे **प्रस्तावे**-प्रकर्षेण स्तवने सक्तं गुरुपंक्तौ द्वितीयभूता **मैथिली** (मिथ्-) "मेथीबद्धो भ्राम्यमाणो ग्रासग्रासं करोति गौः" इत्युक्तरीत्या मिथिलस्य मैथिलस्य वा= पशुप्रायाणां भ्रमणस्थानं यो लाति आदत्ते-वशयति तस्य मे पत्नी **भीरुः**---प्रजानां भयमेव सर्वदा या रौति सा, कदा जनानां क्षेम इति शोकाविष्टा स्वयमन्तस्तोषादमृतलहरीलब्धसब्रह्मचर्यैः अम्भोजाना-मुषसि मिषतामन्तरङ्गैः अपाङ्गैः मानयेत्। (30) **पश्यन्ती** इति। स चोपदेश्यो जीवः रघुपतिवधूः लघुगुणस्य सत्त्वस्य पत्युः=निर्वाहकस्य मे पत्नीवत् प्रियम् अन्तर्बहिश्च शुद्धं भवन्तमुद्वीक्ष्य मद्विषयोपदेशश्रवणोन्मुखो भवेत्। **स्त्रीणां** भगवत्पराणां तदनुबन्धि किं वा वस्तु मुदं न जनयेत् । कान्तेन भगवतोक्ता हि वार्ता **आगमोऽपि** वेदतुल्याऽपि भवति । वेदानुक्तमप्याचार्यमुखेन भगवदुक्तं वेदवन्माननीयम् ॥

(31) **पश्चाद्** इति । अथेदं वक्तव्यम्—जीवस्य ते शीघ्रमेव भगवत्प्राप्तिर्येन भाग्येन संप्रति प्रतीक्ष्यते, तेन ते **जीवन्** जीवननिर्वाहकः । 'यः प्राणेन प्राणिति, योऽपानेनापानिति' इत्यादावित्र भगवत एव जीवनस्वतन्त्रकर्तृत्वम् । **अनघः** आश्रितहेयनिवर्तकः **कोसलेन्द्रः** कोशं हृदयकोशं स्वस्थानत्वेन लाति=आदत्ते इति कोशलः । इदि परमैश्वर्ये । 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादौ प्रसिद्धः **कल्याणीं** ज्ञानानन्दस्वरूपं देहादिविलक्षणं त्वां **कुशलं** योगक्षेमं पृच्छति । येषु इत्यादिना उत्तरार्धेन हंसरूप आचार्यो लक्ष्मीतुल्यतया अनुग्रहैकमूर्तित्वेन श्लाघ्यते भगवता । शुद्धान्तसिद्धान्तिनः खल्वाचार्याः । यद्वा जीव एव श्रीवत् इतरसंबन्धानर्हत्व-भगवत्संबन्धित्वभगवन्माननीयत्वाद्याकारविशिष्ट-

इति कथ्यते । (32) यस्या इति । सदाचार्यसेवया लब्धतत्त्वज्ञानस्य श्रीविष्णुपुराणोक्तरीत्या प्रथमं भूषणायुधादिसंपन्नभगवद्ध्यानं विधाय क्रमेण शुभाश्रयविग्रहमात्रनिध्यानपरतया स्थितस्यैव ते दैवदुर्विपाकात् दूरे स्थितस्य भगवद्ध्यानार्थमवकाशमलब्ध्वा क्लेशेन कालं क्षिपतः भागधेयवशादेव प्रत्यासीदन्निव भवन् त्वन्नेत्रयोः पुरत एवाऽऽत्मानं स्थापयित्वा, तव तद्विषयकमनुभवमाविर्भावयितुमनाः एवमाह । (33) वेलेति । हे सुतनु! 'अपहतपाप्मा विजरो विमृत्युः' इत्याद्युक्तशुद्धस्वरूप! ज्ञानानन्द! शेषभूत ! पूर्वं आलयोद्यानार्चाप्रतिष्ठान-निरन्तरदैवार्चन-स्तुतिनमस्कारादिभिरेव कालयापनावसरे प्रणामार्चनपादग्रहणपरिष्वंगादिरूक्तेन भवता परमपदकर्तव्यभोगोपोद्घातभूतेन औपचारिकसांस्पर्शिक-सांदृष्टिकाभ्यवहारिकरूपविविधभोगमयेनाऽऽराधनेन मत्प्रीणनमेव क्रियमाणमासीत् । तादृशस्य ते तदुचितस्थानसज्जनसंगमादिलोपेन किमपि कर्तुमपारयता त्वया, 'एकस्थहृदया नूनं राममेवानुपश्यति' इति न्यायेन, 'अदूष्यं स्थानमान्तरम्' इत्युक्ते स्वान्ते परं मां निधाय मच्चिन्तयैव कालो यापयितुं यत्यते । कालस्तु कुटिलो वर्धते ॥ (34) उद्दामैरिति । त्वया पूर्वं साधुगोष्ठीशिक्षया भक्तिपूर्वकं भगवद्विषये भजने क्रियमाणे बहवः त्वन्मुखाम्भोजनिष्यन्दमानगीतिश्रवणपूर्वकं स्वमुखसरसिजैरनुगीतवन्तः प्रीताः प्रीणयन्तश्चाऽऽसन् । तदा च अहंकाररूपो गन्धवाहः तव कुचकलशवत् सारस्तन्यनिधिभूतयोः भगवद्विषयकसंगीतसाहित्ययोः यथावत्संपन्नज्ञानकर्मणोर्वा उद्दामैरूष्मभिः तेजोविशेषैर्निर्जित आसीत् । संप्रति त्वयि दूरं गते सोऽहंकारः छिद्रं लब्ध्वा, "यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया" इत्युक्तरीत्या किंचिच्छिद्रलाभक्षण एव सर्वविक्रियाहेतुसमापत्त्या प्राप्ताभिवृद्धिः, कुन्दानां=मोक्षभूमिप्रदतया मुकुन्दत्वेन प्रसिद्धभगवदभिप्रायप्रतिपक्षितया संसारभूमिमेव सर्वेभ्यो दातुं प्रवृत्तानां देवादीनामामोदैः दिशः सर्वाः सुरभयन् सर्वदिक्-समावर्जनप्रवृत्त आसीत् । तेन हन्त! अहं अहंपदार्थरूपजीववर्गः अहंकारममकारोच्छ्रायपरवशः प्राक् साधुस्थितोऽपि संप्रति दैन्यं शोच्यतां संप्राप्तो वर्तते । न केवलं ते, त्वया सह भजनप्रवृत्ता अपि विकासविहीनमुखाम्बुजाः अहंकारपरीता एव लक्ष्यन्ते ॥ (35) माध्वीति । रामः । रमयतीति जीवान् आश्रितान् आत्मप्रदानेनाऽऽनन्दयतीति रामो भगवान् सीतायाः जीवस्य पार्श्वे वसन्तम् देहात्मभ्रमरूपम् उत्कृष्टवस्तुषु निकर्षबुद्धिमूलगर्वापरपर्यायञ्चाहङ्कारं दृष्ट्वा, 'न भवतु भवान्' इत्यवोचत् । अहंकारस्य कार्यं पूर्वार्धेनोच्यते । विरहिण्याः =जीवं विहाय स्थातुमर्हायाः अभोग्यायाः वनितायाः मूलप्रकृत्याः आस्वादे लुब्धैः । देहात्मभ्रमादिहि नरकादिभीत्यभावात् विषयास्वादेषु निषिद्धेष्वपि प्रवर्तयति । कुसुमधनुषश्चित्रपुंखैः । प्रणवाख्यधनुःप्रतिकूलं कुसुमं धनुः । कुत्सितानि सर्वाणि सुमानि । गन्धमूलमिन्द्रियाणामावर्जनात् । तादृशधनुर्धरस्य कामस्य संबन्धिनः चित्रपुंखाः = निषिद्धव्यापाराः माध्वीदिग्धाः आपाततोऽनुकूलतया भासमानाः दुःखोदर्काः । पुंखशब्दः कर्तर्याख्य-शरमूलप्रदेशवाचकः । मूलप्रदेशस्य चित्रत्वमतीव बाधकत्वम् । तेन पश्चात् दुःखप्रदत्वसूचनम् ।

तादृशैर्व्यापारैः **दिगन्तान्** दूरस्थितानप्याकर्पन्तमहंकारम्, **न भवतु भवान्**-त्वं नष्टो भवेदुक्तवान्। नाशकमुच्यते **अनमितधनुर्मौलिना संनतेनेति**। अकारवाच्येन स्वेन रक्षकेण **नमितं** जीवायत्तीकृतं यत् धनुः प्रणवाख्यम्, तस्य मौलिः अन्तिमवर्णः मकारः तेन संनतेन = यथावदर्थपरिज्ञानात् वशीभूतेन अणुत्व-ज्ञानानन्दस्वरूपत्व-सर्वगोचरज्ञानाश्रयत्व-श्रीपतिशेषत्वरूपाकारविशिष्टो जीव इत्यर्थबोधकेन। मकारार्थं यथावद् ज्ञापयित्वा भगवान् अहंकारं निवर्तयतीत्युक्तं भवति॥ श्रीराममिश्रः अन्तेवसन्तं श्रीयामुनाचार्यं **चित्रपुंखैः** सिद्धान्तस्थापकैस्तर्कशरैरमोघैः सर्वदिग्विजयिनं वशीकर्तुं प्रवृत्तः स्वयमनमितधनुः= प्रणवतदर्थोपदेशं पूर्वमकृत्वा, **संनतेन मौलिना** = विधेयभूतकिञ्चिद्ब्राह्मणवत् नटित्वा कतिचिद् दिनानि शाकं प्रदाय स्वायत्तीकृत्य, **सीतापार्श्वे न भवतु भवान्**—राज्याधिकृतिमुपेक्ष्य सन्न्यासी भवेत्युपादिक्षदित्यप्यर्थो ध्वन्यते॥

(36) **पार्श्वे** इति। **परभृतकुलैः** यथावस्थितप्रणवार्थोपदेशे सत्यपि परेण महामोहेन विरोधिसार्वभौमेन भृतानां कामक्रोधलोभादीनां कुलैर्मुक्तान् कोलाहलान् बिभ्रताम्, **मल्लीभिः** मल्लीसदृशीभिः मल्लतुल्याभिर्वा स्त्रीभिरधःपातनात् रेणुभिराच्छादितगात्राणां श्रीपरिभूतानां मन्दंमन्दं चोरवत् बहिरागच्छताम्, **अध्वराणाम्** उपर्युपरि श्रमप्रदानां भोगानां पटलीभिरापादिताः याः **शृंखलाः** बन्धकपदार्थाः तद्व्यापानां **मल-यम-रुतां** मलपैरकरावविशिष्टानां दुष्टानां **मार्गे** = तैर्गते मार्गे गमनार्थं स्थितः **अहं** = स्वभावतश्शुद्धोऽहमर्थः **लक्ष्मणेन** भगवच्छेषत्वरूपलक्षणानुरूपकैंकर्यलक्ष्मीसमृद्धेन लक्ष्मण-श्रीलक्ष्मणार्यतुल्येन महात्मना **भीतेन** जीवानां निरयपातनिध्यानतः कारुण्यवश्यतया प्राप्तभयेन हंसवत् विवेकिना **शुद्धेन अहम्** अहमर्थो जीवः सर्वो वारितः। असत्संघप्रवेशान्निवार्यत इति। (37) **मन्द** इति। **मन्दः** वेदान्ताध्ययनजन्यज्ञानशून्यः। **जनकः** पित्रादिः वंशपुरुषः। **योगीश्वरः** मन्त्राद्युपदेष्टा गुरुः। **सुतनुः** तापादिसंस्कारसंस्कृतः। **रक्ताशोकः** आश्रितानुरागयुक्ताशोकत्वापहतपाप्मत्वादिगुणविशिष्टभगवद्विग्रहः। **करञ्जाः** शिष्यस्य हस्तपादादिवदनुकूलाः जनाः। एतदुक्तं भवति-हे तापसंस्कृततनो! साधो! तव करञ्जाः = सखायः पुरुषाः मत्सविधे भगवदर्चाविग्रहे आश्रितानुरागादिकल्याणगुण-शोकादिहेयप्रत्यनीकत्वरूपोभयलिङ्गविशिष्टस्वरूपव्यञ्जके जाज्वल्यमाने तत्राचनाय पुष्पाण्यानीय समर्पयन्तः, त्वयाऽपि पूर्वं पञ्चसंस्कारकाले तथा कृतत्वात् तां **त्वत्परिणयदशां** भगवत्संबन्धप्राप्तिदशां स्मारयन्तः तव मनसः खेदं मन्मनसि वर्तयामासुः। मया सर्वदा चिन्त्यमानमकार्षुः। तव खेदश्चेदृशो मया गृहीतः-हन्ताहं **मन्दः** संस्कृतत्वेऽपि समुचितग्रन्थानामध्ययनाभावात् अधीतांशविस्मरणाच्च ज्ञानशून्यः अनुष्ठानोत्साहरहितश्च। सद्वंशे उत्पन्नोऽहं ममाभिवृद्धौ दत्तदृष्टिं मे जनकं प्रति किं वक्ष्यामि। स च योगीश्वरः मे गुरुः किमेवं वृथा कालं नयसीति वक्ष्यति चेत्, किं कुर्यामिति। एवं खलु ते खेदः; इतस्ते खेदनिवृत्तिर्जातेति मन्यतामिति। (38) **चेत** इति। **चपला** कान्ता। **हेम** कनकम्। **धीरोदात्तस्तनितजलदः** गम्भीरोदारस्वरपूर्वकामृतवर्षी गुरुः। **वाताः** नानाश्रीसूक्त्युपन्यासकाः। **कुटजकुसुमानि** श्रीसूक्तयः। **शैलशृंगम्** सारतमं **मन्त्रत्रयादि** परतत्त्वहितपुरुषार्थत्रयादि वा।

रक्षांसि "रागद्वेषमदादिकैरिह महारक्षोभिः" इत्युक्तानि । **दयिता** समीचीनबुद्धिः । **मयूरः** अन्तेवासी । **क्षीरोदाचरन्तनितजलदतुल्यरत्नगुरुसविधे शैलशृंगे** मन्नलयादौ व्यासवाल्मीकिप्रभृतिवातानीतस्मृतीतिहासपुराणदिव्यवचनवासनावासिततया स्वीकृते सति रागद्वेषादिराक्षसाक्षोभितशुद्धबुद्धिसंश्लिष्टस्सन् अन्तेवासी, "कान्तासु कनकेषु चानासक्तः साक्षात् भर्गो नराकृतिः" इति प्रशंसितरीत्या **चपलया** कान्तया हेम्ना कनकेन च यः कोणाभिघातः तं विसृज्य, (ल्यब्लोपे पञ्चमी।) अपेक्षितामृतलाभनिश्चयात् ताण्डवे प्रवृत्त आसीत् खलु पूर्वम् । तादृशः शिष्यः, पुरा रावणेन रक्षसा कैलासे चाल्यमाने भीतायां पार्वत्यां रुद्रे च स्वपादाङ्गुष्ठेन कैलासमवष्टभ्य रावणहस्तं शैलाधोलग्नं मर्दितवति, तस्मिंश्चासह्यवेदनया रुदितवति, रक्षःपीडारहितया तया दयितया कृतेनाऽऽश्लेषेण धन्यः सन् जलदतुल्यं भगवन्तं प्रति तत्प्रीणनं ताण्डवं स्ववृत्तिं वर्तितवान् मयूरतुल्यो महादेवो यः, तत्तुल्यो मया भावितः न मे चेतस्त्यजति । सर्वदा तादृशशिष्यक्षेमैकचित्तोऽहम् । (39) **शैलेति** । द्यौः पिता, पृथिवी मातेति वैदिकी प्रसिद्धिः । द्युलोकः स्वगतानि जीवबीजानि मेघमूलवर्षद्वारेण पृथिव्यां पातयति । सा बीजानि तानि उप्तानि समुचितदेहोपचयमूलं पुष्णाति । पञ्चाग्निविद्योदिता जीवगतागतविधा इहानुसंधेया । एतदनुसंधानेन अत्र गुरुः, भगवान् वा ब्रवीति—, 'कादम्बिनी सगर्जितं वर्षति । पृथिवी **च** शैलगुहादिद्वारा प्रतिध्वनति । ग्रीष्मेऽभिवृद्धं तापं बहिराविर्भावयति च । बाष्परूपश्चोष्मा तदाऽनुभूयते । वस्तुतः किमिदं सर्वमिति चेत्— जीवेषु भूमौ उत्पन्नेषु **सदनानां** मम **अनानां** प्राणभूतानां तेषां जीवानामुन्मादं **प्रकृतिलोलतां**=मोहमवेक्ष्य पर्याकुलं मां पश्यन् द्युलोकः पिता कादम्बिनीमुखेन एतज्जीवजातरक्षणं भवतैव कार्यमिति आक्रन्दति । माता च पृथ्वी तदपेक्षयाऽप्यधिकं तथा प्रतिध्वनिच्छलेन विलपन्ती बाष्पपूरितनयना, स्वप्रजाक्षेममपि प्रार्थयते । तदिदं विमृश्य मातापित्रोराशयं विदित्वा स्वोज्जीवनमेव तदिष्टमिति निश्चित्य तत्त्वाधिगममूलं निःश्रेयसलब्धये निपुणं यतितव्यम्' इति। (40) **देहेति**। अत्र पाञ्चभौतिकदेहेन्द्रियवैलक्षण्यं जीवात्मन उच्यते । देहे विद्यमानं स्पर्शनेन्द्रियैकवेद्यं स्पर्शाधारं भागं **मलयपवने** नानाविधमलास्पदवायोर्भागम् । **दृष्टी**ति तेजोंशोपलक्षणम् । उष्णांशं **इन्दौ** चन्द्रादितेजसोंशम्, अभिन्नपर्यङ्कस्य अविशेषेणेतरभूताधारतया स्थितं देहपार्थिवांशं भूरूपभूतभागम्, **वितानस्य विततिं** इतरभूतांशानां रोगादिवशात् क्षयेऽपि अक्षीणतया देहे व्याप्तमंशं **वियति** आकाशाख्यभूतीयम्, परिशेषात् **धामैकत्वं जगती**ति जलांश उच्यते । जलं हि **जगत्**–द्रवत्वात् गच्छदेव स्यन्दमानमेवास्तीति । तत्र **धाम्नः** देहस्य **एकत्वम्** एकमंशञ्च यद्वा **धामैकत्वं** प्राणाधारभूतबाह्यजलेन सह, **जगति** नाडीस्यन्दिलोहितादिरूपदेहभागस्यैकत्वञ्चेत्यर्थः । सर्वमिदं **पश्यन्नि**त्यन्वयः । एवं देहस्य पाञ्चभौतिकत्वात् नात्मत्वमिति भावः । एवमत्र स्पर्शनेन्द्रियस्य आप्यायकवायुप्रचुरत्वं चक्षुष आलोकोपस्कृतत्वं **धामैकत्वं जगति** रसमये रसनेन्द्रिये जलाप्यायितत्वम्, **भुवि चाभिन्नपर्यंकयोगं** घ्राणेन्द्रिये स्वाभिन्नेनाऽऽधारभूतेन भूम्याख्येन भूतेन योगम्, **वितानस्य** सर्वत्र व्यापनशीलस्य शब्दस्य ग्राहकतया श्री**वितान**शब्दवाच्यस्य श्रोत्रेन्द्रियस्य **वियति** आकाशे अन्वयञ्च **पश्यन्नि**त्यर्थे इन्द्रियवैलक्षण्यविवक्षा। अत एव **दूरीभूतं** सर्वेतद्विलक्षणं **जीवं निर्दिशामि** ।

शुद्धजीवस्वरूपे मे भोग्यताबुद्धिरधिकेत्यर्थः। तत्स्वरूपमपि ज्ञातव्यमिति भावः। एवं सर्वशास्त्रगम्यं जीवस्य देहाद्यतिरेकमुक्त्वा मुख्यशास्त्रवेद्यांशं मुख्याचार्यतो वेद्यमाह। (41) प्राप्तैरिति। हे सीते! जीव! शरत् श्रीमहादेवी स्वयंप्रसन्ना सर्वप्रसादनप्रवृत्ता तव नयनयोः चक्षुर्भूतयोः श्रुतिस्मृत्योः सख्यं मैत्रीं प्राप्तैः प्रबुद्धैः व्यक्तं तत्त्वहितपुरुषार्थप्रकाशकैः पद्मकोशैः श्रीगीतापाञ्चरात्रदिव्यप्रबन्धादिभिः समये=प्राचीने शुद्धे सिद्धान्ते नियतं व्यवस्थितं नः जीवसृष्टिप्रभृतिसर्वकार्यव्यग्राणामस्माकं संनाहं परपक्षप्रतिक्षेपपूर्वक-यथावस्थितार्थस्थापनसमुद्योगं साधु संधुक्षयन्ती, परमतनिरसनार्थप्रवृत्तसेनासंचारक्षमां वैदिकतान्त्रिक सरणिं निष्पंकां दर्शयन्ती शुभाशा जीवशुभविषयकाशापूर्णा जीवस्य ते समीपमस्मान् प्रापयितुकामा त्वरयति। भगवदनुग्रहलाभहेतुभूतं श्रीप्रसादम् 'अस्तु ते' इत्येवंरूपमिदानीं प्राप्तोऽसि इत्युक्तं भवति। (42) तातेति। हे गुणवति। संप्रति सत्त्वरजस्तमोगुणवशीभूय स्थितजीवव्यक्ते! तातादेशात् तातस्य जगत्स्रष्टुर्भगवत आज्ञाम्, 'त्यागेनैके अमृतत्वमानशुः', 'मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा' इत्यादिरूपामनुरुध्य स्वते प्राकृतगुणे भगवत्येव वा न्यस्तराज्याभिषेकं यथा तथा सर्वकर्तृत्वादिन्यास-पूर्वकं या एका निरसमा नित्यमुक्तरूपा जीवव्यक्तिः। अवनमिति पदच्छेदः, न तु वनमिति। माम् अवनं रक्षकं प्राप्यप्रापकभूतमेव, राजधानीं विहाय ऐश्वर्यादिफलं स्वातन्त्र्यगर्भं परित्यज्य अनुगता निरन्तरं प्राप्ता, तामेव त्वाम् तादृशव्यक्त्यविशिष्टां तथाविधसदृशाप्रत्यर्हां त्वां मदीयबाहुमध्यभूतवक्षो-भूषणकौस्तुभनिर्विशेषां दूरे संसारमण्डले मदनुभवं विना नानायातनावेदनार्हतया त्यक्तवतो मे जीवितं त्वत्सुखप्रापणसमयः क इति चिन्तया दूयमानमेवास्ति। अनेन जीवस्य स्वरूपं यथावस्थितमुपदर्शितं भवति। (43) पयोधिपरिवृता लंका संसारमध्यस्थदेहः। संसारपयोधिलंघनञ्च सम्यक् तदुपायनिष्पादन एव। तन्निष्पत्तिः कथमित्यत्र भगवदनुग्रहः साधयिष्यतीत्याह सेतुमिति। अचलैः। काम्यानि कर्माणि कामनिष्पत्त्युत्तरक्षणे क्षीयन्ते। अतश्चलानि। न ह्यध्रुवैः प्राप्यते ध्रुवं तत्। अतः ध्रुवैः भगवत्प्रीत्यर्थैः अचलभूतैः निष्कामैः कर्मभिः अहरहरनुवर्तमानैः अभ्यासाधेयातिशयत्वादचलैः सेतुं भक्तियोगं बद्ध्वा, 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इत्युक्तरीत्या संपाद्य, सायकैर्वा आनुकूल्य संकल्पादिभिरङ्गैर्वा सेतुं प्रपत्तिरूपं संपाद्य, सञ्चितकर्मात्ययस्यावसरे जाते लंकां वानराणां करे स्रजमिव कृत्वा देहमपि भोगविनाश्यप्रारब्धावसाने शिथिलीकृत्य लक्ष्मणः भगवत्संकल्पांशः कर्णे शीधुं रचयिता भगवद्धर्मश्रवणाद्येकतानतां ते संपादयिष्यति। (44) अथ श्रीवैकुण्ठं प्राप्तस्य भोगसाम्यमुच्यते रक्ष इति। रक्षसः मनसः तन्मौलीनां दशानामिन्द्रियाणाञ्चाधारभूतस्य स्ववकस्य पाञ्चभौतिकसूक्ष्मशरीरस्यापि लवनात् प्रकृतिसंबन्धरूपे वैरबन्धे विमुक्ते विरजानदीतीरस्थितिकाले त्यक्ते, गगनमार्गेण, "तां मनसाऽत्येति" इत्युक्तरीत्या पुष्पकेण सर्ववस्तुग्रहणसमर्थेन धर्मभूतज्ञानेन उर्वीं अतिमहतीं श्रीवैकुण्ठभूमिं गत्वा। चकारेण तत्र गन्तव्यजनपद-नगर-विमान-मण्टपपर्यन्तसमुच्चयः। ब्राह्मरूपाविर्भावसमुच्चयश्च। सपदि भवतां त्वदागमनात् प्रागेवाद्यापि वर्तमानानां नित्यसूरीणां यत् आधिराज्यं किंकैश्वर्यम्, तत्राभिषेकात् तव विषये कृतात् आवां सिद्धारम्भौ अनादिकाल-

प्रवृत्तमोक्षणारम्भमहाफलप्राप्त्या एतावदननुभूतान् अनुभाव्यतयोद्दिष्टान्, त्वदपेक्षया मया आदित एवोद्दिष्टान् भोगान् सर्वान् संप्राप्स्यावः। इतो भोगसाम्यम्। (45) प्रथमतो यथावस्थितश्रवणवेलायां जीवस्य भगवति जातां श्रद्धामेतावत्फलमूलभूतां स्मारयति **चित्ते** इति। **जनस्थाने जनः** जन्म। जन्मभूमौ संसारभुवि प्रकृतिमण्डले आस्तिकनास्तिकव्यूहविहिते युद्धे **खरादीन्** क्रूररागद्वेषादीन्, बाह्य-कुदृष्टिकल्पितान् विपर्ययांश्च राक्षसान् पारयित्वा त्वन्मनसि गाढं निविष्टं मां त्वं ज्ञानकर्मरूपस्तनकलश-श्लेषेणोपचर्यं हर्षपरवशः स्वरनेत्राङ्गविक्रियालब्धसौन्दर्यः स्तुत्यादिपुरस्सरं गाढं मां प्रतिपदं तत्त्वादि-विषयतत्संशयापायकालेषु आदरेणाऽऽश्लिष्टवानसि खलु। तत् इदानीं चित्ते कृत्वा तत् फलमिदमिति मन्यस्व। अतः प्रारम्भे यथावत् श्रद्धाभक्तिभरितत्वमावश्यकम्। (46) ननु यथावद्ज्ञानसंपन्नस्य सर्वथा विषयविरक्तस्य भयङ्करेन्द्रियरूपयमकिङ्करपारवश्येन सांसारिकक्षुद्रभोगात्मकयमयातनागर्तपातो न युक्तः। अतोऽद्यैव मे मोक्षणं साम्प्रतं मन्ये इत्यत्राह **शय्या** इति। सुख एव मग्नानामपि दुःखं मध्ये यदि सह्यम्; एतावत् दुःखमेवानुभूतवतस्ते इतोपि कञ्चित् कालं तदनुवृत्तिः किं न क्षन्तव्या। प्रारब्धकर्माणि भोगेन क्षपयित्वा पदं प्राप्नुयादिति व्यवस्था हि विरक्तविद्वन्मूलं विशिष्य लोकानां शिक्षणविधानाय मया कल्पिता। प्रपत्तिमुपायत्वेन गृह्णतामपि आर्तप्रपत्तिमहं नातीव रोचये। अन्ततो देहावसान-पर्यन्तं संसारस्थितिमपि यदि न सहेरन्, ईदृशमहाजनमूलसंपाद्या लोकशिक्षा कथं संपद्येत। प्रत्युत तत्त्वज्ञानिभिः ज्ञानोत्पत्तिक्षण एव आत्मनो देहाद्वियोजने विधीयमाने ज्ञानस्य मरणहेतुत्वमेव मन्यमानाः लोकाः न वेदान्तगन्धघ्रातिमपि सहेरन् इति जगत्सृष्टिप्रयासो मे मोघ एव स्यात्। अतः परेषां क्षेममुद्दिश्य स्वयमीषद्दुःखसहनमेव युक्तम्। विश्वस्य **पत्युश्छन्दमिमं** विचिन्त्य पातिव्रत्यभूषितस्त्वं सर्वलोकोज्जीवनहेतुतया मम जीवितालम्बनभूत**मात्मानं** तव देहं त्वत्स्वरूपञ्च यथावत् रक्ष। तदेवं सर्व-मुपदिष्टम्, यावदुपदेष्टव्यम्॥ **आध्यात्मिकसारनिरूपणं पूर्णम्**॥

(107) **अप्येतत् ते मनसि निहितं साह्यमव्याजबन्धो(!)**
**प्रत्याख्यातुं प्रभवति न खल्वानृशंस्यं त्वदीयम्।**
**प्रायश्चैवं परिणतगुणां नैषधे वीक्ष्य वार्ताम्**
**आर्तत्राणं व्रतमिति विदुर्हंस शुद्धात्मनां वा॥ ४७॥**

उक्तः संदेशो धृतः सन् यथावत् प्रियायै वक्तव्य इति हंसं प्रार्थयते **अपीति**। **अपिशब्दः** प्रश्ने। हे हंस! **एतत्** मदीयं सन्देशरूपं वाङ्मयं **ते** विवेकिनस्तव **मनसि अपि निहितम्**-कच्चित् सम्यक् निक्षिप्तम्। अथ प्रियायै कथनीयमित्याह **साह्यमिति**। **अव्याजबन्धो** स्वप्रयोजनरूपव्याज-निरपेक्षमेव बन्धुभूत! त्वदीयम् **आनृशंस्यं** परोपकारित्वरूपो गुणः। **नृशंसः** घातुकः; तद्विपरीतः अनृशंसः=परहितकारी; तस्य भावः। गुणोऽयं **साह्यं** मद्विषये कर्तव्यं सहायकृत्यं **प्रत्याख्यातुं** तिरस्कर्तुं न प्रभवति। त्वद्गुणस्तदवश्यं करिष्यतीति विस्रम्भ इत्यर्थः। [मेघादिभिः पूर्वं साह्यमेवं कृतमिति न

दृष्टम् । मेघस्य मध्ये स्वरूपनाशोऽपि प्रायः संभाव्यत इति न विस्रम्भः ।] विस्रम्भे हेतुविशेषमप्याह **प्रागिति** । **प्राक्** नलदमयन्तीमिथोनुरागकाले **परिणतगुणां** दमयन्तीं प्रति संदेशकथनरूपेण **परिणतः** परिणामं प्राप्तः **गुणः** त्वदीय आनृशंस्यगुणः यया, यस्या वा, तां **वार्तां** वृत्तं **नैषधे** नले महाराजे वीक्ष्य। नलोक्तसंदेशश्रवणेन त्वद्गुणस्य दमयन्त्यां परिणामं वीक्ष्येति यावत् । **शुद्धात्मनाम्** । आत्मा च आत्मा च **आत्मानौ** देहः मनश्च । अवदातं धवलं शरीरं निर्मलं सत्त्वप्रचुरं मनश्चेत्युभयवतां **वः** हंसानां सर्वेषां **आर्तानां** क्लेशं वहतां जनानां विषये **त्राणं** तत्कर्मकं रक्षणं **व्रतं** संकल्पपूर्वकमवश्यमनुष्ठीयमानं कर्मेति **विदुः सर्वेऽभिज्ञाः** इति । अत्र त्वन्मनसि निहितमेतत् साह्यमपि (कर्म) त्वदानृशंस्यं (कर्तृ) न प्रत्याख्यातुं प्रभवतीति पूर्वेषां एकवाक्यतया योजना न स्वरसेति परित्यज्य, अव्याजबन्धोस्ते मनसि एतत् साह्यम् अपि निहितम् इति प्रथमपादयोजनां कृत्वा, द्वितीयपादस्य कर्मसापेक्षत्वात् साह्यमिति विपरिणतस्यानुषङ्गः कार्य इत्याहुः । **साह्यमिति** सहायकर्मोच्यते । तदितःपरमेव भविष्यति । तस्यैतत्पदेन ग्रहणं न स्वरसम् । **एतच्छब्दस्योक्तपरामर्शित्वस्वारस्यात्** अपेक्षितत्वाच्च संदेशरूपेण मदुक्तं सर्वं मनसि अपि निहितमिति प्रश्नो युक्तः। यथोक्तं तस्य वक्तव्यतया धार्यत्वात् । अथ साह्यस्य ज्ञापनम् । एवञ्च साह्यमित्यारभ्य वाक्यान्तरम्। तच्च द्वितीयान्तमेवेति नानुषङ्गादिक्लेशः। **एवञ्चाव्याजबन्धुपदस्य** प्रथमवाक्येऽन्वयायोगात् त्वया कर्तव्यं साह्यमित्यर्थे **अव्याजबन्धोरिति** षष्ठ्यन्वयस्वारस्याभावाच्च **त्वदीयमिति** पदसत्त्वाच्च **अव्याजबन्धो** इति संबुद्धिपाठः श्रेयान् । **शुद्धात्मनामित्यत्र** आत्मपदे द्विवचनेन देहमनउभयविवक्षा च युक्ता ॥ ४७ ॥

(108) इत्थं हृद्यैर्जनकतनयां जीवयित्वा वचोभिः
सख्यं पुष्यन् दिनकरकुले दीप्यमानैर्नरेन्द्रैः ।
स्वैरं लोकान् विचर निखिलान् सौम्य ! लक्ष्म्येव विष्णुः
सर्वाकारैस्त्वदनुगुणया सेवितो राजहंस्या ॥ ४८ ॥

उपकरिष्यन्तं हंसमनुगृह्णाति **इत्थमिति** । पूर्वं कश्चित् पक्षी दिनकरवंश्यनरेन्द्रसख्यं सम्यक् प्राप्तो मय्यतीव प्रेमवान् जटायुः जानकीजीवितरक्षणाय प्रवृत्तो हन्त ! नष्टात्मा कथञ्चिन्मया देहान्तरेण सर्वलोकसंचारी कृतः । इतःपरं भवानेव ममेव भविष्यतामपि दिनकरवंश्यानां गौरवपात्रीभवन् संप्रति जानकीजीवितरक्षणेन संदर्शितस्वभावः अनेनैव देहेन आत्मभार्यया सह अनन्तलोकयथेच्छसञ्चारी भविष्यतीत्याशय इह । **इत्थम्** उक्तप्रकारेण **हृद्यैः** तवेव जानक्या अपि हृदयहारिभिः **वचोभिः** सन्देशभूतैः **जनकतनयां** सीतां जीवयित्वा अनेन व्याजेन **दिनकरकुले** सूर्यवंशे **दीप्यमानैः** प्रकाशभाग्भिः **नरेन्द्रैः** मम भ्रातृभिरन्यैश्च भविष्यद्भिः **सख्यं** मित्रतां **पुष्यन्** पुष्णन्, हे **सौम्य** ! शान्तसुन्दरमूर्ते ! **सर्वाकारैः** स्वरूपरूपगुणकर्मभिः **त्वदनुगुणया** तवानुरूपया त्वत्पत्न्या राजहंस्या **सेवितः** सहितः परिचरितः, लक्ष्म्या सेवितो विष्णुरिव (अहमिव) **स्वैरं** यथेच्छं सर्वान् लोकान् **विचर** विशेषेण चर । सर्वत्राप्रतिहतगतिर्विष्णुसाम्यमपि भजस्व ॥ ४८ ॥ (१०८)

(109) सन्दिश्यैवं सह कपिकुलैः सेतुना लङ्घिताब्धिः
पङ्क्तिग्रीवे युधि विनिहते प्राप्य सीतां प्रतीतः ।
राज्यं भूयः स्वयमनुभवन् रक्षितं पादुकाभ्यां
रामः श्रीमान् अतनुत निजां राजधानीं सनाथाम् ॥ ४९ ॥

रामोक्तिरासीत् । संदेशावसरे हंसं प्रति यथोक्तं तथैव सर्वं श्रीरामोऽन्वतिष्ठदिति कविसिंहः स्वयमेवाह संदिश्येति । रामः **एवं** उक्तप्रकारेण **संदिश्य**—संदेशः=रामेण सीतायै कथनीयतया प्रयुक्तवाक्संदर्भः । 'संदेशेन प्रणयमहता', 'संदेशं मे कथय' इत्यादिप्रयोगात् । तत्संबन्धात् तत्पूर्वश्लोकानाम् उत्तरश्लोकसंदर्भस्यैव संदेशपदग्राह्यता । तथा सीतायै वक्तव्यं वाक्यजातं हंसायाऽऽवेद्य तादृशवाङ्मयपूर्वकप्रेरणपर्यन्तस्य संदेशार्थकत्वे तु एवं हंसं वाक्यसंदर्भविदनपूर्वकं प्रेष्येत्यर्थः । **एवमिति** पुनर्गृह्यते । उक्तप्रकारेणैव **कपिकुलैः** चतसृषु दिक्षु विभज्य प्रेषितैः सर्वैर्वानरसंघैस्सह । अस्य **लंघिते**त्यत्रान्वयः । सेतुना कपिकुलसाहाय्येन बद्धेन तीर्णसमुद्रः । **पंक्तिशब्दो** दशत्वसंख्यापरः । पंक्तिच्छन्दसि पादे दशाक्षराणि भवन्ति । पंक्तिसंख्याकग्रीवायुक्ते रावणे **युधि** युद्धे स्वेन **विनिहते** मारिते । पंक्तिपदप्रयोगात्, 'एवमेकशतं छिन्नम्' इत्युक्तरीत्या दशमुखशिरःपंक्तयो बह्वयो लूना इति ज्ञाप्यते । सर्वमिदमनायासनिष्पन्नमिति ज्ञापनाय, रावणवधस्य नात्र प्राधान्यमिति ज्ञापनाय च वाक्यैकदेशतया सप्तम्यन्ततया निर्देशः । सीतां प्राप्य **प्रतीतः** हृष्टः, सर्वलोकप्रसिद्धश्च, सीताविषये पूर्वमेव प्रत्ययसत्त्वेऽपि ब्रह्मादिवचनैः अग्निकृतसमर्पणतश्च सपरिवारतया लब्धविश्वासश्च पादुकाभ्यां रक्षितं राज्यं तन्मुखेनेव **स्वयं** साक्षादेव **भूयः** पुनरनुभवन् **श्रीमान्** विजयश्रिया सह उभयविधश्रीसंपन्नः देवः श्रीमानिति ह्युपक्रान्तम् । **निजां राजधानीमयोध्यां सनाथां** नाथविशिष्टामतनुत । एकादश सहस्राणि वत्सराणां राज्यमपालयदिति ॥ ४९ ॥ (१०९)

(110) विद्याशिल्पप्रगुणमतिना वेङ्कटेशेन क्लृप्तं
चिन्ताशाणोल्लिखितमसकृत् श्रेयसां प्राप्तिहेतुम् ।
सीतारामव्यतिकरसखं हंससंदेशरत्नं
पश्यन्त्वन्तश्श्रवणमनघं चक्षुरुज्जीव्य सन्तः ॥ ५० ॥

॥ इति द्वितीय आश्वासः ॥

॥ इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु हंससंदेशः ॥

अथ कविकाव्यनामादिनिबन्धनम्—**विद्येति** । हंससंदेशं काव्यं रत्नत्वेनेह रूपयति । अतो रत्नस्य काव्यस्य च साम्यान्याह । रत्नं शिल्पविषयसम्यज्ज्ञानवता **क्लृप्तं** सुवर्णे प्रत्युप्तं भवति । तथा अष्टादशविद्यास्थानविषयप्रकाशनरूपशिल्पप्रगुणमतिकृतमिदम् । एवमुपरितनविशेषणान्यपि उभयसाधारणानि । शिल्पिना हि मनसि सांगोपांगं सर्वं धृत्वा अत्यन्तसौष्ठवयुक्तं कर्तव्यम् । तत्र **प्रगुणा**

सर्वतोऽतिशयं प्राप्ता आर्जवं सम्यक् प्राप्ता च मतिर्यस्य तेन वेङ्कटेशेन श्रीवेंकटाद्रिनाथावतारभूतेन कवितार्किकसिंहेन सर्वतन्त्रस्वतन्त्रेण श्रीमद्वेदान्ताचार्येण बलक्षं कल्पितकथारूपं कृतम्। असकृत् बहुकृत्वः चिन्तारूपे शाणे निकषोपले उल्लिखितं तेन तेजिष्ठं कृतम्, तथैवासकृत् श्रेयसां सर्वविधानां शुभानां प्राप्तेर्हेतुम्, सीतारामयोः दिव्यदम्पत्योः व्यतिकरस्य मिथस्संबन्धस्य सखि मित्रभूतम्। तत्प्रतिपादकमिति यावत्। यद्वा तद्व्यतिकरस्य यथा तयोः परेषाञ्च श्रेयोहेतुत्वम्, तथा सर्वश्रेयोहेतुत्वात् तत्साम्यात् तत्सखत्वम्। अथवा सीतरामव्यतिकरशब्दः तदर्थमधिकृत्य कृतं ग्रन्थं श्रीमद्रामायणं प्रसिद्धमाह। तदितिहाससदृशम्। अपि वा सीतारामयोः अध्येतॄणां मनसि व्यतिकरस्य तैः संश्लिष्य वर्तनस्य सहायभूतम्। इदं रत्नेऽपि। बहुविधैश्वर्यप्रदत्वस्येव दिव्यदम्पतिसंनिधानादिसंपत्करत्वस्यापि रत्नविशेषे सत्त्वात्। सीतारामात्मकार्चामयत्वे तु रत्नस्य तत् पूर्णमेव। अनघं सर्वानिष्टनिवर्तकम् शब्दार्थदोषलवलेशेनापि हीनञ्च। हंससंदेशरत्नम् वक्तव्यांशकथनपूर्वकप्रेरणकर्मत्वात् हंसस्य, तत्प्रतिपादकग्रन्थो हंससंदेशः। तद्रूपं रत्नम्। यद्वा संदेशरत्नं तत्तत्कविकृतेषु संदेशेषु श्रेष्ठम्। अस्य हंस इति नाम। यथा मेघसंदेशस्य मेघ इति। "माघे मेघे गतं वयः" इति प्रयोगात्। सन्तः वक्तृवैलक्षण्यवत् विषयवैलक्षण्यस्यापि सद्भावमपेक्षमाणाः परमैकान्तिनोऽपि भावुकाः अन्तश्श्रवणं श्रवणे श्रोत्रे चक्षुः नेत्रम्। श्रवणगतं नेत्रञ्च ज्ञानमेव। यद्वा हंससंदेशस्य रत्नत्वेन रूपणात् रत्नस्य च चक्षुषैव द्रष्टव्यतयाऽत्र श्रवणं चक्षुरित्युच्यते। श्रोत्ररूपं चक्षुरित्यर्थः। अन्तःपदं पृथक्। श्रवणचक्षुः अन्तः अभ्यन्तरे उज्जीव्य इन्द्रियान्तरभागमेतत्काव्यभावदर्शनक्षमं कृत्वा। अन्तः मनसीति वा। अत्यन्तावधानेनेति यावत्। पश्यन्तु—एतत्परिशीलनमेव संदर्शनमिति भावः। एवं संदर्शनं कुर्वतां सर्वश्रेयःप्राप्तिर्भवतीत्युक्तं भवति॥ ५०॥

॥ इति द्वितीय आश्वासः॥

अभिनवदेशिकविरुदो वात्स्यः सच्चक्रवर्तिवंश्य इदम्।
श्रीवीरराघवसुधीः संजीवननाम टिप्पणं व्यधित॥

श्रीकृष्णब्रह्मतन्त्रप्रथितगुरुरसास्वादिनीस्वादकश्री-
कस्तूरीरङ्गनाथाह्वयगुरुविहितां टिप्पणीञ्चावलोक्य।
तत्तत्संक्षिप्तार्थटीकास्थितिमहमविदन्नप्यनेकार्थजातं
ज्ञाप्यं मत्वा त्वकार्षं सपदि कृतिमिमां रक्षतां साधुरंगः॥

श्रीमद्रामायणपरिचयं भूरिमाप्तैस्तदर्थैः
आमूलाग्रं सरसवचनैर्यद् भवेद् सूपबृंहम्।
एतत् संप्रत्यनतिविपुलव्याख्ययाऽऽख्यातिमिकार्थं-
श्लिष्टस्वार्थप्रकटनधिया भूषितं काव्यरत्नम्॥

इति श्रीमदभिनवदेशिक-वात्स्य-श्रीशैलसच्चक्रवर्ति-वीरराघवाचार्यकृतिषु
संजीवनाभिधानं हंससंदेशव्याख्यानम्॥
श्रीमते निगमान्तगुरवे नमः॥ शुभमस्तु॥